पालीं नेत्रकोशाद्बहिर्गत उभयपार्श्वयोः समामनिम्नोन्नतां कृत्वा यथायोगं दोषदूष्याद्यनुरोधात्पक्वं घृतं निमीलितेऽनुन्मीलिते लोचने क्षिपेत् । अथ पाल्या उच्छ्रायमाह—द्व्यङ्गुलोच्चां द्व्यङ्गुलोच्छ्रायवतीम् । तथा दृढां निबिडाम् । यथा स्नेहो न प्रस्रवेदित्यर्थः । कीदृशं सर्पिः ? तप्तेन जलेन प्रकर्षेण विलापितं द्रवीकृतम् ।

नक्तान्ध्यवाततिमिरकृच्छ्रबोधादिके वसाम् ।
आपक्ष्माग्रात्,

रात्र्यान्ध्यादिषु वसां यथास्वौषधसिद्धां तथैव विलापितामावपेत् । कथम् ? आपक्ष्माग्रात् । पक्ष्माग्राणि यावन्निमग्नानि तावत्सर्पिरादिरावपेदिति ।

अथोन्मेषं शनकैस्तस्य कुर्वतः ॥ ६ ॥
मात्रां विगणयेत्तत्र वर्त्मसन्धिसिताऽसिते ।
दृष्टौ च क्रमशो व्याधौ शतं त्रीणि च पञ्च च ॥ ७ ॥
शतानि सप्त चाऽष्टौ च दश मन्थे दशाऽनिले ।
पित्ते षट् स्वस्थवृत्ते च बलासे पञ्च धारयेत् ॥ ८ ॥

अथ घृताद्यावपनादन्तरं शनैःशनैरुन्मीलनं विदधतस्तस्याऽऽतुरस्य मात्राः पूर्वोक्ता विगणयेत् । तत्र तेषु वर्त्मादिके व्याधौ सर्पिषि क्षिप्तं शतसङ्ख्यादीर्मात्रा विगणयेत् क्रमेण । तत्र वर्त्मरोगे मात्राशतम् । सन्धिरोगे त्रीणि शतानि । सितरोगे पञ्च शतानि । असितरोगे सप्त शतानि । दृष्टिरोगेऽष्टौ शतानि धारयेदिति । क्रमशो यथासङ्ख्येन । मन्थाख्ये रोगे दश शतानि । वातरोगे दशैव शतानि । पित्तरोगे षट् शतानि । स्वस्थवृत्ते च षट् शतानि । कफे पञ्च शतानि धारयेत् ।

कृत्वाऽपाङ्गे ततो द्वारं स्नेहं पात्रे तु गालयेत् ।
पिबेच्च धूमं नेक्षेत व्योमं रूपं च भास्वरम् ॥ ९ ॥

यथोक्तमात्राधारणादनन्तरमपाङ्गदेशे पाल्या द्वारं कृत्वा स्नेहं भाजने निक्षिपेत् । ततः सक्तुपिण्ड्याक्षिकोशं प्रमृज्य स्नेहेरितकफोपशान्तये धूमं च पिबेन्न केवलं तर्पणं कुर्यात् । प्रक्षालितनेत्रे त्वेनं मात्रया भोजयेत् । न दिवसे तथा व्योम न पश्येद्भास्वरं रूपं च । उपलक्षणं चेदम् । एवमातपमपि न पश्येत् ।

इत्थं प्रतिदिनं वायौ पित्ते त्वेकान्तरं कफे ।
स्वस्थे च द्व्यन्तरं दद्यादातृप्तेरिति योजयेत् ॥ १० ॥

इत्थमनेन क्रमेण पवने प्रत्यहं तर्पणं दद्यात् । पित्ते पुनरेकान्तरं तर्पणं दद्यात्-कफे स्वस्थे च द्विदिनान्तरं योजयेत् । इत्येवं यावन्नयनस्य तृप्तिः स्यात्तावत्तर्पणं योज्यम् ।

तृप्तस्य किं लक्षणमित्याह—

प्रकाशक्षमता स्वास्थ्यं विशदं लघु लोचनम् ।
तृप्ते विपर्ययोऽतृप्तेऽतितृप्ते श्लेष्मजा रुजः ॥ ११ ॥



प्रकाशक्षमत्वादिकं तृप्तस्य सम्यक्तर्पितस्य लक्षणम् । प्रकाशक्षमता प्रभाभास्वरादिरूपसहत्वम् । अतृप्ते वैपरीत्यं पूर्वनिर्दिष्टम् । अतितृप्ते सति कफोद्भवाः कण्डूपैच्छिल्यादिका रुजः स्युः ।

**स्नेहपीता तनुरिव क्लान्ता दृष्टिर्हि सीदति ।**
**तर्पणानन्तरं तस्माद्दृग्बलाधानकारिणम् ॥ १२ ॥**
**पुटपाकं प्रयुञ्जीत पूर्वोक्तेष्वेव यक्ष्मसु ।**

स्नेहपीता दृष्टिः क्लान्ता तनुरिव यतोऽवसीदति तस्मात्कारणात्तर्पणानन्तरं पुटपाकं प्रयुञ्जीत । कीदृशम् ? दृशोर्बलं दृग्बलं तस्याऽऽधानं प्रबन्धेन वृत्तिस्तत्करोति तं दृग्बलाधानकारिणम् । 'हेतोर्द्वितीया' । दृग्बलाधानकारित्वात् प्रयुञ्जीतेत्यर्थः । पूर्वोक्तेष्वेव तर्पणोक्तेष्वामयेषु ।

**सवाते स्नेहनः श्लेष्मसहिते लेखनो हितः ॥ १३ ॥**
**दृग्दौर्बल्येऽनिले पित्ते रक्ते स्वस्थे प्रसादनः ।**

स च पुटपाको वाते स्नेहनो हितः । कफसहिते मारुते लेखनो हितः । दृष्टिदौर्बल्यादिषु प्रसादनो हितः ।

इदानीमेषां पुटपाकानां कल्पनामाह—

**भूशयप्रसहानूपमेदोमज्जावसाऽऽमिषैः ॥ १४ ॥**
**स्नेहनं पयसा पिष्टैर्जीवनीयैश्च कल्पयेत् ।**

भूशया बिलशया भेकगोधाद्याः । प्रसहा गोखरादयः । अनूपा महामृगवारिचरवारिशयाः । तेषां मेदोमज्जावसाऽऽमिषाणि, तैस्तथा जीवनीयैर्जीवन्तीकाकोल्यादिभिश्च क्षीरपिष्टैः स्नेहनं पुटपाकं कल्पयेद्वैद्यः ।

**मृगपक्षियकृन्मांसमुक्तायस्ताम्रसैन्धवैः ॥ १५ ॥**
**स्रोतोजशङ्खफेनाऽऽलैर्लेखनं मस्तुकल्पितैः ।**

मृगा हरिणाद्याः, पक्षिणां विष्किरप्रतुदास्तेषां यकृन्मांसानि तैः । तथा मुक्तादिभिर्मस्तुकल्पितैर्लेखनं पुटपाकं कल्पयेद्वैद्यः । प्रसहानां मृगपक्षिणां स्नेहने पुटपाक उपयुक्तत्वाज्जाङ्गला एव मृगपक्षिणोऽत्र ग्राह्याः ।

**मृगपक्षियकृन्मज्जावसाऽन्त्रहृदयाऽऽमिषैः ॥ १६ ॥**
**मधुरैः सघृतैः स्तन्यक्षीरपिष्टैः प्रसादनम् ।**

मृगपक्ष्यादीनां यकृन्मज्जावसाऽन्त्रहृदयाऽऽमिषाणि, तैः । तथा मधुरैर्मधुरवर्गोक्तैर्घृतान्वितैः स्तन्यक्षीरपिष्टैः प्रसादनं पुटपाकं कल्पयेद्वैद्यः । अत्र स्तन्यं स्त्रिया एव ।

अधुना पुटपाकस्य कल्पनामाह—

**बिल्वमात्रं पृथक्पिण्डं मांसभेषजकल्कयोः ॥ १७ ॥**
**उरुबूकवटाऽम्भोजपत्रैः स्नेहादिषु क्रमात् ।**



**वेष्टयित्वा मृदा लिप्तं धवधन्वनगोमयैः ॥ १८ ॥**
**पचेत्प्रदीप्तैरग्न्याभं पक्कं निष्पीड्य तद्रसम्।**
**नेत्रे तर्पणवद्युञ्ज्यात्,**

मांसं च भेषजकल्कश्च, तयोः पृथक्, बिल्वफलमात्रं पिण्डमेरण्डादिपत्रैर्वेष्टयित्वा कृष्णमृत्तिकालिप्तं वृद्धवैद्यव्यवहारात्, द्व्यङ्गुलोत्सेधं मृत्तिकालेपं कृत्वा क्रमेण धवादीन्धनैः प्रदीप्तैः पचेत्। तत्र स्नेहने पुटपाक एरण्डपत्रैर्वेष्टनं धवकाष्ठैः प्रदीपनम्। लेखने वटपत्रैर्वेष्टनं धन्वनकाष्ठैः प्रदीपनम्। प्रसादने जलजपत्रैर्वेष्टनं गोमयेन्धनेन प्रदीपनमिति क्रमार्थः। अग्न्याभमिति—अग्निवर्णं सत्, पक्कं ज्ञात्वाऽपनीतपत्रं विधाय वाससा निष्पीड्य तद्रसं नयने तर्पणमिव युञ्ज्यात्।

**शतं द्वे त्रीणि धारयेत् ॥ १९ ॥**
**लेखनस्नेहनान्त्येषु,**

लेखनादिषु शतादीनि धारयेत्। तत्र लेखने शतं मात्राणां धारयेत्। स्नेहने द्वे शते। अन्त्ये प्रसादने त्रीणि शतानि धारयेत्।

**पूर्वौ कोष्णौ, हिमोऽपरः।**

पूर्वौ स्नेहनलेखनौ कोष्णौ योज्यौ। हिमोऽपरः प्रसादनाख्यः।

**धूमपोऽन्ते तयोरेव,**

तयोराद्ययोः पुटपाकयोरन्ते धूमपः स्यात्। स्नेहेरितकफोपशान्त्यै, न तु प्रसादनान्त इत्येवशब्दार्थः।

**योगास्तत्र च तृप्तिवत् ॥ २० ॥**

तत्र तेषु च पुटपाकेषु योगास्तर्पण इव स्युः। 'तृप्तिवदिति सप्तम्यन्ताद्वतिः'। योगा इति बहुवचननिर्देशात् सम्यग्योगाऽयोगाऽतियोगा गृह्यन्ते।

**तर्पणं पुटपाकं च नस्याऽनर्हे न योजयेत्।**

तर्पणपुटपाकौ नस्याऽयोग्ये न योजयेत्। नस्याऽनर्हाः, 'योजयेन्नतु नावनम्' इत्याद्युक्ताः।

**यावन्त्यहानि युञ्जीत द्विस्ततो हितभाग्भवेत्।**

यावन्मात्राणि दिनानि तर्पणपुटपाकौ कुर्वीत, तावन्त्यहानि ततो द्विगुणानि च दिनानि हितसेवी स्यात्।

**मालतीमल्लिकापुष्पैर्बद्धाक्षो निवसेन्निशि ॥ २१ ॥**

कृततर्पणपुटपाको मालत्यादिपुष्पैर्बद्धाक्षः सन्, विभावरीं वसेत्। मालती सुमनाः। मल्लिका गन्धवार्षिका।

**सर्वात्मना नेत्रबलाय यत्नं कुर्वीत नस्याञ्जनतर्पणाद्यैः।**
**दृष्टिश्च नष्टा विविधं जगच्च तमोमयं जायत एकरूपम् ॥ २२ ॥**

सर्वेण प्रकारेण नेत्रबलाय चक्षुःसामर्थ्याय नस्यादिभिर्यत्नं कुर्यात् । दृष्टिश्चेति चो हेतौ । यतो दृष्टिर्यदि न स्यात्ततो जगद् विविधमपि तमोमयमन्धकाररूपमेकलक्षणं सम्पद्यत इति । 'उपजातिर्वृत्तम् ।'

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां चतुर्विंशोऽध्यायः ॥ २४ ॥



# पञ्चविंशतितमोऽध्यायः ।

अथेदानीं पञ्चविंशाऽध्यायारम्भो यन्त्रप्रविधानप्रदर्शनार्थः । यतो बस्तिनस्याऽञ्जनक्षारादीनि यन्त्राश्रयाण्येवेत्याह—

**अथाऽतो यन्त्रविधिमध्यायं व्याख्यास्यामः ।**

यन्त्रस्य विधिर्यन्त्रविधिः । शेषं पूर्ववत् । अर्शोभगन्दरादिषु विरुजेऽङ्गे नियम्यते शस्त्रक्षाराग्निकर्मेति यन्त्रम् ।

एतदेव स्पष्टयन्नाह—

**नानाविधानां शल्यानां नानादेशप्रबाधिनाम् ।**
**आहर्तुमभ्युपायो यस्तद्यन्त्रं यच्च दर्शने ॥ १ ॥**
**अर्शोभगन्दरादीनां शस्त्रक्षाराऽग्नियोजने ।**
**शेषाङ्गपरिरक्षायां तथा बस्त्यादिकर्मणि ॥ २ ॥**
**घटिकालाबुशृङ्गं च जाम्बवोष्ठादिकानि च ।**

अनेकप्रकाराणि यानि शल्यानि शल्यवेणुपाषाणादिरूपाणि विविधेषु शरीरप्रदेशेषु निविशन्ते तेषामाहरण आकष्टुं योऽभ्युपायस्तद्यन्त्रमुच्यत इति शेषः । तथाऽर्शोभगन्दरनाडीव्रणादीनां शस्त्रादियोजने सति शेषस्य विरुजाङ्गस्य परिरक्षायां रक्षानिमित्तम् । स्वस्थस्याऽङ्गस्य शल्यबाधा निवृत्त्यर्थमित्यर्थः । तथा बस्तिनस्यादिकर्मणि य उपायस्तच्च यन्त्रम् । तथा घटिकादि च यन्त्रं पिचुना रक्ताद्याकर्षणाय च । जाम्बवोष्ठसन्दंशादीनि च यन्त्राणि ।

यन्त्राणां किं रूपं किं कार्यमित्याह—

**अनेकरूपकार्याणि यन्त्राणि विविधान्यतः ॥ ३ ॥**
**विकल्प्य कल्पयेद् बुद्ध्या,**

रूपाणि च कार्याणि च रूपकार्याणि । अनेकानि विचित्राणि रूपकार्याणि येषां तानि नानाप्रकाराणि । तत्र रूपं कङ्कमुखस्वस्तिकाद्याकारत्वम् । कार्यमस्थ्यादिशल्यहरणादिकम् । यतश्चैवं नानाविधत्वं यन्त्राणामतस्तानि बुद्ध्या विकल्प्य कार्यानुरोधात्कल्पयेत् ।

ननु यन्त्राणां दिङ्मात्रेऽप्यनभिज्ञः कथमिव कल्पनां कर्तुं पारयेदित्याह—

**यथास्थूलं तु वक्ष्यते ।**



यानि यानि स्थूलानि यथास्थूलम् । 'यथासादृश्य इत्यव्ययीभावः' । यथा-स्थूलयन्त्रकरणेन व्युत्पन्नमतिः शेषाणामपि यन्त्राणामुत्पादने विकल्पं कर्तुं समर्थो भवत्येवेति भावः ।

अथ यन्त्राण्याह—

**तुल्यानि कङ्कसिंहर्क्षकाकादिमृगपक्षिणाम् ॥ ४ ॥**
**मुखैर्मुखानि यन्त्राणां कुर्यात्तत्संज्ञकानि च ।**
**अष्टादशाङ्गुलायामान्यायसानि च भूरिशः ॥ ५ ॥**
**मसूराकारपर्यन्तैः कण्ठे बद्धानि कीलकैः ।**
**विद्यात्स्वस्तिकयन्त्राणि मूलेऽङ्कुशनतानि च ॥ ६ ॥**
**तैर्दृढैरस्थिसंलग्नशल्याहरणमिष्यते ।**

येन पार्श्वेन शल्यमुद्ध्रियते तद्यन्त्राणां मुखं वेद्यम् । कङ्कादीनां पक्षिमृगादीनां मुखैस्तुल्यानि यन्त्राणां मुखानि कुर्यात् । आदिशब्देन गृध्रहरिणादिपरिग्रहः । तानि तत्संज्ञकानि । च एवार्थे । तानि यन्त्राणि तन्नामान्येव । यथा कङ्कमुखं सिंहमुखमित्यादि । स्वस्तिकाख्यानि यन्त्राणि विद्यात् । कीदृशानि ? अष्टादशाङ्गुलदैर्घ्याणि भूरिशो बाहुल्येनाऽऽयसानि शस्त्रमयानि । दन्तादिमयानामपि क्वचिद्दर्शनाद्भूरिश इत्युक्तम् । तथा कण्ठप्रदेशे कीलकैर्बद्धानि । कीदृशैः कीलकैः ? मसूराकाराः पर्यन्ता येषां तैः । यत्र प्रदेशे यन्त्राणां हस्तग्रहस्तत्र तन्मूलम् । तत्राऽङ्कुशवन्नतानि परिणतानि । तैः कङ्कमुखादिभिरस्थिसंलग्नशल्यस्य काण्डफलादेराहरणमाकर्षणमिष्यते ।

**कीलबद्धविमुक्ताग्रौ सन्दंशौ षोडशाङ्गुलौ ॥ ७ ॥**
**त्वक्सिरास्नायुपिशितलग्नशल्यापकर्षणौ ।**

कीलेन मसूराकारान्तेन बद्धं विमुक्तमग्रं मुखं ययोस्तौ कीलबद्धमुक्ताग्रौ सन्दंशौ भवतः । कीदृशौ ? षोडशाङ्गुलप्रमाणौ । क उपयोग एतयोः स्यादित्याह—त्वगित्यादि । त्वगादीनां द्वन्द्वः । त्वक्सिरास्नायुपिशितलग्नं च तच्छल्यं च तस्याऽपकर्षण आहरणे तावुपयुज्येते ।

**षडङ्गुलोऽन्यो हरणे सूक्ष्मशल्योपपक्ष्मणाम् ॥ ८ ॥**

षोडशाङ्गुलसन्दंशादन्यः सन्दंशः सूक्ष्मशल्यानां नासारोमादीनां हरण आकर्षणे तथोपपक्ष्मणां वर्त्मादिभवानामाहरणे युज्यते ।

**मुचुण्डी सूक्ष्मदन्तर्जुर्मूले रुचकभूषणा ।**
**गम्भीरव्रणमांसानामर्मणः शेषितस्य च ॥ ९ ॥**

स च मुचुण्डीसंज्ञः । किम्भूता मुचुण्डी ? सूक्ष्मा दन्ता यस्याः सा सूक्ष्मदन्ता, तथर्जुरवक्रा, न च सन्दंशवद्वक्रा बद्धा द्विबाहुरित्यर्थः । तथा मूले हस्तग्रहणस्थाने रुचकमङ्गुलीयकरूपं भूषणं यस्याः सा रुचकभूषणा । रुचकपीडनेन



सा कर्म करोतीत्यर्थः। गम्भीरश्चासौ व्रणश्च गम्भीरव्रणस्तस्मिन् मांसानि तस्याधिमांसमेतद्विषय आहरणे। अर्मणश्च शेषितस्य च्छिन्नशेषस्याऽऽहरणे मुचुण्डी।

**द्वे द्वादशाङ्गुले मत्स्यतालवद् ह्येकतालके।**
**तालयन्त्रे स्मृते कर्णनाडीशल्यापहारिणी॥ १०॥**

द्वे तालयन्त्रे भवतः। किम्प्रमाणे ? द्वादशाङ्गुले। संस्थानमाह—मत्स्यतालवन्मीनगलतालवद् द्वितालके, द्वयोः पार्श्वयोर्मत्स्यमुखसदृशमपरमेकतालकमेकपार्श्वे मत्स्यमुखाकारमेवं द्वितीये। ते द्वे तालयन्त्रे स्याताम्। कर्णेत्यादि। कर्णनाडीशल्यमपहरतः कर्णनाडीशल्यापहारिणी।

**नाडीयन्त्राणि सुषिराण्येकानेकमुखानि च।**
**स्रोतोगतानां शल्यानामामयानां च दर्शने॥ ११॥**
**क्रियाणां सुकरत्वाय कुर्यादाचूषणाय च।**
**तद्विस्तारपरीणाहदैर्घ्यं स्रोतोऽनुरोधतः॥ १२॥**

नाडीयन्त्राणि बस्तिनेत्रादिवत् सुषिराणि स्युः। एकं चाऽनेकं चैकानेकं मुखं येषां तानि च कानिचिदेकमुखान्येकद्वाराणि कानिचिदनेकमुखान्यनेकद्वाराणि। एतत्कर्माचष्टे—स्रोत इत्यादि। तानि च कर्णादिस्रोतोगतानां शल्यानां दर्शननिमित्तं विदधीत। तथा कण्ठादिस्रोतोगतानां रोगाणां दर्शने दर्शननिमित्तं विदधीत। तथा क्रियाणां शस्त्रक्षाराग्निप्रक्षालनौषधप्रणिधानादीनां सुकरत्वार्थम्। तथा विषदिग्धाङ्गादीनामाचूषणाय विदधीत। तद्विस्तारेत्यादि। तेषां नाडीयन्त्राणां विस्तारश्च परीणाहश्च दैर्घ्यं च तानि स्रोतोवशाद्भवन्ति। यथाऽनुवासनोत्तरबस्तिनस्यनाडिकादिषु निर्दिष्टम्।

**दशाङ्गुलार्धनाहान्तः कण्ठशल्यावलोकने।**
**नाडी,**

कण्ठे शल्यं कण्ठशल्यम्। कण्ठाभ्यन्तरशल्यावलोकनार्थं दशाङ्गुला नाड्यर्धनाहा पञ्चाङ्गुलपरिणाहा।

**पञ्चमुखाच्छिद्राचतुष्कर्णस्य संग्रहे॥ १३॥**
**वारङ्गस्य द्विकर्णस्य त्रिच्छिद्रा तत्प्रमाणतः।**

पञ्चमुखानि च्छिद्राणि यस्याः सा, चतुष्कर्णस्य वारङ्गस्य सङ्ग्रहे सङ्ग्रहणनिमित्तमिदं यन्त्रम्। चत्वारः कर्णा यस्य वारङ्गस्येति समासः। तत्र शरादिदण्डप्रवेशः शिखाकारः कीलको वारङ्ग उच्यते। द्विकर्णवारङ्गस्य सङ्ग्रहार्थे त्रिच्छिद्रा नाडी स्यात्। त्रीणिच्छिद्राणि यस्याः सा त्रिच्छिद्रा। छिद्रशब्दस्योपलक्षणार्थत्वात्त्रिमुखेत्येतदपि द्रष्टव्यम्। वारङ्गस्य प्रमाणं तत्प्रमाणं तस्माद्वारङ्गप्रमाणस्तदनुसारेण नाडीप्रमाणं ज्ञेयम्।

**वारङ्गकर्णसंस्थानाऽऽनाहदैर्घ्यानुरोधतः॥ १४॥**



नाडीरेवंविधाश्चाऽन्या द्रष्टुं शल्यानि कारयेत् ।

वारङ्गकर्णस्य संस्थानं चाऽऽनाहश्च दैर्घ्यं च तान्येव वारङ्गकर्णसंस्थानाऽऽनाहदैर्घ्याणि तेषामनुरोधस्तस्मादेवंप्रकारा अन्या अपि नाडीः शल्यानि शरीरान्तर्गतानि द्रष्टुं कारयेत् ।

पद्मकर्णिकया मूर्ध्नि सदृशी द्वादशाङ्गुला ॥ १५ ॥
चतुर्थसुषिरा नाड़ी शल्यनिर्घातिनी मता ।

मूर्ध्नि मूर्धभागे पद्मकर्णिकया जलजकर्णिकया सदृशी । कियत्प्रमाणा ? द्वादशाङ्गुला । तथा चतुर्थश्चतुर्भागः सुषिरो यस्याः । अङ्गुलसुषिरेति यावत् । सा नाडी शल्यनिर्घातिनी मता । मुनीनामिति शेषः ।

अर्शोयन्त्रं दर्शयितुमाह—

अर्शसां गोस्तनाकारं यन्त्रकं चतुरङ्गुलम् ॥ १६ ॥
नाहे पञ्चाङ्गुलं पुंसां प्रमदानां षडङ्गुलम् ।
द्विच्छिद्रं दर्शने व्याधेरेकच्छिद्रं तु कर्मणि ॥ १७ ॥
मध्येऽस्य त्र्यङ्गुलं छिद्रमङ्गुष्ठोदरविस्तृतम् ।
अर्धाङ्गुलोच्छ्रितोद्वृत्तकर्णिकं तु तदूर्ध्वतः ॥ १८ ॥

अर्शसां सम्बन्धि यन्त्रकं गोस्तनाकृति चतुरङ्गुलं मानतो दैर्घ्येण स्यात् । यन्त्रकमित्याकारकं स्यात् । नाहे परिणाहे च पञ्चाङ्गुलम् । यत्पञ्चाङ्गुलदीर्घेण सूत्रेण वेष्ट्यते तत्प्रमाणं स्थौल्यमित्यर्थः । पुंसामेव पञ्चाङ्गुलं नाहे स्यात् । स्त्रीणां परिणाहे तु षडङ्गुलं यन्त्रकं स्यात् । स्वभावत एव तासां गुदस्य महत्त्वात् । व्याधेर्दर्शने द्विच्छिद्रमुभयपार्श्वे द्विच्छिद्रं यन्त्रम् । कर्मणि शस्त्रक्षाराद्यवचारणे एकच्छिद्रं यन्त्रकम् । अस्य यन्त्रस्य मध्ये त्र्यङ्गुलं छिद्रमङ्गुष्ठमध्यतुल्यविस्तारं तदूर्ध्वतोऽर्धाङ्गुलोच्छ्रिता उद्वृत्ता कर्णिका यस्य तदेवम् ।

शम्याख्यं तादृगच्छिद्रं यन्त्रमर्शःप्रपीड़नम् ।

शम्याख्यं शमीसंज्ञं तृतीयं यन्त्रकं तादृग् गोस्तनाकारमित्यादिलक्षणलक्षितयन्त्रसदृशं स्यात् । अत्र विशेषमाह—अच्छिद्रमित्यादि । अत्र यन्त्रे छिद्रं न विधेयमित्यर्थः । इदं च यन्त्रमर्शःप्रपीडनं स्यात् ।

सर्वथाऽपनयेदोष्ठं छिद्रादूर्ध्वं भगन्दरे ॥ १९ ॥

सर्वथा भगन्दरे भगन्दरयन्त्रे, ओष्ठमपनयेत् । कुतःप्रभृति ? छिद्रादूर्ध्वम् । उपरिष्टादर्धाङ्गुलमपकर्षेदित्यर्थः । कर्णिका तु कार्यैव ।

घ्राणार्बुदार्शसामेकच्छिद्रा नाड्यङ्गुलद्वया ।
प्रदेशिनीपरीणाहा स्याद्भगन्दरयन्त्रवत् ॥ २० ॥

घ्राणार्बुदे घ्राणार्शसि चैकच्छिद्रा नाडी दैर्घ्येणाङ्गुलद्वयप्रमाणा तथा प्रदेशिनी-

तुल्यः परीणाहो यस्याः सैवम्। सा च भगन्दरयन्त्रतुल्या स्यात्। अपनीतौष्ठेत्यर्थः।

**अङ्गुलित्राणकं दान्तं वार्क्षं वा चतुरङ्गुलम्।**
**द्विच्छिद्रं गोस्तनाकारं तद्वक्त्रविवृतौ सुखम्॥ २१॥**

अङ्गुलित्राणकाख्यं यन्त्रं दन्तमयं काष्ठमयं वा चतुरङ्गुलप्रमाणमर्शसां यन्त्रसदृशं द्विच्छिद्रं गोस्तनाकृति स्यात्। तच्च वक्त्रस्य विवृतौ प्रसारणे। अङ्गुलैर्दन्तेभ्यो रक्षणार्थत्वादङ्गुलित्राणमिति नाम।

**योनिव्रणेक्षणं मध्ये सुषिरं षोडशाङ्गुलम्।**
**मुद्राबद्धं चतुर्भित्तमम्भोजमुकुलाननम्॥ २२॥**

योनिव्रणमीक्षतेऽनेन तद्योनिव्रणेक्षणं यन्त्रकम्। मध्ये मध्यभागे सुषिरम्। तथा दैर्घ्येण षोडशाङ्गुलम्। तथा मुद्रिकयोर्मिकया सञ्चारिण्या बद्धं युक्तम्। तथा चत्वारो भित्ताः पत्राणि यस्य तच्चतुर्भित्तम्। मूले शलाकाक्रमणान्मुखे विकसेत् प्रसरेत्।

**चतुःशलाकमाक्रान्तं मूले तद्विकसेन्मुखे।**
**यन्त्रे नाडीव्रणाभ्यङ्गक्षालनाय षडङ्गुले॥ २३॥**
**बस्तियन्त्राकृती मूले मुखेऽङ्गुष्ठकलायखे।**
**अग्रतोऽकर्णिके मूले निबद्धमृदुचर्मणी॥ २४॥**

यन्त्रे द्वे षडङ्गुले भवतः। किमर्थम्? अभ्यङ्गश्च क्षालनं चाऽभ्यङ्गक्षालने तदर्थमुपयुज्येते। आकरणमाकृत्। 'सम्पदादित्वात् क्विप्'। बस्तियन्त्रस्य आकृती आकारौ ययोस्ते बस्तियन्त्राकृती वृत्तगोपुच्छाकारे। तथा यथासंख्यं मूले मुखेऽङ्गुष्ठकलायखे मूलेऽङ्गुष्ठतुल्यच्छिद्रे मुखे कलायसमच्छिद्रे। अग्रतोऽकर्णिके कर्णिकारहित इति बस्तियन्त्राद्विशेषः। मूले तु, कर्णिके द्वे अपि पुटकयोजनार्हे कार्ये एवेत्यग्रग्रहणम्। मूले मूलदेशे निबद्धं योजितं मृदु चर्म बस्तिपुटकाकारं ययोस्ते निबद्धमृदुचर्मणी।

**द्विद्वारा नलिका पिच्छनलिका वोदकोदरे।**

उदकोदरे जलस्रावणार्थं नलिका द्विद्वारोभयमुखी स्यात्। अथवा पिच्छनलिका मयूरपिच्छजेत्यर्थः।

**धूमबस्त्यादियन्त्राणि निर्दिष्टानि यथायथम्॥ २५॥**

धूमादियन्त्राणि यथायथं यथास्वं धूमपानाद्यध्यायेषूक्तानि।

**त्र्यङ्गुलास्यं भवेच्छृङ्गं चूषणेऽष्टादशाङ्गुलम्।**
**अग्रे सिद्धार्थकच्छिद्रं सुनद्धं चूचुकाकृति॥ २६॥**

शृङ्गं त्र्यङ्गुलमुखं दुष्टवातविषरक्ताम्बुदुष्टस्तन्यादेश्चूषणे चूषणनिमित्तमष्टादशाङ्गुलं स्यात्। 'अष्टादशेति ह्यष्टन इत्यादिनाऽऽकारादेशः'। तथाऽग्रे प्रान्ते सर्षपप्रमाणच्छिद्रम्। यः प्रदेशश्चूषणाय शरीरे योज्यते तदग्रम्। तथा सुष्ठु नद्धं

सम्यग्बद्धम्। चूचुकस्य स्त्रीकुचाग्रस्याऽऽकृतिराकारो यस्य तदेवम्।

**स्याद्द्वादशाङ्गुलोऽलाबुर्नाहे त्वष्टादशाङ्गुलः।**
**चतुस्त्र्यङ्गुलवृत्तास्यो दीप्तोऽन्तः श्लेष्मरक्तहृत्॥ २७॥**

अलाबुस्तुम्बं द्वादशाङ्गुलो दैर्घ्येण स्यात्। परिणाहेऽष्टादशाङ्गुलः। चत्वारि वा त्रीणि वाऽङ्गुलानि यस्य तच्चतुस्त्र्यङ्गुलं तत्तादृशं वृत्तं वर्तुलं मुखं यस्य स एवम्। तथाऽन्तर्मध्ये दीप्तो ज्वलितः पिचुर्भूर्जादिगर्भ इत्यर्थः। स ईदृशो दुष्टकफरक्तहरः स्यात्।

**तद्वद् घटी हिता गुल्मविलयोन्नमने च सा।**

तद्वत्तेनाऽलाबुना तुल्यदैर्घ्यानाहादिस्तुल्यकार्याकारा च घटी स्यात्, सा च गुल्मस्य विलय उन्नमने च हिता न केवलं कफरक्तहृदिति चार्थः।

**शलाकाख्यानि यन्त्राणि नानाकर्माऽऽकृतीनि च॥ २८॥**
**यथायोगप्रमाणानि,**

शलाकासंज्ञानि यन्त्राणि विविधकर्माणि विविधाकराणि यथायोगप्रमाणानि स्युः।

**तेषामेषणकर्मणी।**
**उभे गण्डूपदमुखे,**

तेषां मध्य उभे गण्डूपदतुल्यास्ये एषणकर्मणी।

**स्रोतोभ्यः शल्यहारिणी॥ २९॥**
**मसूरदलवक्त्रे द्वे स्यातामष्टनवाङ्गुले।**

तथा स्रोतोभ्यः शल्यहारिणी शलाकायन्त्रे भवतः। किम्भूते ? मसूरेत्यादि। मसूरदलमिव वक्त्रं ययोस्ते मसूरदलमुखे द्वे शलाके अष्टाङ्गुले नवाङ्गुले वा स्याताम्।

**शङ्कवः षट्,**

शङ्कवः षट् स्युः।

**उभौ तेषां षोडशद्वादशाङ्गुलौ॥ ३०॥**
**व्यूहनेऽहिफणावक्त्रौ,**

तेषां मध्ये द्वौ षोडशाङ्गुलौ द्वादशाङ्गुलौ वा भवतः। व्यूहने व्यूहनकर्मणि सर्पफणामुखौ।

**द्वौ दशद्वादशाङ्गुलौ।**
**चालने शरपुङ्खास्यौ,**

द्वौ शङ्कू दशाङ्गुलौ द्वादशाङ्गुलौ वा भवतः। चालने काण्डवाज इव मुखं ययोस्तौ शरपुङ्खास्यौ भवतः।

**आहार्ये बडिशाकृती॥ ३१॥**

आहार्ये=आकर्षणे बडिशाकारौ।

षट् शङ्कूनाख्याय गर्भशङ्कुमाह—

**नतोऽग्रे शङ्कुना तुल्यो गर्भशङ्कुरिति स्मृतः।**



**अष्टाङ्गुलायतस्तेन मूढगर्भं हरेत् स्त्रियाः ॥ ३२ ॥**

नतोऽग्रेऽग्रतोभागे, तथा शङ्कुना समः, कीलकाकारोऽष्टाङ्गुलदीर्घः, स गर्भ-शङ्कुरिति स्मृतः । मुनिभिरिति शेषः । तेन शङ्कुना मूढगर्भमनिःसरन्तं हरेत् ।

**अश्मर्याहरणे सर्पफणावद्वक्त्रमग्रतः ।**

अश्मर्याकर्षणे सर्पफणावदग्रे वक्त्रं स्यात् । सर्पफणाख्यमेवैतद्यन्त्रम् ।

**शरपुङ्खमुखं दन्तपातनं चतुरङ्गुलम् ॥ ३३ ॥**

शरपुंखमुखाख्यं चतुरङ्गुलं दन्तपातनं स्यात् । अनेन हि दन्ताश्चलन्तः पात्यन्ते कृम्यादिभक्षिता वा ।

**कार्पासविहितोष्णीषाः शलाकाः षट् प्रमार्जने ।**

प्रमार्जने क्षालने क्षारक्लेदादेः षट् शलाकाः स्युः । किम्भूताः ? कार्पासेन विहितमुष्णीषं शिरोवेष्टनमिव यासां तास्तथोक्ताः ।

**पायावासन्नदूरार्थे द्वे दशद्वादशाङ्गुले ॥ ३४ ॥**

पायावासन्नदूरार्थे दशद्वादशाङ्गुले द्वे भवतः । द्वादशाङ्गुला दूरार्थे, आसन्नार्थे दशाङ्गुला इत्यर्थः ।

**द्वे षट्सप्ताङ्गुले घ्राणे, द्वे कर्णेऽष्टनवाङ्गुले ।**

घ्राणे षट्सप्ताङ्गुले द्वे भवतः । आसन्नदूरार्थेऽत्राप्यनुवर्तते । तथैव कर्णेऽष्ट-नवाङ्गुले भवतः ।

**कर्णशोधनमश्वत्थपत्रप्रान्तं स्रुवाननम् ॥ ३५ ॥**

कर्णशोधनाख्यं यन्त्रमश्वत्थपत्रस्येव प्रान्तो यस्य तत्तथा । तथा स्रुवस्ये-वाऽऽननं यस्य तदेवम् ।

**शलाकाजाम्बवोष्ठानां क्षारेऽग्नौ च पृथक् त्रयम् ।**
**युञ्ज्यात् स्थूलाणुदीर्घाणाम्,**

शलाकाश्च जाम्बवोष्ठानि च तेषां पृथक् त्रयं क्षारे क्षारपातनेऽग्निदाहकरणे च युञ्ज्यात् । किम्भूतानां शलाकाजाम्बवोष्ठानाम् ? स्थूलाश्चाऽणवश्च दीर्घाश्च तेषाम् । तत्र शलाकास्तिस्रो जाम्बवोष्ठानि च त्रीणि क्षारे तथा दाहने, एवं द्वाद-शैतानि शलाकाख्यानि यन्त्राणीति ।

**शलाकामन्त्रवर्त्मनि ॥ ३६ ॥**
**मध्योर्ध्ववृत्तदण्डां च मूले चार्धेन्दुसन्निभाम् ।**

अन्त्रवर्त्मन्यन्त्रवृद्धौ शलाकां युञ्ज्यात् । कीदृशीम् ? मध्यादूर्ध्वं वृत्तो दण्डो यस्यास्ताम् । तथा मूले मूलभागेऽर्धेन्दुसन्निभामर्धचन्द्राकाराम् ।

**कोलास्थिदलतुल्यास्या नासार्शोऽर्बुददाहकृत् ॥ ३७ ॥**

बदरास्थिखण्डसमं मुखं यस्याः सा कोलास्थिदलतुल्यास्या सा नासार्शःसु नासार्बुदेषु च दाहं करोति ।



**अष्टाङ्गुला निम्नमुखास्तिस्रः क्षारौषधक्रमे ।**
**कनीनीमध्यमाऽनामीनखमानसमैर्मुखैः ॥ ३८ ॥**

क्षारौषधक्रमे तिस्रः शलाका निम्नमुखा अष्टाङ्गुलाः स्युः । कीदृश्यः ? कनीनी च मध्यमा चाऽनामी च तासां नखास्तेषां प्रमाणं तेन मानेन समैस्तुल्यैर्मुखैरुपलक्षिताः स्युः ।

**स्वंस्वमुक्तानि यन्त्राणि मेढ्रशुद्ध्यञ्जनादिषु ।**

मेढ्रादिषु विषय उत्तरबस्त्यादिषु, स्वं स्वं यथास्वं, यन्त्राणि गदितानि । आदिशब्देन नावनादिपरिग्रहः ।

**अनुयन्त्राण्ययस्कान्तरज्जुवस्त्राश्ममुद्गराः ॥ ३९ ॥**
**वध्रान्त्रजिह्वबालाश्च शाखानखमुखद्विजाः ।**
**कालः पाकः करः पादो भयं हर्षश्च तत्क्रियाः ।**
**उपायवित्प्रविभजेदालोच्य निपुणं धिया ॥ ४० ॥**

अयस्कान्तादीन्येकोनविंशत्यनुयन्त्राणि कल्पयेत्, स्वल्पयन्त्रकार्यकरणात् । तेषां क्रियास्तत्क्रिया निर्घातनादिका, बुद्ध्या निपुणमालोच्य प्रविभजेत् । निर्घातनादिकर्माणि प्रविभज्य युञ्ज्यादित्यर्थः ।

तान्येव यन्त्राणां कर्माण्याह—

**निर्घातनोन्मथनपूरणमार्गशुद्धिसंव्यूहनाहरणबन्धनपीडनानि ।**
**आचूषणोन्नमननामनचालभङ्गव्यावर्तनर्जुकरणानि च यन्त्रकर्म ४१**

निर्घातनादि यन्त्रस्य कर्म । निर्घातनं ताडनं परिपातनम् । उन्मथनमुन्मूलनम् । एवमन्यदपि चिन्त्यम् । चः समुच्चये । तेन प्रक्षालनादीनि समुच्चीयन्ते । 'वसन्ततिलका वृत्तम्' ।

**निवर्तते साध्ववगाहते च ग्राह्यं गृहीत्वोद्धरते च यस्मात् ।**
**यन्त्रेष्वतः कङ्कमुखं प्रधानं स्थानेषु सर्वेष्वधिकारि यच्च ॥ ४२ ॥**

निवर्तनादिभिश्चतुर्भिः कारणैर्यन्त्रेषु मध्ये कङ्कमुखं श्रेष्ठमिति, यस्माच्च सर्वेषु प्रदेशेष्वधिकार्यधिक्रियत इति । 'उपजातिर्वृत्तम्' ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां यन्त्रविध्यध्यायः पञ्चविंशः ॥ २५ ॥

# षड्विंशोऽध्यायः ।

अथेदानीं षड्विंशाऽध्यायारम्भः शस्त्रस्वरूपविज्ञानार्थः ।

**अथाऽतः शस्त्रविधिमध्यायं व्याख्यास्यामः ।**
**षड्विंशतिः सुकर्मारैर्घटितानि यथाविधि ।**





**शस्त्राणि रोमवाहीनि बाहुल्येनाङ्गुलानि षट् ॥ १ ॥**
**सुरूपाणि सुधाराणि सुग्रहाणि च कारयेत्।**
**अकरालानि सुध्मातसुतीक्ष्णावर्तितेऽयसि ॥ २ ॥**
**समाहितमुखाग्राणि नीलाम्भोजच्छवीनि च।**
**नामानुगतरूपाणि सदा सन्निहितानि च ॥ ३ ॥**
**स्वोन्मानार्धचतुर्थांशफलान्येकैकशोऽपि च।**
**प्रायो द्वित्राणि युञ्जीत तानि स्थानविशेषतः ॥ ४ ॥**

बाहुल्येन शस्त्राणि षडङ्गुलानि भवन्ति। तथा षड्विंशतिसङ्ख्यानि। तथा सुकर्मारैः कर्मकुशलैर्नरैर्यथाविधि सम्यङ्निष्पादितानि, तथा रोमवाहीनि लोमशातनसमर्थानि, तथा सुरूपाणि शोभनाऽऽकाराणि। तथा सुधाराणि शोभनधाराणि। तथा सुखेन गृह्यन्ते सुखग्रहाणि च कारयेत्। क? अयसि। कीदृशे? सुष्ठु ध्मातं, सुतीक्ष्णं, तथाऽऽवर्तितं च यदयः तीक्ष्णं, तस्मिन्। कीदृशानि च शस्त्राणि? अकरालानि सुदर्शनानि। समाहितं सुष्ठु कृतं, मुखाग्रं फलं, येषां तानि समाहितमुखाग्राणि। तथा नीलोत्पलद्युतीनि। तथा नामानुगतं रूपं येषां तान्यन्वर्थनामानीत्यर्थः। तथा सर्वकालं संनिहितानि समीपस्थानि। स्वं च तदुन्मानं च स्वोन्मानमात्मीयं प्रमाणं तस्मात्सकाशादर्धं तस्य चतुर्थांशोऽष्टभागोऽङ्गुलषट्कस्य सप्तमांशद्वयसहितं यवदशकं तत्परिमाणं फलं येषां तान्येवम्। अपि चेति समुच्चये। एवंविधानि शस्त्राण्येकैकशः स्थानविशेशाद् द्वित्राणि प्रयुञ्जीत। 'एकैकश इत्येकं बहुव्रीहिवदिति द्वित्वसुब्लोपौ। ततः शस्प्रत्ययः'।

**'मण्डलाग्रं' फले तेषां तर्जन्यन्तर्नखाकृति।**
**लेखने छेदने योज्यं पोथकीशुण्डिकादिषु ॥ ५ ॥**

तेषां शस्त्राणां मध्ये 'मण्डलाग्रं' नाम शस्त्रम्। कीदृशम्? फलोद्देशे तर्जन्या अन्तर्नखस्तर्जन्यन्तर्नखस्तस्येवाऽऽकृतिर्यस्य तदेवम्। क्वैतद्योज्यम्? इत्याह—लेखने छेदने पोथक्यादिषु योज्यम्। आदिशब्देन वर्त्मरोगादयो गृह्यन्ते।

**'वृद्धिपत्रं' क्षुराकारं छेदभेदनपाटने।**
**ऋज्वग्रमुन्नते शोफे गम्भीरे च तदन्यथा ॥ ६ ॥**
**नताग्रं पृष्ठतः,**

'वृद्धिपत्रं' नाम शस्त्रं क्षुराकारं स्यात्। तच्च छेदनादिषु योज्यमिति प्रकृतम्। फलपरिमाणं तूक्तमेव। कीदृक्? ऋजु स्पष्टमग्रं तदृज्वग्रं तदुन्नते शोफे स्यात्। गम्भीरे तु शोफे तद्वृद्धिपत्रमन्यथा। कथमन्यथा? इत्याह—नतेत्यादि। पृष्ठदेशे नतमग्रं यस्य, तन्नताग्रं भवतीति।

**दीर्घह्रस्ववक्त्रे यथाशयम्।**
**'उत्पलाध्यर्धधाराख्ये' छेदने भेदने,**



उत्पलं चाऽध्यर्धधारं च, ते आख्ये ययोस्ते उत्पलाध्यर्धधाराख्ये शस्त्रे, यथाक्रमं दीर्घह्रस्ववक्त्रे भवतः। उत्पलपत्रं दीर्घमुखम्, अध्यर्धधारं तु ह्रस्ववक्त्रमित्यर्थः। तच्छेदने तथा भेदने च योज्यम्।

तथा ॥ ७ ॥

**'सर्पास्यं' घ्राणकर्णार्शश्छेदनेऽर्धाङ्गुलं फले।**

'सर्पवक्त्रं' नाम शस्त्रं नामानुगताकारं घ्राणार्शश्छेदने कर्णार्शश्छेदने च योज्यम्। तथेति समुच्चये। भेदनेऽपि योज्यम्। तच्च फलेऽर्धाङ्गुलं भवति।

**गतेरन्वेषणे श्लक्ष्णा 'गण्डूपदमुखैषिणी' ॥ ८ ॥**

'एषणी' नाम शस्त्रं गतेर्व्रणानामन्वेषणे योज्यम्। कीदृशी ? श्लक्ष्णा कोमलस्पर्शा। तथा गण्डूपदमुखमिव मुखं यस्याः, सा 'गण्डूपदमुखा'।

द्वितीयामेषणीमाह—

**भेदनार्थेऽपरा 'सूचीमुखा' मूलनिविष्टखा।**
**वेतसं व्यधने,**

अपरैषणी भेदनार्थे 'सूचीमुखा' स्यात्। मूले निविष्टं कृतं खं छिद्रं यस्याः सा मूलनिविष्टखा। वेतसं वेतसपत्राकारं शस्त्रं षडङ्गुलं पूर्वोक्तफलं तच्च व्यधने योज्यम्।

**स्राव्ये 'शरार्यास्यं' त्रिकूर्चके ॥ ९ ॥**

शरारिराटिः पक्षिविशेषः। 'शरार्यास्यं' नाम शस्त्रं त्रिकूर्चके च स्राव्ये योज्यम्।

**'कुशाटा' वदने स्राव्ये द्व्यङ्गुले स्यात्तयोः फलम्।**

'कुशाटा' नाम शस्त्रं वदने स्राव्ये योज्यम्। तयोः शरारिकुशाटयोः फलं द्व्यङ्गुलप्रमाणं स्यात्।

**'तद्वदन्तर्मुखं' तस्य फलमध्यर्धमङ्गुलम् ॥ १० ॥**

'अन्तर्मुखं' नाम शस्त्रं तद्वत्कुशाटातुल्यम्। तस्याऽन्तर्मुखस्य फलमध्यर्धमङ्गुलं स्यात्।

**'अर्धचन्द्राननं' चैतत्तथा,**

तथा कुशाटातुल्यं तदपि 'अर्धचन्द्रास्यसंज्ञं' शस्त्रम्। च समुच्चये भिन्नक्रमे।

**ऽध्यर्धाङ्गुलं फले।**

**'व्रीहिवक्त्रं' प्रयोज्यं च तच्छिरोदरयोर्व्यधे ॥ ११ ॥**

'व्रीहिवक्त्र' मप्यध्यर्धाङ्गुलफलं स्यात्। तच्च शिराव्यध उदरव्यधे च योज्यम्।

**पृथुः 'कुठारी' गोदन्तसदृशार्धाङ्गुलानना।**
**तयोर्ध्वदण्डया विध्येदुपर्यस्थ्नां स्थितां सिराम् ॥ १२ ॥**

'कुठारी' नाम शस्त्रं पृथुर्विस्तीर्णसंस्थानदण्डा तथा गोदन्तसदृशमर्धाङ्गुलमाननं

यस्याः सैवम्। तया कुठारिकयोर्ध्वदण्डया सत्या सिरामस्थ्नामुपरि स्थितां विध्येत्।

**'ताम्री शलाका' द्विमुखी मुखे कुरुबकाकृतिः।**
**लिङ्गनाशं तया विध्येत्,**

'ताम्रमयी शलाका' द्विमुखा स्यात्। सा च मुखे कुरुबकाकृतिः=रक्तसहचर-पुष्पमुकुलाकारा। तया शलाकया लिङ्गनाशं कफोत्थपटलसञ्ज्ञं विध्येत्।

**कुर्या 'दङ्गुलिशस्त्रकम्' ॥ १३ ॥**

**मुद्रिकानिर्गतमुखं फले त्वर्धाङ्गुलायतम्।**
**योगतो वृद्धिपत्रेण मण्डलाग्रेण वा समम् ॥ १४ ॥**
**तत्प्रदेशिन्यग्रपर्वप्रमाणार्पणमुद्रिकम्।**
**सूत्रबद्धं गलस्रोतोरोगच्छेदनभेदने ॥ १५ ॥**

'अङ्गुलिशस्त्रकं' कुर्यात्। कीदृशम्? मुद्रिकाया ऊर्मिकाया निर्गतं निष्क्रान्तं मुखं यस्य तन्मुद्रिकानिर्गतमुखम्। फले तु तस्मिन्मुखेऽर्धाङ्गुलदीर्घं योगतः संस्थानेन वृद्धिपत्रेण मण्डलाग्रेण वा तुल्यम्। कियत्प्रमाणाऽस्य मुद्रिका कार्या? इत्याह—तत्प्रदेशिन्यग्रेत्यादि। तस्य वैद्यस्य या प्रदेशिनी, तस्या यदग्रं पर्व, तस्य यत्प्रमाणं, तेनार्प्यत इति तत्प्रदेशिन्यग्रपर्वप्रमाणार्पणी मुद्रिका यस्मिंस्तद्भिषक्तर्जन्यग्रपर्वप्रमाणार्पणमुद्रिकम्। तथा सूत्रेण बद्धं सूत्रबद्धम्। सूत्रेण बध्वा मणिबन्धे योज्यमित्यर्थः। गलस्रोतोरोगाणां छेदने च तद्योज्यम्।

**ग्रहणे शुण्डिकामादे'र्बडिशं' सुनताननम्।**

'बडिशं' नाम शस्त्रं शुण्डिकामादेर्ग्रहणे योज्यम्। आदिशब्देन प्रतिजिह्वादेर्ग्रहणम्। कीदृशं तत्? सुनतमङ्कुशवदानतमाननं मुखं यस्य तदेवम्।

**छेदेऽस्थ्नां 'करपत्रं' तु खरधारं दशाङ्गुलम् ॥ १६ ॥**
**विस्तारे द्व्यङ्गुलं सूक्ष्मदन्तं सुत्सरुबन्धनम्।**

'करपत्रं' नाम शस्त्रं खरधारं तथा दशाङ्गुलं दैर्घ्येण। द्व्यङ्गुलं विस्तारेण। सूक्ष्मा दन्ता यस्य तत्सूक्ष्मदन्तम्। तथा—त्सरुर्मुष्टिबन्धनं ग्रहणम्। शोभने त्सरुबन्धने यस्य तत्सुत्सरुबन्धनम्। 'अभिधानकोशे यद्यपि त्सरुरसिमुष्टिरित्यभ्यधायि' तथाऽपि मुष्टिमात्रस्येहोपलक्षणार्थत्वान्मुष्टावप्युपपन्नमेव।

**स्नायुसूत्रकचच्छेदे 'कर्तरी' कर्तरीनिभा ॥ १७ ॥**

'कर्तरी' नाम शस्त्रं कर्तरीसदृशं स्नाय्वादिच्छेदे योज्यम्।

**वक्रर्जुधारं द्विमुखं 'नखशस्त्रं' नवाङ्गुलम्।**
**सूक्ष्मशल्योद्धृतिच्छेदभेदप्रच्छन्नलेखने ॥ १८ ॥**

'नखशस्त्रं' नखच्छेदकं प्रसिद्धम्। तच्च वक्रा ऋजुश्च धारा यस्य तदेवम्। तस्यैकं मुखं वक्रमन्यदृजु स्पष्टम्। तथा नवाङ्गुलं नवाङ्गुलप्रमाणं, नतु षडङ्गुलम्। एतच्च सूक्ष्मशल्यस्य कण्टकादेरुद्धरणादौ नखच्छेदने भेदने च योज्यम्।

अधुना दन्तलेखनशस्त्रमाह—

**एकधारं चतुष्कोणं प्रबद्धाकृति चैकतः।**
**'दन्तलेखनकं' तेन शोधयेद्दन्तशर्कराम्॥ १६॥**

एकधारमेकस्मिन् प्रदेशे तथा चतुष्कोणं तथा एकत एकस्मिन्देशे प्रबद्धा आकृतिर्यस्य 'तद्दन्तलेखनम्'। तेन दन्तशर्करां शोधयेत्।

अधुना सूचीशस्त्रमाह—

**वृत्ता गूढदृढाः पाशे तिस्रः 'सूच्यो'ऽत्र सीवने।**
**मांसलानां प्रदेशानां त्र्यस्रा त्र्यङ्गुलमायता॥ २०॥**
**अल्पमांसाऽस्थिसन्धिस्थव्रणानां द्व्यङ्गुलायता।**
**व्रीहिवक्त्रा धनुर्वक्रा पक्वामाशयमर्मसु॥ २१॥**
**सा सार्धद्व्यङ्गुला,**

अत्र एषु शस्त्रेषु मध्ये, सीवने सीवनविषये तिस्रः 'सूच्यः' स्युः। किम्भूताः? वृत्ता वर्तुलाः पाशे गूढास्तथा दृढाः सारत्वात्। आसां च प्रत्येकं संस्थानविशेषेण विशेषोपयोगमाह। मांसलानां बहुमांसानां शरीरदेशानां त्र्यस्रा मुखे सूची स्यात्। सङ्ग्रहेऽप्यवोचत्—"त्र्यस्राग्रेति"। त्र्यस्रेति चिन्त्यम्। तथा त्र्यङ्गुलमायता त्र्यङ्गुलदीर्घेत्यर्थः। वृत्तत्वं दृढपाशत्वं चोक्तमेव सामान्यलक्षणेन। अल्पमांसानां व्रणानां सन्ध्यस्थिसंश्रितानां च द्व्यङ्गुलमायता दीर्घा। वृत्तमुखत्वं चाऽस्याः सामान्योक्तम्। तृतीयामाह व्रीहीत्यादि। व्रीहिमुखा चापवत् कुटिला। दैर्घ्येण द्वे अङ्गुले सार्धे स्यात्। साच पक्वाशय आमाशये मर्मसु च व्रणानां सीवने योज्या।

अधुना कूर्चं लिलक्षयिषुराह—

**सर्ववृत्तास्ताश्चतुरङ्गुलाः।**
**'कूर्चो' वृत्तैकपीठस्थाः सप्ताऽष्टौ वा सुबन्धनाः॥ २२॥**
**संयोज्यो नीलिकाव्यङ्गकेशशातनकुट्टने।**

ताः सूचयः सर्वतो वर्तुला दैर्घ्येण चतुरङ्गुलाः 'कूर्च' इत्युच्यते। किम्भूताः? वृत्ताः। एकस्मिन् पीठे संस्थिताः। तथा सप्तसङ्ख्या अष्टौ वा। तथा शोभनं बन्धनं यासां ताः सुबन्धनाः। अत एवेदं शस्त्रं 'सूचीकूर्च' संज्ञमिति। तथा चाऽर्शश्चिकित्सिते जगाद—'अर्शोभ्यो जलजाशस्त्रसूचीकूर्चैरित्यादि'। स च बद्धसप्ताष्टसूचिकः कूर्चो नीलिकादिषु लेपे कुट्टनविषये च योज्यः। उपलक्षणत्वाचाऽस्य श्वित्रेन्द्रलुप्तादिष्वपि योज्यः।

**अर्धाङ्गुलमुखैर्वृत्तैरष्टाभिः कण्टकैः 'खजः'॥ २३॥**
**पाणिभ्यां मथ्यमानेन घ्राणात्तेन हरेदसृक्।**

अष्टाभिः कण्टकैः 'खज' उच्यते। कीदृशैः? अर्धाङ्गुलप्रमाणं मुखं येषां तैरर्धाङ्गुलमुखैः। तथा वर्तुलैः। तेन खजेन हस्ताभ्यां विलोड्यमानेन नासिकातोऽस्रं हरेत्।



**व्यधने कर्णपालीनां 'यूथिका' मुकुलानना ॥ २४ ॥**

कर्णपालीनां व्यधने 'यूथिका' नाम शस्त्रं स्यात्। कीदृशी? मुकुलानना।

**'आरा'ऽर्धाङ्गुलवृत्तास्या तत्प्रवेशा तथोर्ध्वतः।**
**चतुरस्रा तया विध्येच्छोफं पक्वामसंशये ॥ २५ ॥**
**कर्णपालीं च बहुलाम्,**

अर्धाङ्गुलप्रमाणं वृत्तं मुखं यस्याः साऽर्धाङ्गुलवृत्तास्या। तथा स एवाऽर्धाङ्गुलप्रमाणः प्रवेशो यस्याः सा तत्प्रवेशा। तथोर्ध्वत इति। वृत्तार्धाङ्गुलादुपरिष्टात्तथैव चार्धाङ्गुलप्रमाणैव चतुरस्रा स्यात्। सा 'आरा' नाम शस्त्रम्। तया आरया शोफं विध्येत्। कदा? पक्वामसंशये। किमयं पक्वः शोफः, उताऽऽमः? इति सन्देहे। बहुलां च कर्णपालीं तया विध्येत्।

**बहुलायाश्च शस्यते।**
**सूची त्रिभागसुषिरा त्र्यङ्गुला कर्णवेधनी ॥ २६ ॥**

बहुलाया अतिमांसलायाः कर्णपाल्याश्च सूची शस्यते न केवलमारा। कीदृशी सूची? त्रिभागः प्रान्तभागात्सुषिरो यस्याः सैवम्। तथा त्र्यङ्गुला दैर्घ्येण। सा च कर्णवेधिनी स्यात्।

**जलौकःक्षारदहनकाचोपलनखादयः।**
**अलौहान्यनुशस्त्राणि तान्येवं च विकल्पयेत् ॥ २७ ॥**
**अपराण्यपि यन्त्रादीन्युपयोगं च यौगिकम्।**

जलौकःप्रभृतीन्यनुशस्त्राणि, रक्तस्रावादिकार्यकरणात्। तानि चाऽलौहानि लोहवर्जितानि। आदिशब्देनायस्कान्तशाकशेफालिकापत्रादीनां ग्रहणम्। एवंचोक्तेन न्यायेनाऽन्यान्यपि यन्त्रादीनि विकल्पयेत्। आदिशब्देन शस्त्राणां ग्रहणम्। उपयोगं च यौगिकं साधुतरं बुद्ध्या निरूपयेत्।

**उत्पाट्यपाट्यसीव्यैषलेख्यप्रच्छन्नकुट्टनम् ॥ २८ ॥**
**छेद्यं भेद्यं व्यधो मन्थो ग्रहो दाहश्च तत्क्रियाः।**

उत्पाट्यादीनि तत्क्रियास्तेषां षड्विंशतिशस्त्राणां क्रियाः कर्माणि तत्क्रियाः। तानि षड्विंशतिशस्त्राणि सङ्ग्रहोक्तानि। तद्यथा—"दन्तलेखनमण्डलाग्रवृद्धिपत्रोत्खरशरारिमुखत्रिकूर्चकुठारिकाव्रीहिमुखशलाकावेतसपत्राराकर्णव्यधनसूचीकूर्चखजैषणीबडिशनखशस्त्राणीति"। उत्पाट्यमूर्ध्वनयनं तत्र नखशस्त्रं योज्यम्। पाटने वृद्धिपत्रादि। सेवने सूच्यः। लेखने मण्डलाग्रादिः। कुट्टने कूर्चः। छेदने करपत्रादि। भेदने एषणी सूचीमुखा। व्यधने वेतसादि। मन्थने खजाः। ग्रहे सन्दंशः। दाहे शलाकादिरिति।

शस्त्रदोषानाह—

**कुण्ठखण्डतनुस्थूलह्रस्वदीर्घत्ववक्रताः ॥ २९ ॥**



**शस्त्राणां खरधारत्वमष्टौ दोषाः प्रकीर्तिताः ।**

स्पष्टम् ।

अधुना शस्त्राणां ग्रहणविधिं दर्शयति—

**छेदभेदनलेख्यार्थं शस्त्रं वृन्तफलान्तरे ॥ ३० ॥**
**तर्जनीमध्यमाङ्गुष्ठैर्गृह्णीयात्सुसमाहितः ।**

छेदभेदनलेख्यार्थं तर्जनीमध्याङ्गुष्ठैर्मीलितैः शस्त्रं वृन्तफलान्तरे वृन्तफलमध्यभागे गृह्णीयात् । कीदृक् ? सुसमाहितस्तद्गतमनाः ।

**विस्रावणानि वृन्ताग्रे तर्जन्यङ्गुष्ठकेन च ॥ ३१ ॥**

विस्रावणकार्याणि शरार्यास्यादीनि शस्त्राणि वृन्ताग्रे तर्जन्यङ्गुष्ठाभ्यां गृह्णीयात् ।

**तलप्रच्छन्नवृन्ताग्रं ग्राह्यं व्रीहिमुखं मुखे ।**

गृह्णीयादित्यनुवर्तते । तलशब्देन पाणितलमुच्यते । 'आदिलोपाख्यया तन्त्रयुक्त्या' । तलेन प्रच्छन्नं वृन्तमग्रं यस्य तद्व्रीहिमुखं मुखे गृह्णीयात् ।

**मूलेष्वाहारणार्थं तु क्रियासौकर्यतोऽपरम् ॥ ३२ ॥**

शेषं शस्त्रं क्रियासौकर्यतो गृह्णीयात् । सुकरस्य भावः सौकर्यम् । यथा सुकरा पाटनादिका क्रिया स्यात्तथा गृह्णीतेत्यर्थः ।

शस्त्रकोशमाचष्टे—

**स्यान्नवाङ्गुलविस्तारः सुघनो द्वादशाङ्गुलः ।**
**क्षौमपत्रोर्णकौशेयदुकूलमृदुचर्मजः ॥ ३३ ॥**
**विन्यस्तपाशः सुस्यूतः सान्तरोर्णास्थशस्त्रकः ।**
**शलाकापिहितास्यश्च शस्त्रकोशः सुसञ्चयः ॥ ३४ ॥**

नवाङ्गुलविस्तारः शस्त्रकोशः स्यात् । तथा सुष्ठु घनो निबिडः । तथा द्वादशाङ्गुलप्रमाणो दैर्घ्येण । तथा क्षौमादिजः । तथा विन्यस्तः कृतः पाशो यस्य स विन्यस्तपाशः । तथा सुष्ठु स्यूतः । तथा सान्तराणि सव्यवधानान्यूर्णास्थानि शस्त्राणि यस्मिन् स सान्तरोर्णास्थशस्त्रकः । तथा शलाकया पिहितं स्थगितमास्यं यस्य स एवम् । तथा शोभनः सञ्चयो यस्य शस्त्रकोशस्य स सुसञ्चयः । नापितभाण्डिकावत् । तन्त्रान्तरे चोक्तम्—"निशानी तु शस्त्राणां सूक्ष्मा शिलैका माषमुद्गप्रभेत्यादि" ।

सुकुमारबालानामस्रविस्रावणार्थं जलौकसो निर्दिदिक्षुराह—

**जलौकसस्तु सुखिनां रक्तस्रावाय योजयेत् ॥ ३५ ॥**

सुखिनां सुखोचितानां रक्तस्रावणार्थं जलौकसो योजयेत् ।

ताश्च द्विप्रकाराः । सविषा निर्विषाश्च । तत्र सविषाणां सापायत्वात्ता एव तावल्लक्षयति ।



दुष्टाम्बुमत्स्यभेकाहिशवकोथमलोद्भवाः ।
रक्ताः श्वेता भृशं कृष्णाश्चपलाः स्थूलपिच्छिलाः ॥ ३६ ॥
इन्द्रायुधविचित्रोर्ध्वराजयो लोमशाश्च ताः ।
सविषा वर्जयेत्,

दुष्टाम्बूद्भवाश्च जलौकसः सविषा इति वर्जयेत् । तथा मत्स्यभेकसर्पादिशवकोथोद्भवास्तथा तेषामेव मत्स्यादीनां ये मला मूत्रपुरीषादयस्तदुद्भवाश्च सविषा इति वर्जयेत् । सविषाणां लक्षणमाह—रक्ता इत्यादि । यावल्लोमशान्तास्ताः सविषा यतस्ता वर्जयेत्ता न योजयेत् ।

ताभिः कण्डूपाकज्वरभ्रमाः ॥ ३७ ॥
विषपित्तास्रनुत्कार्यं तत्र,

ताभिर्हि योजताभिः कण्ड्वादयः स्युः । उपलक्षणं चेदम् । दाहशोषमूर्च्छादयोऽपि स्युः । तासु मोहाद्योजितासु विषादिजित् कार्यम् ।

शुद्धाम्बुजाः पुनः ।
निर्विषाः शैवलश्यावा वृत्ता नीलोर्ध्वराजयः ॥ ३८ ॥
कषायपृष्ठास्तन्वङ्ग्यः किञ्चित्पीतोदराश्च याः ।

जलौकस इति वर्तते । शुद्धजलोद्भवाः सौगन्धिकोत्पलकमलविपुलसलिलशैवालजा जलौकसो निर्विषाः स्युः । आसां च लक्षणमाह—शैवलेत्यादि । शैवलमिव श्यावास्तथा वृत्तास्तथा नीलोर्ध्वराजयस्तथा कषायं न्यग्रोधादिवल्कलसदृशवर्णं पृष्ठं यासां ता एवम् । तथा तनुशरीराः किञ्चित्पीतवर्णजठराश्च निर्विषा वेद्याः ।

ता अप्यसम्यग्वमनात्प्रततं च निपातनात् ॥ ३९ ॥
सीदन्तीः सलिलं प्राप्य रक्तमत्ता इति त्यजेत् ।

सुनिर्विषा अपि जलौकसौ रक्तमत्ता इति त्यजेत् । न केवलं सविषा इति प्रतिपादनार्थोऽपिशब्दः । रक्तमत्तत्वे हेतुद्वयमाह । असम्यग्वमनात् । दुष्टरक्तस्येति शेषः । प्रततं च लागनाद् दुष्टरक्तपायित्वेन रक्तमत्ताश्च ताः स्युः । ताश्च कथं लक्ष्यन्त इत्याह—सीदन्तीरित्यादि । जलं प्राप्य तोयपूर्णभाण्डमासाद्य सीदन्तीस्तथाऽचेष्टमाना इति ज्ञात्वा त्यजेत् ।

अथेतरा निशाकल्कयुक्तेऽम्भसि परिप्लुताः ॥ ४० ॥
अवन्तिसोमे तक्रे वा पुनश्चाऽश्वासिता जले ।
लागयेद् घृतमृत्साङ्गशस्त्ररक्तनिपातनैः ॥ ४१ ॥
पिबन्तीरुन्नतस्कन्धाश्छादयेन्मृदुवाससा ।

अथ परीक्षातोऽनन्तरमितरा लागयेत् । किम्भूताः ? हरिद्राकल्कयुक्तजले परिप्लुताः, काञ्जिके तक्रे वा परिप्लुताः, पुनश्च जले समाश्वासिताः, सात्म्यभूते जले प्लवनार्हाः सोत्साहाः सतीर्योजयेत् । अलगन्तीः कथं लागयेद् ? इत्याह—

घृतेत्यादि। घृतादिपातनैस्ता योजयेत्। पातनशब्दः प्रत्येकं योज्यः। शस्त्रेणाऽङ्गे रक्तं मोक्षयित्वा वा ता योजयेत्। ताश्च पिबन्तीः सूक्ष्मवाससाऽऽच्छादयेत्। एवं तासां मक्षिकाद्यनुपद्रवात् सम्यग्योजना स्यात्। अथ किमेताः पिबन्त्युत नेति कथं ज्ञायेत? इत्यत्र विशेषणद्वारेण हेतुमाह—'उन्नतस्कन्धा' इति। उन्नतः स्कन्धो यासां ता एवम्। उन्नतस्कन्धत्वेन तासां पानं ज्ञायेत–इत्यर्थः।

ननु शुद्धरक्तदुष्टरक्तयोरेकलोलीभूतत्वाच्छुद्धरक्तधात्वाकर्षणाज्जलौका दोषाय स्यादित्यत आह—

**सम्पृक्ताद् दुष्टशुद्धास्राज्जलौका दुष्टशोणितम्॥ ४२॥**
**आदत्ते प्रथमं, हंसः क्षीरं क्षीरोदकादिव।**

दुष्टशुद्धास्रान्मिलितादपि दुष्टरक्तं जलौकाः पूर्वमादत्ते, न शुद्धं देहधातुस्थमिति, दृष्टान्तेन दर्शयति। 'हंस इत्यादि'। हंसो यथा क्षीरजलान्मिश्रितात्प्राग्दुग्धमादत्ते न तु जलं, तथा जलौकाः प्रागशुद्धं रक्तमादत्ते पश्चादितरदिति न्यायमेतत्।

**दंशस्य तोदे कण्ड्वां वा मोक्षयेद्वामयेच्च ताम्॥ ४३॥**

दंशस्य तोदे सति कण्ड्वां वा सत्यां मोक्षयेत्। शुद्धरक्तरक्षार्थमतियोगभयाच्च। तामित्येकवचननिर्देशादेकैकां मोक्षयेन्न तु सर्वाः सकृदेवेति गमयति। अथ पानलौल्याद्दंशं न त्यजेत्ततो हरिद्राचूर्णं लवणचूर्णं वा, आनने दत्त्वा मोक्षयेत्। मोक्षितां च जलौकसं वामयेत्।

(जलौकसो) वमनविधानमाह—

**पटुतैलाक्तवदनां श्लक्ष्णकण्डनरूक्षिताम्।**

सैन्धवयुतेन तैलेन रूक्षितास्यां तथा सूक्ष्मेण तण्डुलकण्डनेन रूक्षितामवकीर्णां वामयेत्। तण्डुलशब्दस्याऽत्र लोपो ज्ञेयः, तन्त्रयुक्त्या।

**रक्षन् रक्तमदाद् भूयः सप्ताहं ता न पातयेत्॥ ४४॥**

ताः कृतवमना जलौकसो रक्तमदाद्रक्षन् पुनः सप्ताहं न योजयेत्।

**पूर्ववत् पटुता दार्ढ्यं सम्यग्वान्ते जलौकसाम्।**

जलौकसां सम्यग्वान्ते सति, पूर्ववदलगितानामिव पटुतादि भवति।

**क्लमोऽतियोगान्मृत्युर्वा,**

अतियोगाद्वमनस्य, क्लमो मृत्युर्वा स्यात्।

**दुर्वान्ते स्तब्धता मदः॥ ४५॥**

दुर्वान्ते सति, स्तब्धता मदश्च स्यात्।

**अन्यत्राऽन्यत्र ताः स्थाप्या घटे मृत्स्नाम्बुगर्भिणी।**

---

१ अस्याग्रे क्षिप्तोऽयं श्लोको ज्ञेयः। गुल्मार्शोविद्रधीकुष्ठवातरक्तगलामयान्।
नेत्ररुग्विषवीसर्पान् शमयन्ति जलौकसः॥





**लालादिकोथनाशार्थं सविषाः स्युस्तदन्वयात् ॥ ४६ ॥**

ताश्चाऽन्यस्मिन्नन्यस्मिन्घटे त्र्यहात्पञ्चाहाद्वा स्थाप्याः । किम्भूते ? मृत्स्नापृक्तेन जलेन गर्भिणि तद्युक्त इत्यर्थः । प्रशस्ता मृन्मृत्स्ना । 'सस्नौ प्रशंसायामिति स्नप्रत्ययः' । अनेकभाजनस्थापने कोऽर्थ इति ? आह—लालादिकोथनाशार्थम् । आदिशब्देन मूत्रपुरीषादिपरिग्रहः । लालादीनां जलौकसा सम्बन्धः । कोथः कुथितत्वं क्लिन्नता तन्नाशाय । तदन्वयाल्लालादियोगात्ताः सविषाः स्युः ।

**अशुद्धौ स्रावयेद्दंशान् हरिद्रागुडमाक्षिकैः ।**

अशुद्धावशुद्धलिङ्गानुमिते रक्ते सति, दंशान् हरिद्रादिभिः स्रावयेत् ।

**शतधौताज्यपिचवस्ततो लेपाश्च शीतलाः ॥ ४७ ॥**

अनन्तरं शतधौतघृतसंपृक्ताः पिचवो योज्या इति शेषः । शतशब्दोऽनेकपर्यायो बहुकृत्वो धौतेऽत्यर्थः । तथा शिशिरा लेपा यष्टीचन्दनोशीरादयो योज्याः । दंशस्थितचलितरक्तप्रसादनायेति भावः ।

**दुष्टरक्तापगमनात्सद्यो रागरुजां शमः ।**

दुष्टरक्तस्याऽपगमान्निःसरणात्सद्यो रागरुजादिशमः स्यात् । उपलक्षणं चेदम् । श्वयथुशैथिल्यदाहशमोऽपि भवत्येव ।

**अशुद्धं चलितं स्थानात्स्थितं रक्तं व्रणाशये ॥ ४८ ॥**
**अम्लीभवेत्पर्युषितं तस्मात्तत्स्रावयेत्पुनः ।**

अशुद्धं रक्तं स्वाशयाच्चलितं व्रणस्थाने स्थितं पर्युषितं तद्ध्यम्लीभवेद्यतस्तस्मात्तद्रक्तं भूयः स्रावयेत् ।

**युञ्ज्यान्नाऽलाबुघटिका रक्ते पित्तेन दूषिते ॥ ४९ ॥**
**तासामनलसंयोगात्,**

रक्ते पित्तेन दूषिते सत्यलाबुघटिका न लागयेत् । तासामलाबूनां घटिकानां चाऽग्निसंयोगात्पित्तरक्तकोपोत्पत्तिरिति भावः ।

**युञ्ज्याच्च कफवायुना ।**

तास्तु कफवायुना दुष्टेऽसृजि युञ्ज्यात् ।

**कफेन दुष्टं रुधिरं न शृङ्गेण विनिर्हरेत् ॥ ५० ॥**
**स्कन्नत्वाद्,**

कफेन दुष्टं रक्तं सत्, शृङ्गैर्नाकर्षेत् । स्कन्नत्वात्स्त्यानत्वाद्धेतोः । शृङ्गस्य चाऽग्निसंयोगाभावेन कफविलयने सामर्थ्याभावात् ।

**वातपित्ताभ्यां दुष्टं शृङ्गेण निर्हरेत् ।**

वातपित्ताभ्यां तु दुष्टं रुधिरं शृङ्गेण निर्हरेत् ।

**गात्रं बद्ध्वोपरि दृढं रज्ज्वा पट्टेन वा समम् ॥ ५१ ॥**
**स्नायुसन्ध्यस्थिमर्माणि त्यजन् प्रच्छानमाचरेत् ।**



अधोदेशप्रविसृतैः पदैरुपरिगामिभिः ॥ ५२ ॥
न गाढघनतिर्यग्भिर्न पदे पदमाचरन्।
प्रच्छानेनैकदेशस्थं ग्रन्थितं जलजन्मभिः ॥ ५३ ॥
हरेच्छृङ्गादिभिः सुप्तमसृग्व्यापि सिराव्यधैः।

गात्रं रज्ज्वा पट्टेन वा दृढं बद्ध्वोपरि प्रच्छनीयप्रदेशस्य तथा स्नाय्वादि परिहरन् प्रच्छानं कुर्यात्। कथम्? अधोदेशात्प्रवृत्तैः पदैरुपरिगामिभिरूर्ध्वं प्रसारिभिः। किम्भूतैः पदैः? न गाढैर्न खरैर्न निरन्तरैर्न च तिर्यग्भिस्तिरश्चीनैः। तथा। पदे पदं नाचरन् पदस्योपरि पदमकुर्वन्नित्यर्थः। एकदेशस्थितं रक्तं प्रच्छानेनाऽऽकर्षेत्। ग्रन्थितं जलजन्मभिर्हरेत्। ग्रन्थितं ग्रन्थ्यर्बुदादिषु रक्तं जलौकोभिर्हरेत्। शृङ्गादिभिः सुप्तं निश्चतनसंस्थानं, प्रसुप्त्यादिविकारि शृङ्गादिभिर्हरेत्। व्यापि सिराव्यधैः। व्यापि सर्वशरीरस्य लोहितं सिराव्यधेनाऽऽकर्षेत्।

प्रच्छानं पिण्डिते वा स्यात्,

पिण्डिते रक्ते प्रच्छानं वा स्यात्।

अवगाढे जलौकसः ॥ ५४ ॥

अवगाढे रक्ते जलौकसः स्युः।

त्वक्स्थेऽलाबुघटीशृङ्गम्,

त्वक्स्थ उत्ताने रक्तेऽलाबुघटीशृङ्गाणि स्युः।

सिरैव व्यापकेऽसृजि।

सर्वशरीरव्यापके रक्ते सिरैव। सिरायां मतविकल्पो नास्त्येवेत्येवशब्दार्थः।

वातादिधाम वा शृङ्गजलौकोलाबुभिः क्रमात् ॥ ५५ ॥

अथवा वातादिस्थानस्थितं रक्तं यथाक्रमं शृङ्गादिभिर्हरेत्।

स्रुतासृजः प्रदेहाद्यैः शीतैः स्याद्वायुकोपतः।
सतोदकण्डूशोफस्तं सर्पिषोष्णेन सेचयेत् ॥ ५६ ॥

स्रुतरक्तस्य नरस्य शीतलैः प्रलेपादिभिस्तोदकण्डूयुतः शोफो वा स्यात्। तं सर्पिषोष्णेन सेचयेत्। तं तादृशं शोफं घृतेनोष्णेन सेचयेदिति।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां षड्विंशोऽध्यायः ॥ २६ ॥



# सप्तविंशोऽध्यायः।

अनन्तराऽतीताध्याये शृङ्गादीन् लोहितावसेचनोपायानुक्त्वा 'प्रच्छानेनैकदेशस्थेत्यादिना' वाक्येन तेषां विषयो दर्शितः। सिराव्यधस्य तु बहुवक्तव्यत्वात्पृथगध्यायो युक्त इत्याह—



## अथाऽतः सिराव्यधविधिमध्यायं व्याख्यास्यामः।

सरत्याभी रक्तमिति सिरास्तासां व्यधस्तस्य विधिस्तमध्यायं व्याख्यास्यामः । शेषं पूर्ववत् ।

**मधुरं लवणं किञ्चिदशीतोष्णमसंहतम्।**
**पद्मेन्द्रगोपहेमाविशशलोहितलोहितम् ॥ १ ॥**
**लोहितं प्रवदेच्छुद्धं तनोस्तेनैव च स्थितिः ।**

लोहितं मधुरगुणं तथा किञ्चिल्लवणं तथाऽशीतोष्णम् । नञीषदर्थे । ईषच्छीतमीषदुष्णमसंहतं द्रवं शुद्धं स्यात् । सम्प्रति वर्णेन शुद्धलोहितलक्षणमाह--पद्मेत्यादि । इन्द्रगोपो मृगनक्षत्रोत्पन्नः कीटकविशेषः । हेम कनकम् । अविर्मेषः शशस्तयोर्लोहितशब्देन रक्तवाचिना सम्बन्धः । पद्मादीनां द्वन्द्वः । पद्मेन्द्रगोपहेमाविशशलोहितमिव लोहितं रक्तवर्णं यद्रक्तं तच्छुद्धं स्यात् । तच्च तनोः शरीरस्य प्रभव उत्पत्तिहेतुः । तेनैव रक्तेन च तनोः स्थितिः प्रबन्धाविच्छेदलक्षणा । अनेकदृष्टान्तोपादानं च शुद्धरक्तस्याऽनेकवर्णदर्शनात् ।

**तत्पित्तश्लेष्मलैः प्रायो दूष्यते,**

तच्च रक्तं बाहुल्येन पित्तश्लेष्मलैर्दूष्यते । पित्तलैः क्षारोष्णतीक्ष्णादिभिः । तथा श्लैष्मलैर्माषतिलादिभिः । तथा पुराकृतादैवादपि । शरत्कालस्वभावात्कदाचिद्वातलैर्दूष्यत इति प्रायोग्रहणम् ।

**कुरुते ततः ॥ २ ॥**
**विसर्पविद्रधिप्लीहगुल्माऽग्निसदनज्वरान् ।**
**मुखनेत्रशिरोरोगमदतृड्लवणास्यताः ॥ ३ ॥**
**कुष्ठवाताऽसृपित्तासृक्कद्वम्लोद्गीरणभ्रमान् ।**
**शीतोष्णस्निग्धरूक्षाद्यैरुपक्रान्ताश्च ये गदाः ॥ ४ ॥**
**सम्यक् साध्या न सिध्यन्ति ते हि रक्तप्रकोपजाः ।**

ततो दूषणात्कारणाद्विसर्पादीन् भ्रमान्तान्कुरुते । तथा शीतोष्णादिभिरुपक्रान्ताश्च ये गदाः सम्यक्चिकित्सिताः, साध्या अपि रोगा ये न सिध्यन्ति ते च रक्तप्रकोपजाः । न केवलं विसर्पादय इति चार्थः । आदि शब्देन स्तम्भवेदनादिपरिग्रहः ।

**तेषु स्रावयितुं रक्तमुद्रिक्तं व्यधयेत्सिराम् ॥ ५ ॥**

तेषु विसर्पादिषु रोगेषु रक्तमुल्बणं स्रावयितुं सिरां व्यधयेत् । 'अदन्तत्वादत्र वृद्धेरभावः' ।

**न तूनषोडशाऽतीतसप्तत्यब्दस्रुतासृजाम् ।**
**अस्निग्धास्वेदितात्यर्थस्वेदितानिलरोगिणाम् ॥ ६ ॥**
**गर्भिणीसूतिकाजीर्णपित्तासृश्वासकासिनाम् ।**
**अतीसारोदरच्छर्दिपाण्डुसर्वाङ्गशोफिनाम् ॥ ७ ॥**



**स्नेहपीते प्रयुक्तेषु तथा पञ्चसु कर्मसु।**
**नायन्त्रितां सिरां विध्येन्न तिर्यङ्नाप्यनुत्थिताम्॥ ८॥**
**नातिशीतोष्णवाताभ्रेष्वन्यत्राऽऽत्ययिकाद्गदात्।**

ऊनषोडशवर्षादीनां सिरां न व्यधयेत्। स्नेहपीते पीतस्नेह इत्यर्थः। 'आहिताग्न्यादित्वात् परनिपातः'। तथा पञ्चसु वमनादिषु कर्मसु विहितेषु सत्सु सिरां न व्यधयेत्। तथाऽयन्त्रितामबद्धां सिरां न व्यधयेत्। तिर्यङ् न चानुत्थितां नातिशीते नात्युष्णे नातिवाते न च मेघोदये सिरां व्यधयेत्। आत्ययिकाद्रोहिणी विषादिकादन्यत्र न व्यधयेत्। आत्ययिके तु रोगे शीतोष्णवृष्टीनां यथायथं प्रतीकारं विधाय सिरां मोक्षयेदेव।

**शिरोनेत्रविकारेषु ललाट्यां मोक्षयेत्सिराम्॥ ९॥**
**अपाङ्गयामुपनास्यां वा**

शिरोनयनविकारेषु ललाट्यां सिरां मोक्षयेत्। ललाटे भवा ललाट्या। 'शरीरावयवाद्यत्'। एवमग्रेऽप्यपाङ्गे भवां नासिकासमीपे भवां वा।

**कर्णरोगेषु कर्णजाम्।**

कर्णामयेषु कर्णजां कर्णसमीपभवां सिरां विध्येत्।

**नासारोगेषु नासाग्रे स्थिताम्,**

नासामयेषु नासाग्रे स्थितां विध्येत्।

**नासाललाटयोः॥ १०॥**
**पीनसे,**

पीनसे प्रतिश्याये नासाललाटयोः स्थितां सिरां विध्येत्।

**मुखरोगेषु जिह्वौष्ठहनुतालुगाः।**

मुखरोगेषु जिह्वादिगाः सिरा विध्येत्।

**जत्रूर्ध्वं ग्रन्थिषु ग्रीवाकर्णशङ्खशिरःश्रिताः॥ ११॥**

जत्रूर्ध्वं वक्षोंऽसयोः सन्ध्यूर्ध्वं ये ग्रन्थयस्तेषु ग्रीवाद्याश्रिताः सिरा विध्येत्।

**उरोऽपाङ्गललाटस्था उन्मादे,**

उन्माद उरःस्था अपाङ्गस्था ललाटाश्रिताश्च विध्येत्।

**ऽपस्मृतौ पुनः।**
**हनुसन्धौ समस्ते वा सिरां भ्रूमध्यगामिनीम्॥ १२॥**

अपस्मारे हनुसन्धौ स्थितां सिरां विध्येत्। समस्ते सर्वस्मिन् वा हनौ सिरां विध्येत्। सिरां भ्रूमध्यगामिनीं भ्रूमध्यस्थां वाऽपस्मृतौ विध्येदिति वाशब्दोऽत्रानुवर्त्य योज्यः।

**विद्रधौ पार्श्वशूले च पार्श्वकक्षास्तनान्तरे।**

विद्रधौ पार्श्वशूले च पार्श्वस्थाः कक्षास्तनान्तरस्थाश्च सिरा विध्येत्।



तृतीयकेंऽसयोर्मध्ये,

तृतीयके ज्वरेंऽसयोर्मध्ये स्कन्धसन्धौ स्थितां सिरां विध्येत्।

स्कन्धस्याधश्चतुर्थके ॥ १३ ॥

चतुर्थके ज्वरे स्कन्धस्याधोगतां सिरां विध्येत्।

प्रवाहिकायां शूलिन्यां श्रोणितो द्व्यङ्गुलेस्थिताम्।

प्रवाहिकायां शूलयुक्तायां श्रोणितः कट्या द्व्यङ्गुले स्थितां सिरां विध्येत्।

शुक्रमेढ्रामये मेढ्रे,

शुक्ररोगे मेढ्ररोगे च मेढ्रस्थितां सिरां विध्येत्।

ऊरुगां गलगण्डयोः ॥ १४ ॥

गलगण्डयोश्चोभयोरूरुस्थां सिरां विध्येत्।

गृध्रस्यां जानुनोऽधस्तादूर्ध्वं वा चतुरङ्गुले।

गृध्रस्यां जानुनोधस्ताच्चतुरङ्गुल ऊर्ध्वं वा जानुनश्चतुरङ्गुले स्थितां सिरां विध्येत्।

इन्द्रबस्तेरधोऽपच्यां द्व्यङ्गुले,

अपचीसंज्ञे रोग इन्द्रबस्तेरधो द्व्यङ्गुले सिरां विध्येत्। इन्द्रबस्तिर्जङ्घान्तरे वक्ष्यमाणः।

चतुरङ्गुले ॥ १५ ॥

ऊर्ध्वं गुल्फस्य सक्थ्यर्तौ,

सक्थिपीडायां गुल्फस्योर्ध्वं चतुरङ्गुले विध्येत्।

तथा क्रोष्टुकशीर्षके।

ऊरुपर्वगवातरोगविशेषे गुल्फस्योर्ध्वं चतुरङ्गुले विध्येत्।

पाददाहे खुडे हर्षे विपाद्यां वातकण्टके ॥ १६ ॥

चिप्पे च द्व्यङ्गुले विध्येदुपरि क्षिप्रमर्मणः।

पाददाहादिषु क्षिप्रमर्मण उपरि द्व्यङ्गुले विध्येत्।

गृध्रस्यामिव विश्वाच्याम्,

विश्वाच्यां गृध्रस्यामिव सिरां विध्येत्। गृध्रस्यां जानुनोधस्तादिति।

यथोक्तानामदर्शने ॥ १७ ॥

मर्महीने यथासन्ने देशेऽन्यां व्यधयेत् सिराम्।

यथोक्तानां सिराणामदर्शने सति मर्मवर्जिते यथासन्ने स्थाने व्याधिवशादपरां विध्येत्।

अथ स्निग्धतनुः सज्जसर्वोपकरणो बली ॥ १८ ॥

कृतस्वस्त्ययनः स्निग्धरसान्नप्रतिभोजितः।

अग्नितापाऽऽतपस्विन्नो जानूच्चासनसंस्थितः ॥ १९ ॥

मृदुपट्टात्तकेशान्तो जानुस्थापितकूर्परः।

मुष्टिभ्यां वस्त्रगर्भाभ्यां मन्ये गाढं निपीडयेत् ॥ २० ॥
दन्तप्रपीडनोत्कासगण्डाऽऽध्मानानि चाऽऽचरेत् ।

अथेत्यानन्तर्ये । स्निग्धा तनुर्यस्य स स्निग्धतनुः । तथा सज्जानि प्रगुणान्युपकरणानि वस्त्रपीडाऽनपादकस्नेहगैरिकादीनि यस्य स सज्जोपकरणः । तथा बली पुष्टः । तथा कृतं स्वस्त्ययनं बलिमङ्गलहोमादिकं यस्य स कृतस्वस्त्ययनः । तथा स्निग्धरसयुक्तेनाऽन्नेन प्रतिभोजितः । तथाऽग्नितापश्चाऽऽतपश्च ताभ्यां स्विन्नः । तथा जानुतुल्यमुच्चमासनं तत्र संस्थितः समुपविष्टः । तथा मृदुना सूक्ष्मेण वस्त्रपट्टेनाऽऽत्तो गृहीतो बद्धः केशान्तो यस्य स एवम् । तथा जानुनि स्थापितं कूर्परं येन स एवम् । तथा मुष्टिभ्यां वस्त्रगर्भाभ्यां मन्ये अतिशयेन पीडयेत् । तथा दन्तप्रपीडनाद्याचरेत् ।

पृष्ठतो यन्त्रयेच्चैनं वस्त्रमावेष्टयन्नरः ॥ २१ ॥
कन्धरायां परिक्षिप्य न्यस्यान्तर्वामतर्जनीम् ।
एषोऽन्तर्मुखवर्जानां सिराणां यन्त्रणे विधिः ॥ २२ ॥

एनं चाऽऽतुरं पृष्ठदेशे वसनमावेष्टयन्नरो यन्त्रयेत् । कथम् ? कन्धरायां ग्रीवायां वस्त्रं परिक्षिप्य तथाऽन्तर्मध्ये वामतर्जनीं न्यस्य । सिराणां यन्त्रणे एष विधिरेतद्विधानम् । किम्भूतानाम् ? अन्तर्मुखवर्जानाम् ।

तथा मध्यमयाऽङ्गुल्या वैद्योऽङ्गुष्ठविमुक्तया ।
ताडयेत्,

ततो यन्त्रणादनन्तरं वैद्योऽङ्गुष्ठविमुक्तया वामपाणिजया मध्यमयाऽङ्गुल्या ताडयेत् ।

उत्थितां ज्ञात्वा स्पर्शाङ्गुष्ठप्रपीडनैः ॥ २३ ॥
कुठार्या लक्षयेन्मध्ये वामहस्तगृहीतया ।
फलोद्देशे सुनिष्कम्पं सिरां तद्वच्च मोक्षयेत् ॥ २४ ॥

स्पर्शेन वाऽङ्गुष्ठपीडनैर्वोत्थितां ज्ञात्वा, ऊर्ध्वदण्डया सिरायां मध्ये न्यस्य फलोद्देशे सुनिष्कम्पं वामहस्तगृहीतया कुठार्या सिरां लक्षयेत् । तद्वच्च मोक्षयेत् । यथैव लक्षयेत्तथैवेत्यर्थः ।

ताडयन् पीडयेच्चैनां विध्येद् व्रीहिमुखेन तु ।

व्रीहिमुखेन पुनस्ताडयन् विध्यंस्तथाऽङ्गुष्ठादिना पीडयेत् । एनां कुठारिकाविषयजां सिरां विध्येत् । ननु कुठारिकाविषये कथं व्रीहिवक्त्रस्य प्रयोगः ? 'यतोऽपवादविषयं परिहृत्योत्सर्गाः प्रवर्तन्त इति न्यायः' । व्रीहिवक्त्रस्यैव सामान्येन प्रयोगोऽनुज्ञातः । तथाचाऽह—" व्रीहिवक्त्रं प्रयोज्यं वा तत्सिरोदरयोर्व्यधे " इति । कुठार्याः पुनर्विशेषोऽभिहितः । " तयोर्ध्वदण्डया विध्येदुपर्यस्थ्नां स्थितां सिरामिति " । तस्मादयुक्तमेतत् । अत्रोच्यते ज्ञापकम् । कुठारिकाविषये व्रीहिवक्त्रस्य प्रयोगो न्याय्य एव । यदयमाचार्यो वक्ष्यति—" मांसले निक्षिपेद्देशे

व्रीह्यास्यं व्रीहिमात्रकमिति ”। अनेन हि वचनेन ग्रन्थकार इदं प्रत्यपादयत्। बहुमांसे शरीरावयवे व्रीहिमुखं व्रीहिमात्रं निक्षेप्यम्। अन्यत्र त्वाशयानुरोधेन व्रीहिवक्त्रस्य प्रयोगः कार्य इति। अनेनैवाऽभिप्रायेण शास्त्रकृता 'प्रमाणपरिमाणाभ्यां सङ्ख्यायाश्चाऽपि विषये मात्रच् वक्तव्य इत्यनेन मात्रच् कृतः'। अन्यथा तु स्पष्टं कृत्वा—' व्रीहिप्रमाणं व्रीह्यास्यं मांसले निक्षिपेद्यथ इति ' पाठं कुर्यात्। तस्माद्युक्तो व्रीहिमुखस्य कुठारिकाविषयेऽपि प्रयोग इति।

**अङ्गुष्ठेनोन्नमय्याग्रं नासिकामुपनासिकाम्॥ २५॥**

अग्रेऽग्रदेशे नासिकामङ्गुष्ठेनोन्नमय्योपनासिकासन्नदेशस्थां सिरां विध्येत्।

**अभ्युन्नतविदष्टाग्रजिह्वस्याधस्तदाश्रयाम्।**

आभिमुख्येनोन्नतोपरि तालुदेशे नीता, तथा विशेषेण दन्तैर्दष्टा, अग्रे जिह्वाऽग्रजिह्वा येनासावभ्युन्नतविदष्टाग्रजिह्वस्तस्याधः प्रकृतत्वाज्जिह्वाया एवाऽधरतात्तदाश्रयां जिह्वाधःस्थां सिरां विध्येत्। तदित्यनेन जिह्वाधः परामृश्यते। जिह्वाध आश्रयो यस्याः सिरायास्ताम्।

**यन्त्रयेत्स्तनयोरूर्ध्वं ग्रीवाश्रितसिराव्यधे॥ २६॥**

ग्रीवाश्रितानां सिराणां व्यधो ग्रीवाश्रितसिराव्यधस्तस्मिन्स्तनयोरूर्ध्वं यन्त्रयेद्वाससा वेष्टयेत्।

**पाषाणगर्भहस्तस्य जानुस्थे प्रसृते भुजे।**
**कुक्षेरारभ्य मृदिते विध्येद्बद्धोर्ध्वपट्टके॥ २७॥**

पाषाणगर्भौ हस्तौ यस्य तस्य नरस्य भुजे जानुस्थे जानुष्वेव स्थिते प्रसृते प्रसारिते। भुज इति वचनमतन्त्रम्। द्वावपि हि भुजौ गृह्यते। कुक्षेरारभ्य यावद्ग्रीवा तावन्मृदिते मलिते। कस्मिन्? ग्रीवाश्रितसिराव्यधार्हेऽङ्गे। यथा बद्ध ऊर्ध्वं पट्टको यस्मिंस्तस्मिन् विध्येत्। प्रकृतत्वात्सिराम्।

**विध्येद्धस्तसिरां बाहावनाकुञ्चितकूर्परे।**
**बध्वा सुखोपविष्टस्य मुष्टिमङ्गुष्ठगर्भिणीम्॥ २८॥**
**ऊर्ध्वं वेध्यप्रदेशाच्च पट्टिकां चतुरङ्गुले।**

हस्तसिरां विध्येत्। कथम्? बाहावनाकुञ्चितकूर्परे। अनाकुञ्चितः प्रसारितः कूर्परो यस्य बाहोस्तस्मिन्। तथा सुखोपविष्टस्य सुखासीनस्य। तथा मुष्टिं बध्वा। किम्भूताम्? अङ्गुष्ठेन गर्भिणीमङ्गुष्ठगर्भिणीम्। गूढाङ्गुष्ठां मुष्टिं बध्वेत्यर्थः। तथा वेध्यस्थानादुपरि चतुरङ्गुलपरिमाणे स्थाने पट्टिकां बध्वा विध्येत्।

**विध्येदालम्बमानस्य बाहुभ्यां पार्श्वयोः सिराम्॥ २९॥**

बाहुभ्यामालम्बमानस्याऽवलम्ब्यं वस्तु भुजाभ्यामासजतः पार्श्वयोः सिरां विध्येत्।

**प्रहृष्टे मेहने,**

प्रहृष्टे स्तब्धे मेढ्रे तदाश्रितां सिरां विध्येत्।

जङ्घासिरां जानुन्यकुञ्चिते ।

जानुन्यकुञ्चिते स्पष्टे स्थिते सति जङ्घायां सिरां विध्येत् ।

पादे तु सुस्थितेऽधस्ताज्जानुसन्धेर्निपीडिते ॥ ३० ॥
गाढं कराभ्यामागुल्फं चरणे तस्य चोपरि ।
द्वितीये कुञ्चिते किञ्चिदारूढे हस्तवत्ततः ॥ ३१ ॥
बध्वा विध्येत्सिराम्,

सुखं कृत्वा भूम्यादिदेशे स्थिते पादे सति पादसिरां विध्येत् । तथा जानुसन्धेरधस्तादागुल्फं गुल्फं यावत् कराभ्यां गाढं कृत्वा पीडिते सति तस्य चरणस्योपर्युपरिष्टाद्द्वितये चरण ईषत्सङ्कुचिते । तथा आरूढे तत्काले सति ततो हस्तवद्वेध्यस्थानादुपरि चतुरङ्गुले पट्टकं बध्वा सिरां विध्येत् ।

इत्थमनुक्तेष्वपि कल्पयेत् ।
तेषु तेषु प्रदेशेषु तत्तद्यन्त्रमुपायवित् ॥ ३२ ॥

इत्थमनेन प्रकारेण यन्त्रलक्षणोद्देशेनानुक्तमपि यन्त्रं तत्तद्देशे माहात्म्यात् क्रियासौकर्यार्थं तेषु तेषु शरीरावयवेषु स्वबुद्ध्या तत्तद्यन्त्रं यथायोगं कल्पयेदुपायज्ञो वैद्यः ।

मांसले निक्षिपेद्देशे व्रीह्यास्यं व्रीहिमात्रकम् ।
यवार्धमस्थ्नामुपरि सिरां विध्यन् कुठारिकाम् ॥ ३३ ॥

मांसले शरीरावयवे व्रीहिमुखं शस्त्रं व्रीहिप्रमाणं निक्षिपेत् । अस्थ्नामुपरि यवार्धमात्रं कुठारिकां निक्षिपेत् । किं कुर्वन् ? सिरां विध्यन् ।

सम्यग्विद्धे स्रवेद्धारां यन्त्रे मुक्ते तु न स्रवेत् ।

सम्यग्विद्धे सति धारां स्रवेत् । यन्त्रे च मुक्ते सति न स्रवेत् ।

अल्पकालं वहत्यल्पं दुर्विद्धा तैलचूर्णनैः ॥ ३४ ॥
सशब्दमतिविद्धा तु स्रवेद् दुःखेन धार्यते ।

अल्पं विद्धा सती सिरा स्तोकं कालं वहति । दुर्विद्धाऽसम्यग्विद्धा तु सिरा सशब्दं स्रवेत् । दुःखेन कृच्छ्रेण धार्यते ।

भीमूर्छायन्त्रशैथिल्यकुण्ठशस्त्रातितृप्तयः ॥ ३५ ॥
क्षामत्ववेगितास्वेदा रक्तस्याऽस्रुतिहेतवः ।

भीमूर्छादयो रक्तस्याऽस्रावहेतवः । भीर्भयम् । मूर्छा मोहस्तमसीव प्रवेशः । यन्त्रशैथिल्यमगाढं कृत्वा यन्त्रपीडनम् । तथा कुण्ठं भग्नं शस्त्रम् । तथाऽतितृप्तिरतिसौहित्यम् । क्षामत्वं निर्बलता । वेगिता सञ्जातवेगत्वम् । अस्वेदः स्वेदायोगः । यतश्चैते रुधिरस्यास्रुतिहेतवोऽतो रक्तस्रुतावेते परिहार्याः ।

असम्यगस्रे स्रवति वेल्लव्योषनिशानतैः ॥ ३६ ॥





**सागारधूमलवणतैलैर्दिह्यात्सिरामुखम्।**

असम्यगस्रे स्रवति वेल्लादिभिः सिरावदनं दिह्यात्प्रलेपयेत्।

**सम्यक्प्रवृत्ते कोष्णेन तैलेन लवणेन च ॥ ३७ ॥**

सम्यक्प्रवृत्ते रक्ते सति, सिरामुखं कोष्णाभ्यां तैललवणाभ्यां दिह्याल्लिपयेत्।

**अग्रे स्रवति दुष्टास्रं कुसुम्भादिव पीतिका।**

यथा रागपीतिका मिश्रीभूतात् कुसुम्भादग्रे पूर्वं पीतिका स्रवति तथा दुष्टादुष्ट-रक्तादेकलोलीभूतादग्रे पूर्वं दुष्टास्रं स्रवति।

अग्रग्रहणात्पश्चाददुष्टमपि रक्तमवश्यं स्रवतीत्याशङ्क्येदमाह—

**सम्यक्स्रुत्य स्वयं तिष्ठेच्छुद्धं तदिति नाहरेत्॥ ३८॥**

यथावत्प्रस्रुत्य स्वयं यत्नेन विना यत्तिष्ठेन्न स्रवेत् शुद्धं तदिति नाहरेन्नं स्राव-येत्। जीवितहेतुत्वात्।

**यन्त्रं विमुच्य मूर्छायां वीजिते व्यजने पुनः।**

**स्रावयेन्मूर्छति पुनस्त्वपरेद्युस्त्र्यहेऽपि वा ॥ ३९ ॥**

मूर्छायां सत्यां यन्त्रं विमुच्य व्यजनैर्वीजिते समाश्वस्ते नरे सति पुनरस्रं स्राव-येत्। पुनर्मूर्छति त्वातुरेऽशुद्धमपि रक्तं तस्मिन्नहनि न स्रावयेत्। अपरेद्युस्त्र्यहेपि वा स्रावयेत्।

**वाताच्छ्यावारुणं रूक्षं वेगस्राव्यच्छफेनिलम्।**

वातात् श्यावादिलक्षणं रक्तं स्यात्।

**पित्तात्पीताऽसितं विस्रमस्कन्द्यौष्ण्यात्सचन्द्रकम्॥ ४० ॥**

पित्तात् पीतादिलक्षणमस्रं स्यात्। अस्कन्द्यस्त्यानमुष्णत्वात्सचन्द्रकं च।

**कफात् स्निग्धमसृक्पाण्डु तन्तुमत्पिच्छिलं घनम्।**

कफात् स्निग्धादिलक्षणमसृक् स्यात्।

**संसृष्टलिङ्गं संसर्गात्,**

संसर्गाद्दोषाणां संसृष्टलिङ्गं रक्तं स्यात्।

**त्रिदोषं मलिनाऽऽविलम्॥ ४१ ॥**

त्रिदोषं रक्तं मलिनं कलुषं तथाऽऽविलं घनं च। एतच्च दोषत्रयसंसर्गलक्षणा-दधिकं लक्षणं मन्तव्यम्। नचैतावेदेव त्रिदोषलक्षणं मन्तव्यम्।

**अशुद्धौ बलिनोऽप्यस्रं न प्रस्थात्स्रावयेत्परम्।**

अशुद्धमस्रं बलिनोऽपि किं पुनरबलिनः प्रस्थात्परमधिकं न स्रावयेत्॥

कस्मादित्याह—

**अतिस्रुतौ हि मृत्युः स्याद्दारुणा वा चलामयाः॥ ४२ ॥**

अतिस्रावे हि रक्तस्य मृत्युर्भवेत्। अथवा वातरोगाश्च कृच्छ्राः स्युः।

**तत्राऽभ्यङ्गरसक्षीररक्तपानानि भेषजम्।**



तत्र रक्तातिस्रुतावभ्यङ्गादीनि भेषजम्।

**स्रुते रक्ते शनैर्यन्त्रमपनीय हिमाम्बुना ॥ ४३ ॥**
**प्रक्षाल्य तैलप्लोताक्तं बन्धनीयं सिरामुखम्।**

स्रुते रक्ते सति यन्त्रं शनैर्विमुच्य मन्दमन्दमपनीय सिरामुखं शीतोदकेन प्रक्षाल्य तैलप्लोताक्तं सद्बन्धनीयम्।

**अशुद्धं स्रावयेद् भूयः सायमह्न्यपरेऽपि वा ॥ ४४ ॥**

अशुद्धं वातादिदुष्टरुधिरलक्षणाद् दुष्टं ज्ञात्वा भूयः पुनः स्रावयेत्। कदा सायमपराह्णे तस्मिन् दिवसे। अथवाऽपरेऽह्नि द्वितीये दिवसे।

**स्नेहोपस्कृतदेहस्य पक्षाद्वा भृशदूषितम्।**

अथवा स्नेहोपस्कृतो भावितो देहो यस्य तथाविधस्य भृशं दूषितमतिशयेन दुष्टं रक्तं पक्षादूर्ध्वं पुनः स्रावयेत्। एवमशुद्धं रक्तं यथायोगं सायमह्न्यपरे पक्षादूर्ध्वं वा प्रस्थपरिमाणमेव स्रावयेन्न ततोऽधिकमिति रक्तस्रुतौ क्रमः। प्रस्थपरिमाणं च तन्त्रान्तरे गदितम्—"वमने च विरेके च रक्तातीसारयोरपि। सार्धत्रयोदशपलं प्रस्थमाहुर्मनीषिण" इति।

किञ्चिच्छेषं दुष्टरक्तं स्थापयेदुत सर्वं स्रावयेदिति संशयापनोदार्थमिदमाह—

**किञ्चिद्धि शेषे दुष्टास्रे नैव रोगोऽतिवर्तते ॥ ४५ ॥**
**सशेषमप्यतो धार्यं न चातिस्रुतिमाचरेत्।**

यस्मात्किञ्चिच्छेषे दुष्टे रक्ते नैव रोगो दुष्टरक्तोद्भवो व्याधिरतिवर्तते क्रियापथमतिक्रम्य मार्गान्तरमसौ नाऽऽसादयति। अतो दुष्टमपि रक्तं सशेषं धार्यम्। न दुष्टरक्तस्याऽतिस्रुतिमाचरेत्। प्राणायतनत्वात्। सुश्रुतोऽप्यध्यगीष्ट—" रक्तं सशेषदोषं तु कुर्यादपि विचक्षणः। नचातिप्रस्रुतं कुर्याच्छेषं संशमनैर्जयेदिति।"

अथ किञ्चिच्छेषं रक्तमुपेक्षणीयमुत प्रतिक्रिया कापि कार्येत्याह—

**हरेच्छृङ्गादिभिः शेषम्,**

स्रुतशेषं दुष्टरक्तं शृङ्गतुम्बघटिकादिभिर्हरेन्न तु सिरया।

**प्रसादमथवा नयेत् ॥ ४६ ॥**
**शीतोपचारपित्तास्रक्रियाशुद्धिविशोषणैः।**
**दुष्टं रक्तमनुद्रिक्तमेवमेव प्रसादयेत् ॥ ४७ ॥**

अथवा शीतोपचारेण पित्तरक्तक्रियया शुद्ध्या वमनविरेचनादिरूपया विशोषणेन लङ्घनरूपेण तद्दुष्टं रक्तमनुद्रिक्तमेव प्रसादयेत्कलुषतां परित्यज्य तस्य प्रसन्नत्वमभ्युपपादयेन्न तु केवलं स्रुतशेषं रुधिरं शीतोपचारेण प्रसादयेत्। यावदनुद्रिक्तमप्रवृद्धं दुष्टं रुधिरमेवमनेनैव शीतोपचारादिना प्रसादं नयेन्न तु तन्निर्हरणे सिराव्यधादिना यतनीयमनुद्रिक्तरक्तनिर्हरणस्य सापायत्वात्।



**रक्ते त्वतिष्ठति क्षिप्रं स्तम्भनीमाचरेत्क्रियाम्।**

रक्ते त्वतिष्ठति स्थितिमलभमाने त्वरितमेव स्तम्भनीं क्रियां वक्ष्यमाणां कुर्यात्, रक्तस्य प्राणायतनत्वात्।

तदेतत्स्तम्भनविशेषमाह—

**रोध्रप्रियङ्गुपत्तङ्गमाषयष्ट्याह्वगैरिकैः॥ ४८॥**
**मृत्कपालाञ्जनक्षौममषीक्षीरित्वगङ्कुरैः।**
**विचूर्णयेद् व्रणमुखं पद्मकादिहिमं पिबेत्॥ ४९॥**

रोध्रादिभिः सिराव्रणमुखं विचूर्णयेत्। पद्मकादिहिमं शीतकषायं पिबेत्।

**तामेव वा सिरां विध्येद्व्यधात्तस्मादनन्तरम्।**

तामेव प्राग्विद्धां सिरां तस्मात् प्राग्व्यधादनन्तरमव्यवहितं विध्येत्।

**सिरामुखं च त्वरितं दहेत्तप्तशलाकया॥ ५०॥**

अथवा सिराद्वारं क्षिप्रं कृत्वाऽग्निनोपतप्तया शलाकया दहेत्। रक्तस्य स्रवणादनन्तरं यद्विधेयं तदाह—

**उन्मार्गगा यन्त्रनिपीडनेन स्वस्थानमायान्ति पुनर्न यावत्।**
**दोषाः प्रदुष्टा रुधिरं प्रपन्नास्तावद्धिताहारविहारभाक्स्यात्॥ ५१॥**

यन्त्रनिपीडनेनोन्मार्गगाः स्वमार्गमुल्लङ्घ्य मार्गान्तरसमाश्रयणेनोत्पथं प्रतिपन्ना दोषाः। किम्भूताः? प्रदुष्टाः। तथाविधं रक्तं प्राप्ताः पुनर्यावत्स्वाश्रयं न प्रतिपद्यन्ते तावद्धिताहारविहारभाक् स्याद्धितावाहारविहारौ भजेत्। 'भजो ण्विरिति ण्विः'। 'इन्द्रवज्रा वृत्तम्'।

**नात्युष्णशीतं लघु दीपनीयं रक्तेऽपनीते हितमन्नपानम्।**
**तदा शरीरं ह्यनवस्थितास्रमग्निर्विशेषादिति रक्षणीयः॥ ५२॥**

रक्ते स्राविते ऽन्नपानं नात्युष्णशीतं हितम्। अत्युष्णं ह्यन्नपानं रक्तं प्रदूषयेत्। अतिशीतं त्वग्निं सादयेत्। तथा लघु स्वभावतो मात्रादिना च। दीपनीयं संस्कारादिना। कुत एवमन्नपानं हितमित्याह। यस्मात्तस्मिन् काले शरीरमनवस्थितं चलितवृत्ति रक्तं यस्य शरीरस्य तदेवम्भूतं भवति। तच्चाऽसृक् शरीरस्याऽधारो रक्तस्य च पित्तं पित्तस्य च वह्निः। तथा च वक्ष्यति—"पित्तं वह्निरिति"। तस्माद्विशेषेण महता यत्नेन वह्निर्नात्युष्णशीतादिनाऽऽहारविहारेण रक्षितव्यः। 'इन्द्रवज्रावृत्तम्'।

कृतसिराव्यधस्य पुरुषस्य लक्षणमन्तरेणोन्मार्गगामिनां दोषाणां स्वस्थानप्रतिपत्तौ कालो नावगम्यते। न च निर्हृतदुष्टरक्तः पुरुषो लक्षणं विना ज्ञायत इति द्वयस्य परिज्ञानार्थमाह—

**प्रसन्नवर्णेन्द्रियमिन्द्रियार्थानिच्छन्तमव्याहतपक्तृवेगम्।**
**सुखान्वितं पुष्टिबलोपपन्नं विशुद्धरक्तं पुरुषं वदन्ति॥ ५३॥**

वर्णश्चेन्द्रियाणि च वर्णेन्द्रियाणि प्रसन्नानि वर्णेन्द्रियाणि यस्य तं प्रसन्नवर्णेन्द्रियम् । तथेन्द्रियार्थान् शब्दादीन् स्वभावाभिप्रेतानिच्छन्तमभिलषन्तम् । तथा पक्तुर्वेगः सामर्थ्यम् । अव्याहतोऽनभिभूतः पक्तृवेगो यस्य तमव्याहतपक्तृवेगमविनष्टपचनवेगम् । तथा सुखान्वितमारोग्ययुक्तम् । प्रकृतिमापन्नं पुष्टिबलाभ्यां युक्तम् । एवंविधं विशुद्धरक्तं पुरुषं वदन्तीति शरीरस्य लक्षणमुक्तम् । मधुरं लवणमित्यादिना तु रक्तस्यैव विशुद्धिलक्षणमभिहितमिति । 'उपजातिर्वृत्तम्' ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां सप्तविंशोऽध्यायः ॥ २७ ॥

# अष्टाविंशोऽध्यायः ।

सिराव्यधविधेरनन्तरं शल्याहरणविधिरारभ्यते ।

**अथाऽतः शल्याहरणविधिमध्यायं व्याख्यास्यामः ।**

यतः सिराव्यधाऽध्याये शल्यरूपस्य रक्तस्य सकलकायव्यापिनः सिराव्यधोपायेन निर्हरणमुक्तमिदानीं प्रादेशिकस्य लोहादेः शल्यस्य प्रतिदेशस्थितस्य लक्षणं निर्हरणोपायादिश्चाऽस्मिन्नध्याये शल्याहरणविधौ निर्दिश्यत इत्याह—

**वक्रर्जुतिर्यगूर्ध्वाधः शल्यानां पञ्चधा गतिः ।**

वक्रादिभेदभिन्ना शल्यानां पञ्चप्रकारा गतिर्गमनम् । कदाचिच्छल्यानि वक्रं कृत्वा तिर्यग्वोर्ध्वं वाऽधो वा गच्छन्ति । कदाचिदृजु कृत्वा । एवमुभयथा तिर्यगूर्ध्वाधोभेदगमनाच्छल्यानां पञ्चधा गतिः ।

सशल्यः कथं वेद्य इत्याह—

**श्यामं शोफं रुजावन्तं स्रवन्तं शोणितं मुहुः ॥ १ ॥**
**अभ्युन्नतं बुद्बुदवत्पिटकोपचितं व्रणम् ।**
**मृदुमांसं विजानीयादन्तःशल्यं समासतः ॥ २ ॥**

एवंविधं व्रणमन्तःशल्यं विजानीयात् । समासतः संक्षेपेण श्यामं श्यामवर्णम् । तथा शोफं शोफान्वितम् । रुजावन्तम् । तथा मुहुः शोणितं स्रवन्तम् । तथाऽभ्युन्नतमाभिमुख्येनोच्छ्रितमुन्नतम् । तथा बुद्बुदेन तुल्यं वर्तते बुद्बुदवत् । तथा पिटकैरुपचितं व्याप्तम् । तथा मृदुमांसं कोमलमांसम् ।

इति सामान्येनान्तःस्थितस्य शल्यस्य लक्षणमुक्त्वा त्वगादिगतस्य लक्षणमाह—

**विशेषात्त्वग्गते शल्ये विवर्णः कठिनायतः ।**
**शोफो भवति,**

सामान्यलक्षणं पूर्वोक्तमन्तःशल्यस्य सर्वत्र विद्यते । विशेषेण पुनस्त्वग्गते शल्ये शोफो विवर्णस्तथा कठिनो दीर्घश्च स्यात् ।



**मांसस्थे चोषः शोफो विवर्धते ॥ ३ ॥**
**पीडनाऽक्षमता पाकः शल्यमार्गो न रोहति ।**

मांसगते शल्ये चोषः स्यात् । सर्वाङ्गीणस्तीव्रोऽरतिमान् दाहश्चोष उच्यते । तथा शोफो विवर्धते । तथा पीडनस्याऽक्षमत्वं पाकश्च । शल्यमार्गश्च रोहं न याति ।

**पेश्यन्तरगते मांसप्राप्तवच्छ्वयथुं विना ॥ ४ ॥**

पेशीमध्यगते मांसगतेन तुल्यं लक्षणं श्वयथुं वर्जयित्वा । मांसावयवविशेषो दीर्घत्वाकृतिः पेशीत्युच्यते ।

**आक्षेपः स्नायुजालस्य संरम्भस्तम्भवेदनाः ।**
**स्नायुगे दुर्हरं चैतत्,**

स्नायुगे शल्ये स्नायुजालस्याऽऽक्षेपाद्याः स्युः । आक्षेप आकर्षणम् । संरम्भः क्षोभः । स्तम्भः स्तब्धता । वेदना शूलम् । तच्च स्नायुगं शल्यं दुःखेन निहर्तुं शक्यते ।

**सिराध्मानं सिराश्रिते ॥ ५ ॥**

सिराश्रिते शल्ये सिराणामानाहः स्यात् ।

**स्वकर्मगुणहानिः स्यात्स्रोतसां स्रोतसि स्थिते ।**

स्रोतोगते शल्ये स्रोतसां स्वकर्मगुणयोर्हानिः स्यात् । यथा कण्ठस्रोतसि स्थिते शल्ये पानाभ्यवहरणस्य निरोधो जायते । गुणोऽपि यस्तस्याऽप्रदुष्टत्वादिलक्षणः सोऽप्यस्य हीयत इति । एवमन्येषां स्वकर्मगुणहानिर्व्याख्येया । अवाक्त्वं चेति योज्यम् ।

**धमनिस्थेऽनिलो रक्तं फेनयुक्तमुदीरयेत् ॥ ६ ॥**
**निर्याति शब्दवान् स्याच्च हृल्लासः साङ्गवेदनः ।**

धमनिस्थे शल्ये वायुर्लोहितं सफेनं प्रेरयेत् । तथा सशब्दो मरुन्निर्याति । हृल्लासश्चाङ्गपीडायुक्तः स्यात् ।

**सङ्घर्षो बलवानस्थिसन्धिप्राप्तेऽस्थिपूर्णता ॥ ७ ॥**

अस्थिसन्धिप्राप्ते शल्ये बलवान् सङ्घर्षः क्षोभः स्यात् । तथाऽस्थिपूर्णता च जायेत ।

**नैकरूपा रुजोऽस्थिस्थे,**

अस्थिस्थे शल्येऽनेकाकारा नानाविधा रुजो भग्नरुग्णमृदितपीडितावनुन्नप्रायाः स्युः शोफश्च ।

**शोफस्तद्वच्च सन्धिगे ।**
**चेष्टानिवृत्तिश्च भवेत्,**

सन्धिगते शल्ये तद्वदेवाऽस्थिस्थशल्येन तुल्यं लक्षणं सन्धिस्थशल्याक्रान्तावयवस्य । तथा चेष्टाया व्यापारस्य निवृत्तिरुपरमश्च स्यात् । पूर्वमस्थिसन्धिगतस्य शल्यस्य लक्षणमुक्तम् । अधुनाऽनस्थिशरीरसन्धिगतशल्यस्य लक्षणम् । अन्यो

हि शरीरसन्धिः। तथा च राजयक्ष्मनिदाने वक्ष्यति—'शरीरसन्धीनाविश्येति'।

**आटोपः कोष्ठसंश्रिते ॥ ८ ॥**

**आनाहोऽन्नशकृन्मूत्रदर्शनं च व्रणानने।**

**विद्यान्मर्मगतं शल्यं मर्मविद्धोपलक्षणैः ॥ ९ ॥**

कोष्ठमुदरमाश्रिते शल्ये, आटोपः क्षोभस्तथाऽऽनाहो जठराध्मानम्। तथा व्रणमुखेऽन्नशकृन्मूत्रदर्शनं स्यात्। मर्मस्थं शल्यं मर्मविद्धोपलक्षणैर्विद्यात्। मर्मविद्धस्य च लक्षणं सङ्ग्रहे कथितम्। यथा—" देहप्रसुप्तिर्गुरुता सम्मोहः शीतकामता। स्वेदो मूर्च्छा वमिः श्वासो मर्मविद्धस्य लक्षणमिति "।

**यथास्वं च परिस्रावैस्त्वगादिषु विभावयेत्।**

न केवलं सामान्यलक्षणेन जठराध्मानादिना तथा त्वगादिस्थशल्यविशेषलक्षणेन त्वगादिस्थं शल्यं लक्षयेत्, यावद्यथास्वं परिस्रावैस्तथारूपैर्विभावयेत्।

**रुह्यते शुद्धदेहानामनुलोमस्थितं तु तत् ॥ १० ॥**

तत्प्राङ्निर्दिष्टं शल्यं रुह्यते रोहं याति। किम्भूतानां पुंसाम्? वमनविरेचनादिभिः शुद्धदेहानाम्। 'रुह्यत इति कर्मकर्तरीति केचित्। तच्च न युक्तम्। यतः कर्मस्थभावकानां कर्मस्थक्रियाणां च कर्ता कर्मवद्भवति। न कर्मस्थभावकानां न च कर्तृस्थक्रियाणामित्युक्तम्। रुहिश्च कर्तृस्थक्रियः। तस्माद्रोहतीति रुट्। रुडिवाचरतीति कृदन्तोऽयम्। रूढाभासो ह्ययं नतु सम्यग्रढः। तथाच वक्ष्यति—'दोषकोपेत्यादि'। तस्मादस्य रूढाभासत्वादेषा व्युत्पत्तिर्युक्ता'।

**दोषकोपाऽभिघातादिक्षोभाद्भूयोऽपि बाधते।**

यतस्तच्छल्यमसम्यग्रढत्वाद्भूयोपि बाधते। प्राक्कृतबाधमपि पीडां जनयति। कुतो हेतोरित्याह। दोषकोपश्चाऽभिघातश्च तावादी येषां कर्मणां धावनलङ्घनादिशीलानां, त एवं तैः क्षोभः संरम्भस्तस्माद्दोषकोपक्षोभादभिघातादिक्षोभाद्बाधते।

त्वगादिनष्टे शल्ये मिथ्यारूढत्वाददृश्यतां प्राप्ते सति परिज्ञानार्थमिदमाह—

**त्वङ्नष्टे यत्र तत्र स्युरभ्यङ्गस्वेदमर्दनैः ॥ ११ ॥**

**रागरुग्दाहसंरम्भा यत्र चाज्यं विलीयते।**

**आशु शुष्यति लेपो वा तत्स्थानं शल्यवद्वदेत् ॥ १२ ॥**

तत्र तेषु त्वङ्नष्टादिषु शल्येषु मध्येषु त्वङ्नष्टं यत्र प्रदेशे स्यात्तत्स्थानेऽभ्यङ्गादिभिर्लौहित्यशूलदाहक्षोभाः स्युः। यत्र वा स्थाने घृतं स्त्यानं योजितं विलीयते तत्स्थानं शल्यवत् सत्यं वदेत्। अथवा लेपश्चन्दनादिना दत्तो यत्राश्वेव शुष्यति तत्स्थानं त्वग्देशं शल्यवज्जानीयात्।

**मांसप्रनष्टं संशुद्ध्या कर्शनाच्छ्लथतां गतम्।**

**क्षोभाद्रागादिभिः शल्यं लक्षयेत्,**

मांसप्रनष्टमदृश्यतां प्राप्तं संशुद्ध्या वमनविरेचनादिक्रिया यत्कर्शनं कृशत्वं

तस्मात् श्लथतां शिथिलत्वं प्राप्तं क्षोभादनेकप्रकाराद्वेदनारूपात्तथा रागादिभिर्लक्षयेत्।

**तद्वदेव च ॥ १३ ॥**

**पेश्यस्थिसन्धिकोष्ठेषु नष्टम्,**

तेन मांसप्रनष्टेन तुल्यं वर्तते। यथा क्षुद्ध्या कर्शनात् श्लथतां गतं क्षोभाद्रागादिभिर्लक्षयेदिति।

**अस्थिषु लक्षयेत्।**

**अस्थ्नामभ्यञ्जनस्वेदबन्धपीडनमर्दनैः ॥ १४ ॥**

**प्रसारणाकुञ्चनतः सन्धिनष्टं तथाऽस्थिवत्।**

अस्थिषु नष्टं शल्यमस्थ्नामभ्यञ्जनस्वेदनबन्धनपीडनमर्दनैः प्रसारणाऽऽकुञ्चनतो लक्षयेत्। सन्धिनष्टं शल्यमस्थिनष्टवल्लक्षयेत्।

**नष्टे स्नायुसिरास्रोतोधमनीष्वसमे पथि ॥ १५ ॥**

**अश्वयुक्तं रथं खण्डचक्रमारोप्य रोगिणम्।**

**शीघ्रं नयेत्ततस्तस्य संरम्भाच्छल्यमादिशेत्॥ १६ ॥**

स्नायुसिरास्रोतोधमनीषु नष्टे शल्येऽसमे पथि विषमे मार्गे रथमारोप्य रोगिणं शल्यवन्तं शीघ्रं नयेदाश्विव देशान्तरं प्रापयेत्। किम्भूतं रथम्? खण्डं चक्रं यस्य स खण्डचक्रस्तं खण्डचक्रम्। ततस्तस्य रथस्य संरम्भात् क्षोभाच्छल्यमादिशेल्लक्षयेत्।

**मर्मनष्टं पृथङ्नोक्तं, तेषां मांसादिसंश्रयात्।**

मर्मनष्टं शल्यं पृथङ्नाभिहितम्। कुतः? तेषां मर्मणां मांसादावेव प्राङ्निर्दिष्टो यतः संश्रयो न तु पृथङ्मर्माणि विद्यन्ते। तथा च सङ्ग्रहे—मर्मप्रनष्टेऽप्यनन्यभावान्मांसादिभ्यो मर्मणामुक्तं परीक्षणं भवतीति।

एवं विशेषेण नष्टशल्यलक्षणमुक्त्वा सामान्येन नष्टशल्यं लक्षयितुमाह—

**सामान्येन शल्यं तु क्षोभिण्या क्रियया सरुक् ॥ १७ ॥**

सामान्येन सशल्यं तु क्षोभिण्या क्रियया संरम्भोत्पादकेन कर्मणा श्वसनप्राणायामादिकेन यत्सरुक्स्थानं तत्सशल्यं जानीयात्।

**वृत्तं पृथु चतुष्कोणं त्रिपुटं च समासतः।**

**अदृश्यशल्यसंस्थानं व्रणाऽऽकृत्या विभावयेत्॥ १८ ॥**

वृत्तं वर्तुलम्। पृथु पार्श्वाभ्यां यत्परिच्छिद्यते। चतुष्कोणं चतुरस्रम्। त्रिपुटं त्र्यस्रम्। समासतः संक्षेपेणाऽदृश्यस्यानुपलब्धस्य शल्यस्य संस्थानमाकृतिं व्रणाकृत्या व्रणसंस्थानेन विभावयेद्विद्यात्।

अथुनैषामाकर्षणोपायं निरूपयन्नाह—

**तेषामाहरणोपायौ प्रतिलोमाऽनुलोमकौ।**

तेषामदृश्यानां शल्यानामाकर्षणोपायौ द्वौ प्रतिलोमाऽनुलोमकौ। प्रतिलो-

मः शरीरान्तःप्रवेशविपर्ययः । अनुलोमः शरीरान्तःप्रवेशानुगतः ।

प्रतिलोमानुलोमयोर्विनिर्हरणविषयमाह—

**अर्वाचीनपराचीने निर्हरेत्तद्विपर्ययात् ॥ १६ ॥**

तयोः प्रतिलोमाऽनुलोमयोर्विपर्ययस्तद्विपर्ययस्तस्माद्विपर्ययादर्वाचीनपराचीने निर्हरेत् । प्रतिलोमेऽर्वाचीनमानयेदनुलोमे पराचीनमानयेदित्यर्थः ।

**सुखाहार्यं यतश्छित्त्वा ततस्तिर्यग्गतं हरेत् ।**

तिर्यग्गतं शल्यं यतो यस्माद्देहदेशाच्छित्त्वा विलुण्ठ्य सुखाहार्यं सम्पद्यते सुखेनाऽऽहर्तुं शक्यते ततस्तस्माद्देहदेशाच्छित्त्वोद्धरेत् । छित्त्वेत्यत्र यद्यपि कर्म किञ्चिन्न निर्दिष्टं तथाऽपि त्वङ्मांसादीनां योग्यत्वात्तेषामेव कर्मत्वं बोध्यम् । मांसादि च्छित्त्वोद्धरेदित्यर्थः ।

**शल्यं न निर्घात्यमुरःकक्षवङ्क्षणपार्श्वगम् ॥ २० ॥**
**प्रतिलोममनुत्तुण्डं छेद्यं पृथुमुखं च यत् ।**

शल्यमुरोगतमुरःस्थं कक्षस्थं वङ्क्षणस्थं पार्श्वस्थं न निर्घात्यं तन्न निर्घातनीयम् । तथा प्रतिलोममननुलोमगतं तथाऽनुत्तुण्डं बाह्ये बुद्बुदवन्नोन्नतं तथा छेद्यं शल्यं न निर्घात्यमहार्यम् । तथा पृथुमुखं विस्तीर्णाननं च न निर्घातनीयम् ।

न च सर्वमेव शल्यमाहरणीयमित्याह—

**नैवाहरेद्विशल्यघ्नं नष्टं वा निरुपद्रवम् ॥ २१ ॥**

विशल्यं हन्तीति विशल्यघ्नम् । तावज्जीवति यावत्सशल्यः । शल्यापाये तु म्रियते तन्नाहरेदेव । विशल्यस्य प्राणहरत्वात् । एतत्स्वरूपं च मर्मभागे स्पष्टं कृत्वा वक्ष्यते । नष्टं वेति वाशब्दश्चार्थे । नष्टमदृश्यतां प्राप्तं च यन्निरुपद्रवं तन्निमित्तरोगरहितं नाहरेत् । प्रत्यवायभयात् ।

**अथाऽऽहरेत्करप्राप्यं करेणैव,**

करप्राप्यं हस्तप्राप्यं शल्यं करेणैवाऽऽहरेन्नापरेण कङ्कमुखादिना ।

**इतरत्पुनः ।**
**दृश्यं सिंहाहिमकरवर्मिकर्कटकाननैः ॥ २२ ॥**

इतरदकरप्राप्यं तु शल्यं दृश्यं सिंहमुखादिभिर्यन्त्रैराहरेत् ।

**अदृश्यं व्रणसंस्थानाद् ग्रहीतुं शक्यते यतः ।**
**कङ्कभृङ्गाह्वकुररशरारीवायसाननैः ॥ २३ ॥**

अदृश्यं पुनः शल्यं व्रणस्य संस्थानादाकलय्य कङ्कमुखादिभिर्ग्रहीतुं शक्यते यतस्ततस्तच्छस्त्रैर्हरेत् । यत्तदोर्नित्यसम्बन्धात्तदो लाभः ।

**सन्दंशाभ्यां त्वगादिस्थम्,**

त्वगादिस्थं शल्यं सन्दंशाभ्यां निर्हरेत् । आदिग्रहणात्त्वक्सिरास्नायुमांसादीनां ग्रहणम् ।





**तालाभ्यां शुषिरं हरेत् ।**

शुषिरं यच्छल्यं त्वगादिस्थं तत्तालाभ्यां हरेन्न सन्दंशाभ्याम् ।

**शुषिरस्थं तु नलकैः,**

शुषिरस्थं पुनः शल्यं नलकैर्नाडीयन्त्रैराकर्षेत् ।

**शेषं शेषैर्यथायथम् ॥ २४ ॥**

शेषं शल्यं शेषैर्यन्त्रैर्यथायोगमाहरेत् ।

**शस्त्रेण वा विशस्याऽऽदौ ततो निर्लोहितं व्रणम् ।**
**कृत्वा घृतेन संस्वेद्य बद्ध्वाऽऽचारिकमादिशेत् ॥ २५ ॥**

शस्त्रेण वा पूर्वं विशस्य मांसादींश्छित्त्वा ततोऽनन्तरमपनीतरक्तं व्रणं विधाय सर्पिषा स्वेदयित्वा वस्त्रपट्टादिना सर्पिर्मधु बद्ध्वा, आचारिकं स्नेहविध्युक्तमुष्णोदकोपचारी स्यादित्यादिकमादिशेत् कथयेत् ।

**सिरास्नायुविलग्नं तु चालयित्वा शलाकया ।**

सिरास्नायुविलग्नं पुनः शल्यं शलाकया चालयित्वा शिथिलीकृत्याहरेत् ।

**हृदये संस्थितं शल्यं त्रासितस्य हिमाम्बुना ॥ २६ ॥**
**ततः स्थानान्तरं प्राप्तमाहरेत्तद्यथायथम् ।**

हृदये यदाश्रितं शल्यं तच्छीतजलेन त्रासितस्य स्थानान्तरगतं ज्ञात्वा यथायथं यथास्वं विशिष्टयन्त्रैर्निर्हरेत् ।

**यथामार्गं दुराकर्षमन्यतोऽप्येवमाहरेत् ॥ २७ ॥**

अन्यतोऽप्यन्यदेशस्थमपि शल्यं दुराकर्षं दुःखेनाऽऽक्रष्टुं शक्यते तत्स्वमार्गं नयेत्, तदेवमेवाहरेत् । यथा हृदयस्थं शल्यं स्थानान्तरं प्राप्तं निर्हार्यं तथा यथामार्गं मार्गानतिक्रमेणान्यदेशस्थमपि शल्यमाकर्षणीयम् ।

**अस्थिदष्टे नरं पद्भ्यां पीडयित्वा विनिर्हरेत् ।**

अस्थिदष्टेऽस्थ्नि दष्टे स्पष्टे सति शल्ये नरं बलवन्तं पद्भ्यां पीडयित्वा आक्रम्य तच्छल्यं विनिर्हरेत् । 'अस्थिनष्ट' इति वा पाठः ।

**इत्यशक्ये सुबलिभिः सुगृहीतस्य किङ्करैः ॥ २८ ॥**

इत्यशक्येऽनेनाऽपि प्रकारेणाऽऽक्रष्टुमशक्ये शल्ये, किङ्करैर्भृत्यैर्महाबलैः सुगृहीतस्य सुष्ठ्ववष्टब्धस्य नरस्य शल्यं, वैद्यः कङ्कमुखादिना निर्हरेत् ।

**तथाऽप्यशक्ये वारङ्गं वक्रीकृत्य धनुर्ज्यया ।**
**सुबद्धं वक्त्रकटके बध्नीयात्सुसमाहितः ॥ २९ ॥**
**सुसंयतस्य पञ्चाङ्ग्या वाजिनः कशयाऽथ तम् ।**
**ताडयेदिति मूर्धानं वेगेनोन्नमयन् यथा ॥ ३० ॥**
**उद्धरेच्छल्यं ,**

तथाप्यशक्य एवमपि शल्य आहर्तुमशक्ये वारङ्गं शस्त्रादिमयस्य शल्यस्य

शिखाकारं तद्वक्रीकृत्य कुटिलतां प्रापय्य, ततो धनुर्ज्यया स्नाय्वादिमय्या सुबद्धं कृत्वाऽनन्तरं वाजिनोऽश्वस्य वक्त्रकटके बध्नीयाद्वैद्यः । किम्भूतः ? सुसमाहितस्तद्गतमनाः । किम्भूतस्य वाजिनः ? सुसंयतस्य सुष्ठु शोभनं कृत्वा बद्धस्य । कथं सुसंयतस्य ? पञ्चाङ्गया पञ्चानामङ्गानां चतुर्णां पादानां मुखसहितानां समाहारः पञ्चाङ्गी बन्धविशेषस्तया पञ्चाङ्गया बद्धस्यानन्तरं वाजिनं कशया चर्मवध्र्या इत्येवं ताडयेत् । यथा स वाजी मूर्धानमुन्नमयन्नुत्क्षिपन् वेगेन बलेनाऽऽक्रान्त्या शल्यमुद्धरेत् ।

**एवं वा शाखायां कल्पयेत्तरोः ।**

अथवैवमनेन प्रकारेण वारङ्गं वक्रतां नीत्वा धनुर्ज्यया सुबद्धं सम्पाद्य सुसमाहितो भिषग्वृक्षस्य शाखामानमय्य धनुर्ज्यया सुबद्धं तस्यां बध्नीयाच्छल्याकर्षणार्थम् । अत्र च या शाखा किङ्करहस्तादिमुक्तमात्रोर्ध्वमुन्नमय्य मनाक् शल्यमुद्धरति तादृशी कल्पनीया ।

**बद्ध्वा दुर्बलवारङ्गं कुशाभिः शल्यमाहरेत् ॥ ३१ ॥**

दुर्बलं तनु वारङ्गं यस्य शल्यस्य तच्छल्यं कुशाभिर्वंशादिकंबिसाभिर्बद्ध्वा शल्यमाहरेत् ।

**श्वयथुग्रस्तवारङ्गं शोफमुत्पीड्य युक्तितः ।**

श्वयथुना ग्रस्तमाच्छादितं वारङ्गं यस्य शल्यस्य तच्छल्यमाहरेत् । कथम् ? युक्तितो यथा युज्यते तथा शोफमुत्पीड्योर्ध्वं पीडयित्वा ।

**मुद्गराहतया नाड्या निर्घात्योत्तुण्डितं हरेत् ॥ ३२ ॥**

उत्तुण्डितं शल्यं बुद्बुदवदभिमुखीभूतं नाड्या निर्घात्य चालयित्वा हरेत् । किम्भूतया ? मुद्गरेणाऽऽहतया मुद्गरग्रहणमुपलक्षणार्थम् । पाषाणादिभिरप्याऽऽहतयोत्तुण्डितमाहरेदिति वेद्यम् ।

**तैरेव चाऽऽनयेन्मार्गममार्गोत्तुण्डितं तु यत् ।**

तैरेव मुद्गरादिभिराहतैरमार्गेणोत्तुण्डितममार्गोत्तुण्डितं मार्गमानयेत् प्रापयेत् ।

**मृदित्वा कर्णिनां कर्णं नाड्यास्येन निगृह्य वा ॥ ३३ ॥**

कर्णः कर्णौ वा विद्येते येषां ते कर्णिनो भल्लादयस्तेषां कर्णं मृदित्वा भक्त्वा शल्यं निर्हरेत् । अथवा नाड्यास्येन नाडीमुखेन निगृह्य निर्हरेत् । 'नाडी पञ्चमुखच्छिद्रे'त्येवमादिग्रन्थनिर्दिष्टैर्नाडीयन्त्रैर्निर्हरेदित्यर्थः ।

**अयस्कान्तेन निष्कर्णं विवृतास्यमृजुस्थितम् ।**

अयस्कान्तेन लोहाकर्षकमणिविशेषेण निष्कर्णं शल्यं तथा विवृतमुखम्, ऋजु स्पष्टं कृत्वाऽवस्थितं निर्हरेत् ।

**पक्वाशयगतं शल्यं विरेकेण विनिर्हरेत् ॥ ३४ ॥**

पक्वाशये स्थितं शल्यं विरेचनैर्विशेषेण निर्हरेत् ।

**दुष्टवातविषस्तन्यरक्ततोयादि चूषणैः ।**



दुष्टवातादीनि चूषणैर्निर्हरेत्। चूषणैरिति बहुवचननिर्देशाच्छृङ्गादिभिरिति बोध्यम्।

**कण्ठस्रोतोगते शल्ये सूत्रं कण्ठे प्रवेशयेत्॥ ३५॥**
**बिसेनात्ते ततः शल्ये बिसं सूत्रं समं हरेत्।**

कण्ठस्रोतःस्थे शल्ये सूत्रं कार्पासादिजं बिसेन कण्ठे प्रवेशयेत्। बिससंलग्नं सूत्रं कृत्वा शल्यनिर्हरणाय प्रवेशयेदित्यर्थः। आत्ते गृहीते शल्ये बिससंलग्नेऽनन्तरं शल्यं बिससूत्रं समं तुल्यकालमाहरेत्।

**नाड्याऽग्नितापितां क्षिप्त्वा शलाकामप्स्थिरीकृताम्॥ ३६॥**
**आनयेज्जातुषं कण्ठात्,**

जातुषे शल्ये कण्ठस्रोतःप्रविष्टे तज्जातुषं शल्यं कण्ठादानयेत्। कथमित्याह—शलाकां कण्ठे क्षिप्त्वा। कथम्? नाड्या नाडीयन्त्रेण प्रक्षिप्य कण्ठदाहपरिहरणार्थम्। कीदृशीं शलाकाम्? अद्भिः स्थिरीकृतां निर्वापणद्वारेण। तां तथाविधां शलाकां कृत्वा नाड्यैव जातुषं शल्यं कण्ठादानयेदाकर्षयेत्। 'जातुषमित्यत्र त्रपुजतुनोः षुगित्यण् षुगागमश्च'।

**जतुदिग्धामजातुषम्।**

अजातुषं दारुवेणवादिमयं शल्यं कण्ठस्रोतःस्थितं जतुदिग्धां लाक्षालिप्तां शलाकामग्नितापितां नाड्या क्षिप्त्वा पूर्ववदपहरेत्। जतुदिग्धामित्युपलक्षणार्थम्। सिक्थादिदिग्धामपि। यथा शलाकया हर्तुं प्रयुज्यते तथा कृत्वेति वेद्यम्।

**केशोन्दुकेन पीतेन द्रवैः कण्टकमाक्षिपेत्॥ ३७॥**
**सहसा सूत्रबद्धेन वमतः,**

कण्टकं मत्स्यादिकमांससङ्गेन भुक्तं कण्ठस्रोतसि स्थितं द्रवैः पानीयादिभिः सह पीतेन। केशोन्दुकेनाऽऽक्षिपेत्। केशानां समूहः केशोन्दुकं तेन। किम्भूतेन केशोन्दुकेन? सूत्रबद्धेन सूत्रग्रथितेन। वमतो वमनमाचरतः। कण्टकमेकदेशसक्तसूत्रं सहसैवाऽऽक्षिपेत्। एवं च वमनद्रव्यसंस्कृतैर्द्रवैः केशोन्दुकं पातव्यमित्यवतिष्ठते।

**तेन चेतरत्।**

तेन कण्टकेनेतरत् केशोन्दुकं प्रमादपीतमाहरेत्। क्षतकण्ठश्च त्रिफलां मधुघृतसितोपेतामनुकण्ठं लिह्यात्। सुश्रुते चोक्तम्—"अस्थिशल्यमन्यद्वा तिर्यक्कण्ठासक्तमवेक्ष्य केशोन्दुकं दृढैकसूत्रबद्धं द्रवभक्तोपहितं पाययेदाकण्ठाच्च पूर्णकोष्ठं वामयेद्वमतश्च शल्यैकदेशसक्तं ज्ञात्वा सूत्रं सहसा त्वाक्षिपेत्। मृदुना वा दन्तधावनकूर्चकेनापहरेत् प्रणुदेद्वेति"।

**अशक्यं मुखनासाभ्यामाहर्तुं परतो नुदेत्॥ ३८॥**

मुखनासागतं शल्यं मुखनासाभ्यामाकृष्टुमशक्यमाहर्तुं यत्र शक्यते तत्परतो नुदेत्प्रकृतत्वान्मुखात् परतो नासायाश्च परतः। तस्माद्येनकेनचिदुपायेन कोष्ठं नयेदिति गम्यते।

**अप्पानस्कन्धघाताभ्यां ग्रासशल्यं प्रवेशयेत्।**



ग्रासः शल्यमिव ग्रासशल्यं कण्ठासक्तमन्तः कोष्ठान्तं नयेत्। कथम्? अपां पानमप्पानं तेन। तथा स्कन्धघातेन। स्कन्धस्य मुष्ट्या दिना हननं स्कन्धघातः।

**सूक्ष्माक्षिव्रणशल्यानि क्षौमबालजलैर्हरेत्॥ ३९॥**

अक्षिणी च व्रणश्च तत्र शल्यान्यक्षिव्रणशल्यानि सूक्ष्माणि च तान्यक्षिव्रणशल्यानि च सूक्ष्माक्षिव्रणशल्यानि तानि क्षौमादिभिर्निर्हरेत्। योग्यतावशात् कदाचित् क्षौमेन कौशेयेन कदाचिद्वालेन कदाचिज्जलेन च निर्हरेत्।

नदीतडागादिपतितस्याऽकस्मान्नरस्याऽवश्यं यज्जलमन्तरे प्रविशेत्तज्जलं शल्यवदन्तःस्थितं निर्हार्यमिति तदुपायं दर्शयितुमाह—

**अपां पूर्णं विधुनुयादवाक्शिरसमायतम्।**
**वामयेद्वाऽऽमुखं भस्मराशौ वा निखनेन्नरम्॥ ४०॥**

अपां पूर्णं नरं विधुनुयात्। किम्भूतम्? अवाक्शिरसमवागधः शिरो मूर्धा यस्य तम्। तथा आयतं दीर्घं कृत्वा। तथा तं नरं वामयेद्वैद्यः। अथवा आमुखं मुखं यावद्भस्मराशौ न्यसेत्। तथोक्तम्—"उदकपूर्णस्य चक्राद्यारोपणेनोदकनिःसारः कार्य इति"।

**कर्णेऽम्बुपूर्णे हस्तेन मथित्वा तैलवारिणी।**
**क्षिपेदधोमुखं कर्णं हन्याद्वा चूषयेत वा॥ ४१॥**

कर्णेऽम्बुना पूर्णे सति तैलवारिणी क्षिपेत्। किंकृत्वा? हस्तेन मथित्वा विलोड्य। तथाऽधोमुखं कर्णं हन्याद्वा। चूषयेच्छृङ्गादिभिः।

**कीटे स्रोतोगते कर्णं पूरयेल्लवणाम्बुना।**
**शुक्तेन वा सुखोष्णेन मृते क्लेदहरो विधिः॥ ४२॥**

कीटे पिपीलिकाशतपद्यादौ स्रोतःस्थिते तोदगौरववेदनादिभिरनुमिते कर्णं लवणाम्बुना पूरयेत्। अथवा शुक्तेन पूरयेत्। किम्भूतेन? सुखोष्णेन। मृते पुनस्तस्मिन् कीटे, क्लेदहरो विधिः कार्यः।

**जातुषं हेमरूप्यादिधातुजं च चिरस्थितम्।**
**ऊष्मणा प्रायशः शल्यं देहजेन विलीयते॥ ४३॥**

जातुषादिशल्यं देहजेनोष्मणा चिरं स्थितं प्रायशो विलीयते।

**मृद्वेणुदारुशृङ्गास्थिदन्तबालोपलानि च।**
**शल्यानि न विशीर्यन्ते शरीरे मृन्मयानि वा॥ ४४॥**

मृद्वेणुदार्वादिशल्यं देहोष्मणा न विलीयते। उपलशब्दस्य नपुंसकत्वं चिन्त्यम्।

**विषाणवेणवयस्तालदारुशल्यं चिरादपि।**
**प्रायो निर्भुज्यते तद्धि पचत्याशु पलासृजी॥ ४५॥**

विषाणादिशल्यं प्रायो देहजेनोष्मणा न विलीयते। अपि निर्भुज्यते पृथग्भवति। चिरादपि न पच्यते। कुत इत्याह। तद्यस्माद्विषाणादिशल्यं शीघ्रमेव

पलाशूजी पचति। अतो मांसरक्तपाकाद्देहजेन चोष्मणा प्रायो निर्भुज्यते।

**शल्ये मांसावगाढे च स देशो न विदह्यते।**
**ततस्तं मर्दनस्वेदशुद्धिकर्षणबृंहणैः ॥ ४६ ॥**
**तीक्ष्णोपनाहपानान्नघनशस्त्रपदाङ्कनैः।**
**पाचयित्वा हरेच्छल्यं पाटनैषणभेदनैः ॥ ४७ ॥**

मांसावगाढे मांसान्तर्निगूढे शल्ये सति यदि स देशो न विदह्यते न पच्यते। यत्र तु तिष्ठति शल्यं ततस्तं मर्दनेन स्वेदेन वा कदाचित् शुध्या वमनादिकया कदाचित्कर्षणेन कदाचिद् बृंहणेन कदाचित्तीक्ष्णोपनाहेन कदाचित्तीक्ष्णान्नपानेन। तीक्ष्णशब्दस्य प्रत्येकं सम्बन्धः। कदाचिद् घनशस्त्रपदाङ्कनैः। शस्त्रस्य पदानि। घनानि संहतानि च तानि शस्त्रपदानि च तेषामङ्कनं लक्षणं तैः। मर्दनादिभिरेकेन द्वाभ्यां सर्वैर्वा यथाक्रमं पूर्वं शल्यं पाचयित्वा ततः पाटनैर्व्रणभेदनैर्हरेत्।

**शल्यप्रदेशयन्त्राणामवेक्ष्य बहुरूपताम्।**
**तैस्तैरुपायैर्मतिमान् शल्यं विद्यात्तथाऽऽहरेत् ॥ ४८ ॥**

शल्यानि धातुविषाणवेणवादिजानि। प्रदेशास्त्वङ्मांसादयः। यन्त्राणि स्वस्तिकादीनि। तेषां बहुरूपतामवेक्ष्य नानाकारतां ज्ञात्वा तैस्तैरुपायैरुक्तानुक्तैर्विज्ञानसाधनैः कारणैर्मतिमान् भिषग् जानीयात्, शल्यं तथाऽऽकर्षेदिति। सङ्ग्रहे चोक्तम्—" व्रणे प्रसन्ने प्रान्तेषु नातिस्पर्शाऽसहिष्णुषु। अल्पे शोफे च तापे च निःशल्यमिति निर्दिशेद्"। इति शल्याहरणविधिः।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायामष्टाविंशोऽध्यायः ॥ २८ ॥

---

# एकोनत्रिंशोऽध्यायः।

अस्मादनन्तरं शस्त्रकर्मविध्यध्यायः प्रस्तूयते। यतोऽनन्तरातीतेऽध्याये 'शस्त्रेण वा विशस्याऽऽदा'वित्युक्तमतस्तस्यैव शस्त्रकर्मणो विधानं वक्तुं युक्तमित्याह—

**अथाऽतः शस्त्रकर्मविधिमध्यायं व्याख्यास्यामः।**

शस्त्रस्य कर्म शस्त्रकर्म शस्त्रावधारणाय क्रिया तस्य विधिरितिकर्तव्यता शस्त्रकर्मविधिस्तम्। शेषं पूर्ववत्।

अथ ग्रन्थारम्भे निर्देष्टुं युक्तस्याऽपि शस्त्रविधेः पश्चाद्यद्ययं शस्त्रकर्मविधिस्ततः शस्त्रकर्मग्रन्थ एवाऽदौ निर्देष्टुं युक्तः, ' प्राक्शस्त्रकर्मणश्चेष्टं भोजयेदन्नमातुरमित्यादि ' न तु ' व्रणः सञ्जायते प्राय इत्यादि '। तत्रोच्यते— शस्त्रकर्मविधेः पूर्वं विषयो निर्देष्टुं युक्तो यः शस्त्रकर्मविधिरुपाय इत्यस्यैव पूर्वमुपन्यासो युक्त इत्याह—

**व्रणः सञ्जायते प्रायः पाकाच्छ्वयथुपूर्वकात्।**



**तमेवोपचरेत्तस्माद्रक्षन्पाकं प्रयत्नतः ॥ १ ॥**
**सुशीतलेपसेकास्रमोक्षसंशोधनादिभिः।**

प्रायो व्रणः पाकात्सञ्जायते। किम्भूतात्? श्वयथुः पूर्वो यस्य पाकस्य स श्वयथुपूर्वकस्तस्मात्। श्वयथुपाकमतेरणाऽपि शस्त्राद्यभिघाताद्व्रणो जायत इति प्रायोग्रहणम्। यस्माच्छ्वयथुपूर्वकात्पाकाद्व्रणः सञ्जायतेऽतस्तमेव श्वयथुमुपचरेदुपक्रमेत्। किं कुर्वन्? पाकं प्रयत्नेन रक्षन्। कथम्? सुशीतलेपादिभिः। सुशीताभ्यां स्पर्शतो वीर्यतश्च लेपसेकाभ्यां तथाऽस्रमोक्षणेन तथा संशोधनेन वमनेन विरेचनेन वा। आदिग्रहणात्कषायपानघृतपानादीनां ग्रहणम्।

तस्य च शोफस्याऽऽमपच्यमानपाकाख्या अवस्थास्तिस्रो भवन्तीत्याह—

**शोफोऽल्पोल्पोष्णरुक् सामः सवर्णः कठिनः स्थिरः।**

आमो यः शोफः सः प्रमाणतोऽल्पस्तथाऽल्पोष्णस्तथाऽल्परुगल्पशूलस्तथा कठिनो न मृदुः पक्ववत्तथा स्थिरो न पक्ववच्चलः। 'स आमः साम इति सोऽचि लोपे चेत्पादपूरणमिति सुलोपः'।

**पच्यमानो विवर्णस्तु रागी बस्तिरिवाततः।**
**स्फुटतीव सनिस्तोदः साङ्गमर्दविजृम्भिकः ॥ ३ ॥**
**संरम्भाऽरुचिदाहोषातृड्ज्वरानिद्रतान्वितः।**
**स्त्यानं विष्यन्दयत्याज्यं व्रणवत्स्पर्शनाऽसहः ॥ ४ ॥**

स शोफः पच्यमानो विवर्णो न त्वक्समानवर्णः। तथा रागी लोहितवर्णः। तथा बस्तिरिवाततस्तब्धो वातपूर्णदतिवत्। छागादीनां मूत्रधारो बस्तिरित्युच्यते। तथा स्फुटतीव सनिस्तोदः सह निस्तोदेन वर्तते स निस्तोदः। नियतप्रबन्धप्रवृत्ता रुङ् निस्तोदो विच्छिन्ना तु शूलमित्युच्यते। साङ्गेत्यादि—अङ्गानां मर्दः क्षोभः सहाङ्गमर्दविजृम्भिकाभ्यां वर्तते साङ्गमर्दविजृम्भिकः। तथा संरम्भादिभिर्युतः। अन्वितशब्देन प्रत्येकं संरम्भादीनां सम्बन्धः। संरम्भो वाग्विषयातीतानां स्वसंवेद्यानामनेकरूपाणां साङ्गपीडनविघट्टनच्छेदनदंशनादीनां रुजां प्रादुर्भावः। सर्वाङ्गीणस्तीव्रो दाहः। अरतिमान् दाह ऊषा उच्यते। तथा स पच्यमानो घृतं स्त्यानमुपयुक्तं विलीनयति। तथा स्पर्शनं न सहते व्रणवत्।

**पक्वेऽल्पवेगता म्लानिः पाण्डुता वलिसम्भवः।**
**नामोऽन्तेषून्नतिर्मध्ये कण्डूशोफादिमार्दवम् ॥ ५ ॥**
**स्पृष्टे पूयस्य सञ्चारो भवेद्वस्ताविवाम्भसः।**

पक्वे सत्यल्पवेगता भवति, नतु संरम्भः। तथा म्लानिर्म्लानत्वम्। तथा पाण्डुत्वं। वलीनां चोद्भवः। तथाऽन्तेषु पर्यन्तेषु नामो निम्नत्वं, मध्य उन्नतिः। नामोऽन्तेष्वित्युक्त्यैव मध्य उन्नतत्वं लब्धमेव, पुनरुन्नतित्वग्रहणं त्वतिशयार्थम्। तेनोत्तुण्डत्वं गम्यते। तथा कण्ड्वादिमृदुत्वं स्यात्। तथा स्पृष्टे तस्मिन् सति

पूयस्य सञ्चारो भवति। बस्तेरन्तः स्थितस्य, यथाऽम्भसः सञ्चारः।

**शूलं नर्तेऽनिलाद्दाहः पित्ताच्छोफः कफोदयात्॥ ६॥**
**रागो रक्ताच्च पाकः स्यादतो दोषैः सशोणितैः।**

अनिलं विना शूलं न भवति। पित्तमन्तरेण दाहो न स्यात्। कफोदयाद्विना शोफो न स्यात्। शोफः कफादिति वक्तव्य उदयग्रहणं विशेषद्योतनार्थम्। रक्तादिति रक्तं विना रागस्य लौहित्यस्य सम्भवो न। तेन कफाधिकैः सर्वदोषैः शोणित-सहितैः श्वयथुपाकः स्यादिति गम्यते।

**पाकेऽतिवृत्ते शुषिरस्तनुत्वग्दोषभक्षितः॥ ७॥**
**वलीभिराचितः श्यावः शीर्यमाणतनूरुहः।**

पाके चातिवृत्तेऽतिक्रान्ते शुषिरोऽन्तस्थः शोफदेशः सम्पद्यते। तथा तनुस्त्व-गस्मिन् स तनुत्वक्। तथा दोषभक्षितः। दोषशब्देनेह पूय उच्यते। तेन भक्षित-त्वाच्छुषिरत्वं तनुत्वक्त्वं चाऽस्य। तथा वलीभिराचितो व्याप्तः। तथा श्यामवर्णः। तथा शीर्यमाणतनूरुहः पतद्रोमा।

**कफजेषु तु शोफेषु गम्भीरं पाकमेत्यसृक्॥ ८॥**
**पक्वलिङ्गं ततोऽस्पष्टं यत्र स्याच्छीतशोफता।**
**त्वक्सावर्ण्यं रुजोऽल्पत्वं घनस्पर्शत्वमश्मवत्॥ ९॥**
**रक्तपाकमिति ब्रूयात्तं प्राज्ञो मुक्तसंशयः।**

यद्यपि त्रिभिरेव दोषैः शोणितान्वितैः पाको जायते, तथाऽपि कफजेष्वित्युक्ते-रधिकतरकफेष्विति गम्यते। कफजेष्विति बहुवचननिर्देशाद्देहदेशबहुत्वाद्येषु देह-देशेषु कफो जायते, तेषु कफजेषु शोफेषु गम्भीरं दुर्लक्ष्यमतिशयेनान्तर्निगूढत्वाद-सृक् पाकमेति। अत एव पक्वलिङ्गं पक्वलक्षणमस्पष्टं दुर्लक्ष्यं स्यात्। यत्र शीत-गुणयोगाच्छीतश्चासौ शोफश्च तस्य भावः शीतशोफता। तथा त्वक्समानवर्णत्वम्। तथा रुजः स्तोकत्वम्। तथा घनस्पर्शत्वं निबिडस्पर्शता स्यादश्मवत्। हस्तादिना स्पृष्टे पाषाणतुल्यः स्पर्श उपलभ्यते। तं तथाभूतं श्वयथुपाकं रक्तपाकमित्येवं प्राज्ञो धीमान् ब्रूयान्न तु शोफं पक्वमिति कथयेत्। कथम्? मुक्तसंशयः शोणितपाको नाऽत्र शोफपाक इत्येवं वदेदित्यर्थः।

**अल्पसत्त्वेऽबले बाले पाके चाऽत्यर्थमुद्धते॥ १०॥**
**दारणं मर्मसन्ध्यादिस्थिते चाऽन्यत्र पाटनम्।**

अल्पसत्त्वे सति तथा दुर्बले तथा बाले, एतेषु जाते श्वयथौ तथा पाकाद्वात्यर्थ-मुद्धतेऽतिक्रान्ते च श्वयथौ, दारणं कार्यं, व्रणप्रतिषेधदृष्टैर्दारणद्रव्यैः। यथा— 'गुग्गुल्वतसिगोदन्तस्वर्णक्षीरीकपोतविट्। क्षारौषधानि क्षाराश्च पक्वशोफविदा-रणमिति'। न केवलमल्पसत्व इत्यादिके श्वयथौ दारणं कार्यं यावन्मर्मसन्ध्या-दिस्थितेऽपि। अन्यत्रेति दारणविषयानिर्दिष्टे स्थाने शस्त्रेण पाटनं कार्यम्।

**आमच्छेदे सिरास्नायुव्यापदोऽसृगतिस्रुतिः ॥ ११ ॥**
**रुजोऽतिवृद्धिर्दरणं विसर्पो वा क्षतोद्भवः ।**

आमस्य शोफस्य शस्त्रेण च्छेदे सति सिरास्नायुव्यापदो भवन्ति । तथाऽसृजोऽतिस्रावः स्यात् । तथा रुजाया अतिवृद्धिस्तथा विदरणं विसर्पो वा क्षतोत्थः स्यात्

**तिष्ठन्नन्तः पुनः पूयः सिरास्नाय्वसृगामिषान् ॥ १२ ॥**
**विवृद्धो दहति क्षिप्रं तृणोलपमिवानलः ।**

अन्तरतरे तु पूयस्तिष्ठन् सन् सिरादीन् दहति । कः कमिव ? अनलस्तृणोलपमिव ।

**यश्छिनत्त्याममज्ञानाद्यश्च पक्वमुपेक्षते ॥ १३ ॥**
**श्वपचाविव विज्ञेयौ तावनिश्चितकारिणौ ।**

यः पुरुषोऽज्ञानान्मोहादामं छिनत्ति । योऽपि पक्वमुपेक्षते न पाटयति । तौ नरौ श्वपचतुल्यावातुरव्यापादनात् । तद्व्यापादनं तु कुतो विधत्त इत्याह । अनिश्चितकारिणावसमीक्ष्यविधायिनौ यतः ।

**प्राक्शस्त्रकर्मणश्चेष्टं भोजयेदन्नमातुरम् ॥ १४ ॥**
**पानपं पाययेन्मद्यं तीक्ष्णं यो वेदनाऽक्षमः ।**

शस्त्रकर्मणा प्राक् पूर्वमातुरमिष्टमन्नं यद्व्रणोऽपथ्यमपि तद्बलाधानार्थं भोजयेत् । तथा यो वेदनाऽक्षमः शस्त्रव्यथामसहिष्णुस्तमातुरं मद्योचितं तीक्ष्णं तीव्रमदं मद्यं पाययेत् ।

**अन्यत्र मूढगर्भाश्ममुखरोगोदरातुरात् ॥ १५ ॥**

अश्मशब्देनाऽश्मरी गृह्यते । मूढगर्भादिभिर्य आतुरस्तं वर्जयित्वेष्टभोजनं मद्यपानं च कारयितव्यम् ।

एवं सति यत्स्यात्तदाह—

**न मूर्छत्यन्नसंयोगान्मत्तः शस्त्रं न बुध्यते ।**

न मूर्छत्यन्नसंयोगादन्नोपयोगान्न मुह्यति । तीक्ष्णमद्यपानान्मत्तः सन् शस्त्रं न्यस्तमङ्गे न बुध्यते न चेतयते । तत्कदर्थनया न कम्पत इत्यर्थः ।

**अथाऽऽहृतोपकरणं वैद्यः प्राङ्मुखमातुरम् ॥ १६ ॥**
**सम्मुखो यन्त्रयित्वाऽऽशु न्यस्येन्मर्मादि वर्जयन् ।**
**अनुलोमं सुनिशितं शस्त्रमापूयदर्शनात् ॥ १७ ॥**
**सकृदेवाऽऽहरेत्तच्च,**

अथशब्देन मङ्गलवाचिना सङ्ग्रहोक्तमर्थं सूचयति । यथा—"सुमुहूर्ते च दध्यक्षतान्नपानरुक्मरत्नार्चितविप्रं प्रणतेष्टदेवतमित्यादि" । आहृतं ढौकितं समीपानीतमुपकरणं तत्कालयोग्यं यन्त्रशस्त्राग्निजाम्बवौष्ठपिचुप्लोतस्नेहनमधुकल्कादिकं





यस्य तमातुरं प्राङ्मुखं पूर्वाभिमुखं वैद्यः सम्मुखः प्रत्यङ्मुखो यन्त्रयित्वा शस्त्रमाशु न विलम्बितं न्यस्येन्निक्षिपेत्। मर्मादि वर्जयन् मर्म सिरासन्ध्यादीन् परिहरन्। तथाऽनुलोमं कृत्वा न प्रातिलोम्येन। किम्भूतं शस्त्रम् ? सुनिशितमतितीक्ष्णम्। तच्च शस्त्रमापूयदर्शनादाहरेन्न त्वधिकं तत्रैव स्थाप्यम्। तच्च सकृदेव न बहून् वारान्न्यस्येत्।

**पाके तु सुमहत्यपि।**
**पाटयेद् द्व्यङ्गुलं सम्यग्द्व्यङ्गुलत्र्यङ्गुलान्तरम्॥ १८॥**
**एषित्वा सम्यगेषिण्या परितः सुनिरूपितम्।**
**अङ्गुलीनालबालैर्वा यथादेशं यथाशयम्॥ १९॥**

पाके तु सुमहत्यपि पाटयेत्। द्व्यङ्गुलं द्व्यङ्गुलपरिमाणं व्रणं सम्यक्कुर्यान्नाऽधिकम्। द्व्यङ्गुलेत्यादि—अङ्गुलद्वयमथवाऽङ्गुलत्रयमन्तरीकृत्य पुनरन्यं व्रणं कुर्यान्न त्वासन्नम्। तथैषिण्या सम्यगेषित्वा परितः समन्तात्सुनिरूपितं सुपर्यालोचितम्। न केवलमेषिण्या यावदङ्गुल्या नालेन पद्मोत्पलादिजेन बालैर्वा वराहादिसम्बन्धिभिरन्वेष्य यथादेशं यथाशयं व्रणं कुर्यात्।

तं च प्रदेशं दर्शयितुमाह—

**यतो गतां गतिं विद्यादुत्सङ्गो यत्र यत्र च।**
**तत्र तत्र व्रणं कुर्यात्सुविभक्तं निराशयम्॥ २०॥**
**आयतं च विशालं च यथा दोषो न तिष्ठति।**

यतो यस्मिन्प्रदेशे गतां दूरयातां गतिं नाडीं जानीयात्तस्मिन् प्रदेशे व्रणं कुर्यात्। यत्र यत्र श्वयथुप्रदेश उत्सङ्गमुन्नतिं विद्यात्तत्र तत्र प्रदेशे व्रणं कुर्यात्। किम्भूतं व्रणम् ? सुष्ठु विभक्तौ पार्श्वाऽपरपार्श्वादिविभागौ यस्य तं तथाविधम्। तथा निराशयम्, न विद्यत आशयः पूयादेर्दोषस्य स्थानं यस्य तथाभूतं निराशयं कुर्यात्। तथाऽऽयतं दीर्घम्। तथा विशालं विस्तीर्णं कुर्यात्। एवं कृते सति, दोषः पूयाख्यो न तिष्ठति न संस्थानं लभते।

**शौर्यमाशुक्रिया तीक्ष्णं शस्त्रमस्वेदवेपथू॥ २१॥**
**असंमोहश्च वैद्यस्य शस्त्रकर्मणि शस्यते।**

वैद्यस्य शस्त्रकर्मणि पाटनादौ शौर्यं धैर्यं शस्यते। तथा आशुक्रिया चतुरहस्तता। तथा तीक्ष्णं शस्त्रम्। तथा स्वेदश्च वेपथुश्च न विद्यमानौ तौ यस्य स एवम्। स्वेदाभावः कम्पाभावश्चेत्यर्थः। असंमोहस्तत्कालोचितकार्यकरणे सम्यक्प्रवृत्तिः। ननु शौर्यं वैद्यस्य शस्यत इत्युक्त्यैव स्वेदकम्पाभावौ प्रत्यपादि। तथा च स्वेदवेपथू भीरोरेव सम्भवतो न शूरस्येत्यनर्थकमस्वेदवेपथुरिति ? अत्राऽऽचक्ष्महे—

मौ० टि०–१ अस्वेदवेपथुर्वा पाठोऽरुणदत्तसम्मतः, किन्तु न स साधीयान्, प्रथमान्तवैद्यशब्दस्य तत्र विशेष्यत्वेनाऽविद्यमानात्।



सत्यमेवैतौ भीरुगुणौ, किन्तूष्णकालवशात् प्रकृतिवशाद्वा यस्य स्वेदो वेपथुश्च भवतस्तत्परिहारार्थमेतदुक्तम्। सस्वेदस्य हि वैद्यस्य शस्त्रकर्म कर्तुमुद्यतस्य शस्त्रग्रहणमेव न तथा सम्पद्यते तद्वत्सकम्पस्याऽपि। तस्मात्तत्परिहारो युक्तः।

तिर्यक्छिन्द्याल्ललाटभ्रूदन्तवेष्टकजत्रुणि ॥ २२ ॥
कुक्षिकक्षाक्षिकूटौष्ठकपोलगलवङ्क्षणे।

ललाटादिदेशेषु तिर्यक्छेदः कार्यः। दन्तवेष्टको दन्तपिण्डिका दन्ताधार उच्यते।

अन्यत्र छेदनात्तिर्यक् सिरास्नायुविपाटनम् ॥ २३ ॥

अन्यत्र प्रदेशे तिर्यक्छेदनात् सिराणां स्नायूनां च व्यापत्तिः स्यात्।

शस्त्रेऽवचारिते वाग्भिः शीताम्भोभिश्च रोगिणम्।
आश्वास्य, परितोऽङ्गुल्या परिपीड्य व्रणं ततः ॥ २४ ॥
क्षालयित्वा कषायेण प्लोतेनाम्भोऽपनीय च।
गुग्गुल्वगुरुसिद्धार्थहिङ्गुसर्जरसान्वितैः ॥ २५ ॥
धूपयेत्पटुषड्ग्रन्थानिम्बपत्रैर्घृतप्लुतैः।

शस्त्रेऽवचारिते न्यस्ते सति वाग्भिस्तत्कालोचिताभिर्मधुराभिः 'स्वस्थो जातोऽसी'त्येवंप्रायाभिस्तथा शीताम्भोभिः परिषेकादिभिरातुरमाश्वास्याऽनन्तरं व्रणं परितः समन्तादङ्गुल्या परिपीड्य पूयादिदोषनिर्हारायाऽनन्तरं कषायेण मधुयष्ट्यादिसाधितेन क्षालयित्वा ततः प्लोतेन कार्पासादिजवस्त्रखण्डेन जलमपनीय पानीयार्द्रतां निर्हृत्याऽनन्तरं व्रणं गुग्गुल्वादिभिर्निम्बपत्रान्तैर्धूपयेत्। किम्भूतैः? घृतप्लुतैः। प्लुतग्रहणाद्बहुघृतैरिति द्योतयति। सङ्ग्रहे चोक्तम्—'गुग्गुल्वादिभिरेवं शयनासनादि द्विरह्नो धूपयेदिति'।

तिलकल्काज्यमधुभिर्यथास्वं भेषजेन च ॥ २६ ॥
दिग्धां वर्तिं ततो दद्यात्तैरेवाऽऽच्छादयेच्च तम्।

ततोऽनन्तरं वर्तिं कार्पासादिमयीं व्रणान्तः प्रवेशयेद्वैद्यः। किम्भूताम्? दिग्धाम्। कैः? तिलकल्काज्यमधुभिः। वातव्रणे तिलपिष्टदिग्धां, पित्तव्रणे घृतदिग्धां, कफव्रणे मधुदिग्धाम्। केचित्तु सर्वैरेव तैर्युगपद्दिग्धामित्याहुः। न च केवलं तिलादिभिर्यावद्यथास्वं यद्यस्य दोषस्य स्वं भेषजं तेन च दिग्धाम्। तैरेव तिलकल्कादिभिर्व्रणान्तःप्रविष्टां तां वर्तिमाच्छादयेत्स्थगयेत्।

घृताक्तैः सक्तुभिश्चोर्ध्वम्,

ऊर्ध्वं तदुपरिष्टाद् घृतयुक्तैः सक्तुभिराच्छादयेत्। सङ्ग्रहे चोक्तम्—"नातिभृष्टयवसक्तुभिर्घृताक्तैर्भोजनान्तेऽम्भसा दक्षिणाङ्गुलाभिः सुमृदितैरवच्छाद्येति।

घनां कवलिकां ततः ॥ २७ ॥
निधाय युक्त्या बध्नीयात्पट्टेन सुसमाहितम्।
पार्श्वे सव्येऽपसव्ये वा नाऽधस्तान्नैव चोपरि ॥ २८ ॥



ततो व्रणान्तःप्रविष्टवर्तिच्छादनानन्तरं कवलिकां बहुवस्त्रखण्डपुटनिर्वर्तितां निधाय संस्थाप्य, पट्टेन निबिडवस्त्रखण्डेन प्रकृतत्वाद् व्रणं बध्नीयात् । कथम् ? युक्त्या दोषकालानुगुणया । अत एव सङ्ग्रहे जगाद—"वातश्लेष्मोद्भवांस्तत्र द्विस्त्रिर्वा वेष्टयेद् व्रणान् । सकृदेव परिक्षिप्य पित्तरक्ताभिघातजान्" । तथोक्तम्—"शस्त्रक्षतरुजायां तु प्रततायां यष्टीमधुकसर्पिषोष्णेन व्रणं सिञ्चेत् । उदकुम्भादापो गृहीत्वा प्रोक्षन् परित इति" कथं बध्नीयात् ? सुसमाहितं कृत्वा च, न हेलया । वामपार्श्वे दक्षिणपार्श्वे वाऽधस्ताच्च न बध्नीयान्नैव चोपर्यूर्ध्वं बध्नीयात् ।

**शुचिसूक्ष्मदृढाः पट्टाः कवल्यः सविकेशिकाः ।**
**धूपिता मृदवः श्लक्ष्णा निर्वलीका व्रणे हिताः ॥ २६ ॥**

तथा शुचयः सूक्ष्मसूत्रा दृढाश्च पट्टा हिताः । तथा कवलिकाः सविकेशिकाश्च व्रणे हिताः । किम्भूताः ? धूपितास्तथा मृदवस्तथा श्लक्ष्णास्तथा वलीरहिताः ।

**कुर्वीताऽनन्तरं तस्य रक्षां रक्षोनिषिद्धये ।**
**बलिं चोपहरेत्तेभ्यः,**

अनन्तरं रोगिणः कृतशस्त्रकर्मणो व्रणे रक्षां कुर्यात् । किमर्थम् ? रक्षोनिषिद्धये पिशिताशनरक्षसादिनिषेधाय । तेभ्यश्च रक्षोभ्यो बलिमुपहरेद्दद्यात् ।

**सदा मूर्ध्नाऽवधारयेत् ॥ ३० ॥**
**लक्ष्मीं गुहामतिगुहां जटिलां ब्रह्मचारिणीम् ।**
**वचां छत्रामतिच्छत्रां दूर्वां सिद्धार्थकानपि ॥ ३१ ॥**

सर्वकालं चौषधीर्मूर्ध्ना धारयेत् । ता एवाह—लक्ष्मीमित्यादि । लक्ष्मीं पद्मचारिणीम् । गुहां पृश्निपर्णीम् । अतिगुहां शालिपर्णीम् । जटिलां मांसीम् । ब्रह्मचारिणीं ब्रह्मयष्टिकाम् । वचामुग्रगन्धाम् । छत्रां शतपुष्पाम् । अतिच्छत्रां विषाणिकाम् ।

**ततः स्नेहदिनेहोक्तं तस्याऽऽचारं समादिशेत् ।**

ततोऽनन्तरं तस्य व्रणिन आचारमादिशेत् । कतमम् ? स्नेहदिनेहोक्तम् । स्नेहस्य दिनं स्नेहदिनं स्नेहपानोपलक्षितमहस्तत्रेहा चेष्टा तस्यामुक्तं स्नेहपानविध्युपदिष्टमुष्णोदकोपचारी स्यादित्यादिकम् ।

**दिवास्वप्नो व्रणे कण्डूरागरुक्शोफपूयकृत् ॥ ३२ ॥**

दिवास्वप्नो व्रणे कण्ड्वादिकृत् । तस्माद् व्रणिनाऽहःस्वप्नो न सेव्यः ।

**स्त्रीणां तु स्मृतिसंस्पर्शदर्शनैश्चलितस्रुते ।**
**शुक्रे, व्यवायजान् दोषानसंसर्गेऽप्यवाप्नुयात् ॥ ३३ ॥**

स्त्रीणां तु स्मृतिसंस्पर्शदर्शनैः पूर्वं स्वस्थानाच्चलितं पश्चात्स्रुतं तस्मिंश्चलितस्रुते शुक्रे सत्यसंसर्गेऽपि तासामसम्बन्धेऽपि मैथुनमन्तरेणाऽपि व्यवायजान्मैथुनोत्थान् दोषानवाप्नुयात् । तस्मात्स्त्रीस्मरणसंस्पर्शदर्शनादि वर्जनीयमित्यर्थः ।

भोजनं तु यथासात्म्यं यवगोधूमषष्टिकाः।
मसूरमुद्गतुवरीजीवन्तीसुनिषण्णकाः ॥ ॥ ३४ ॥
बालमूलकवार्ताकतण्डुलीयकवास्तुकम्।
कारवेल्लककर्कोटपटोलकटुकाफलम् ॥ ३५ ॥
सैन्धवं दाडिमं धात्री घृतं तप्तहिमं जलम्।
जीर्णशाल्योदनं स्निग्धमल्पमुष्णं द्रवोत्तरम् ॥ ३६ ॥
भुञ्जानो जाङ्गलैर्मांसैः शीघ्रं व्रणमपोहति।

भोजनं तु यथासात्म्यं यद्यस्य सात्म्यं यवादि । तथा जीवन्त्यादिशाकं च तथा सैन्धवादिकम्। पुराणशालिभक्तं स्निग्धं सस्नेहं तथाऽल्पं जाङ्गलैर्मांसैः सह-भुञ्जान उष्णोदकोत्तरं यथा भवत्येवं व्रणी शीघ्रं व्रणमपोहति।

अशितं मात्रया काले पथ्यं याति जरां सुखम् ॥ ३७ ॥
अजीर्णे त्वनिलादीनां विभ्रमो बलवान् भवेत्।
ततः शोफरुजापाकदाहानाहानवाप्नुयात् ॥ ३८ ॥

मात्रया काले भुक्तं पथ्यं सुखेन जरां याति। तस्मात् पथ्यं मात्रया काले भोक्तव्यम्। अजीर्णे तु कथञ्चिन्न कार्यम्। यतोऽजीर्णाद्वातादीनां बलवान् विभ्रमः क्षोभः स्यात्। तस्मात्क्षोभाच्छोफादीन् प्राप्नुयात्।

नवधान्यं तिलान् माषान् मद्यं मांसं त्वजाङ्गलम्।
क्षीरेक्षुविकृतीरम्लं लवणं कटुकं त्यजेत् ॥ ३९ ॥
यच्चाऽन्यदपि विष्टम्भि विदाहि गुरु शीतलम्।
वर्गोयं नवधान्यादिर्व्रणिनः सर्वदोषकृत् ॥ ४० ॥

नवधान्यादि त्यजेत्। यतोऽयं नवधान्यादिवर्गो व्रणिनः सर्वान् दोषान् करोति सङ्ग्रहे चोक्तम्—'नवधान्यं विष्टम्भि माषकलायकुलत्थनिष्पावशिम्बीशीताम्बुमद्ये-क्षुक्षीरपिष्टतिलविकृतिशुष्कशाकपिशितहरितकाऽम्ललवणकटुकक्षारानूपामिषाणि वर्जयेदिति"। शीतलं शीताम्ब्वादि।

मद्यं तीक्ष्णोष्णरूक्षाम्लमाशु व्यापादयेद् व्रणम्।

मद्यं तीक्ष्णोष्णादिगुणं द्राग्व्रणं व्यापादयेत्। तस्मान्मद्यमीदृशं वर्ज्यं नापरम्। तथा च तन्त्रान्तरे—'सस्नेहं मधुरप्रायं नातितीक्ष्णमकर्कशम्। तनु यत्सुख-पेयं च मार्द्वीकेषु तदुत्तममित्युक्तम्'। तस्मान्मार्द्वीकादिप्रायं रोध्रासवादिकं वा यन्मद्यं तत्सात्म्यत्वाकिञ्चित्पेयमेव।

बालोशीरैश्च वीज्येत न चैनं परिघट्टयेत् ॥ ४१ ॥
न तुदेन्न च कण्डूयेच्चेष्टमानश्च पालयेत्।
स्निग्धवृद्धद्विजातीनां कथाः शृण्वन्मनःप्रियाः ॥ ४२ ॥
आशावान् व्याधिमोक्षाय क्षिप्रं व्रणमपोहति।



बालोशीरैश्चैनं वृणां वीजयेत्। न चैनं परिघट्टयेत्। तथा न व्यथयेत्। नापि कण्डूयेत्। व्यापारं च कुर्वन् वृणिनं पालयेद्रक्षेत्। तथा स्निग्धादीनां कथाश्चित्तप्रिया आकर्णयन् रोगमुक्तये विहिताशोऽह्नाय वृणमपोहति।

**तृतीयेऽह्नि पुनः कुर्याद् व्रणकर्म च पूर्ववत्॥ ४३॥**
**प्रक्षालनादि दिवसे द्वितीये नाचरेत्,**

तृतीये दिवसे पुनरपि प्रक्षालनादि कर्म पूर्ववत् पूर्वेण वृणकर्मणा तुल्यं कुर्यात्. द्वितीये तु दिवसे प्रक्षालनादि नाचरेत्।

किमित्याह—

**तथा।**
**तीव्रव्यथो विग्रथितश्चिरात्संरोहति व्रणः॥ ४४॥**

तथा तेन प्रकारेण वृणस्तीवृव्यथः सम्पद्यति। तथा विग्रथितः स प्रदेशो बहुभिर्ग्रन्थिभिर्युक्तः स्यात्। तथा चिराच्चिरेण संरोहं याति रूढः सम्पद्यते।

**स्निग्धां रूक्षां श्लथां गाढां दुर्न्यस्तां च विकेशिकाम्।**
**व्रणे न दद्यात्कल्कं च,**

वृणे वृणाख्य आधारे स्निग्धादिगुणयुक्तां विकेशिकां वृणान्तःप्रवेशयोग्यां वर्तिं न दद्यात्। श्लथां शिथिलां, गाढां निबिडां, दुर्न्यस्तां विषमन्यस्ताम्। अत्र चातिशब्दोऽर्थवशाद्गम्यमानो बोध्यत एव। सङ्ग्रहे स्पष्टं कृत्वोवाच—" अतिस्नेहात्क्लेद इति "। कल्कमप्यतिस्निग्धादिगुणयुक्तं वृणे न योजयेत्। ' पिष्टमौषधं द्रवाप्लुतं कल्क इत्युच्यते '।

किमिति स्निग्धादिगुणयुक्तां विकेशिकां कल्कं वा न दद्यादित्याह—

**स्नेहात्क्लेदो विवर्धते॥ ४५॥**

यतः स्नेहात् क्लेदवृद्धिः।

**मांसच्छेदोऽतिरुग्रौक्ष्याद्दरणं शोणितागमः।**
**श्लथातिगाढदुर्न्यासैर्वृणवर्त्मावघर्षणम्॥ ४६॥**

अतिरूक्षत्वाच्च मांसच्छेदोऽतिव्यथा दरणम्। तथा विशेषाद्रक्तस्रावश्च। श्लथादिगुणयुक्तेन च वृणमार्गस्याऽवघर्षणं स्यात्।

विकेशिका वृणे कस्माद्दीयत इत्याह—

**सपूतिमांसं सोत्सङ्गं सगतिं पूयगर्भिणम्।**
**व्रणं विशोधयेच्छीघ्रं स्थिता ह्यन्तर्विकेशिका॥ ४७॥**

विकेशिका वृणान्तरे स्थिता पूत्यादियुक्तं वृणं विशोधयेद्यतस्तस्माद् वृणेऽसौ योज्या। उत्सङ्ग उन्नतिः। पूयादिभक्षितमांसादिप्रदेशः शून्यो वृणस्य गतिरुच्यते। पूयश्चासौ गर्भश्च च विद्यते यस्य स पूयगर्भी तम्।

**व्यम्लं तु पाटितं शोफं पाचनैः समुपाचरेत्।**



**भोजनैरुपनाहैश्च नातिव्रणविरोधिभिः ॥ ४८ ॥**

व्यम्लं विदग्धम्, अपक्वं व्रणं पक्वमितिज्ञानात्पाटितम् । तथाविधैः श्वयथुपाचनैरन्नपानैस्तथाविधैश्चोपनाहैः साल्वणकिण्वादिकाल्पितैरुपाचरेत् । न च सर्वैरेवाऽविशेषातैरुपाचरेदित्याह—नातीत्यादि । न व्रणातिविरोधीन्यतिश्वयथुपाचनान्यम्लकटुकतीक्ष्णोष्णलवणप्रायाणि द्रव्याणि तथैवंप्रायाणि भोजनानि तैरुपचारैरपि तु किञ्चिदेव व्रणविरोधीनि यानि तैरुचितैरुपक्रमेदिति बोध्यम् । नातिशब्दप्रयोगात् ।

**सद्यः सद्योव्रणान् सीव्येद्विवृतानभिघातजान् ।**
**मेदोजान् लिखितान् ग्रन्थीन् ह्रस्वाः पालीश्च कर्णयोः ॥ ४९ ॥**
**शिरोऽक्षिकूटनासौष्ठगण्डकर्णोरुबाहुषु ।**
**ग्रीवाललाटमुष्कस्फिङ्मेढ्रपायूदरादिषु ॥ ५० ॥**
**गम्भीरेषु प्रदेशेषु मांसलेष्वचलेषु च ।**

सद्योव्रणानभिघातजान् विस्तीर्णमुखान् सद्यस्तत्क्षणादेव सीव्येत् । सङ्कुचितवदनास्तु ते न सीव्याः । अभिघाताज्जन्म येषां ते । सद्योव्रणानित्यभिघातजेष्वपि चिरकालस्थितेषु नायं विधिरिति द्योतयति । मेदोजान् ग्रन्थीनालिख्य सूच्या सीव्येत् ।

**न तु वङ्क्षणकक्षादावल्पमांसचले व्रणान् ॥ ५१ ॥**
**वायुनिर्वाहिणः शल्यगर्भान्क्षारविषाग्निजान् ।**

वङ्क्षणादिस्थितानां व्रणानां गम्भीरादिप्रवेशत्वात्सीवनं प्राप्तं तन्निषिध्यते । मांसलेषु स्थिरेषु च व्रणान् सीव्येदित्युक्त्यैवाऽल्पमांसे चले स्थाने व्रणान्न सीव्येदित्यर्थे लब्धेऽल्पमांसांश्चलांश्च व्रणान्न सीव्येदिति वचनमतिशयार्थम् । जातुचिदभिघातजान्विवृतानप्येवंविधान् व्रणान्न सीव्येदिति गमयति । तथा वायुं निर्वहन्ति निःश्वसन्ति तान् वायुनिर्वाहिणो न सीव्येत् । तथा शल्यं गर्भे येषां तान् शल्यगर्भांस्तथा क्षारविषाग्निभ्यो जातान् व्रणान्न सीव्येत् ।

सीवनात्पूर्वं यत्क्रियते तद्दर्शयति—

**सीव्येच्चलास्थिशुष्कास्रतृणरोमापनीय तु ॥ ५२ ॥**
**प्रलम्बि मांसं विच्छिन्नं निवेश्य स्वनिवेशने ।**
**सन्ध्यस्थ्यवस्थिते रक्ते स्नाय्वा सूत्रेण वल्कलैः ॥ ५३ ॥**
**सीव्येन्न दूरे नाऽऽसन्ने गृह्णन्नाऽल्पं न वा बहु ।**

स्थानाच्चलितमस्थ्यपनीय निरस्य तथा शुष्करक्तं तृणानि रोमाणि चाऽपास्य तथा शस्त्रादिना प्रकर्षेण लम्बि व्रणे यद्वियते मांसं तत्स्वनिवेशन आत्मीये स्थाने निवेश्य संस्थाप्य सन्ध्यस्थि स्वे स्थाने संस्थाप्य स्थिते रक्तेऽस्रवद्रूपत्वं प्राप्ते सति व्रणं सीव्येत् । केन ? स्नाय्वादिना तथा वल्कलैः । वल्कलान्यश्मन्तकादित्वगुद्भवानि, तैः । कथं सीव्येत् ? न दूरे न विप्रकृष्टे, न चासन्ने नाऽतिनिकटे,

नाल्पं व्रणांशं गृह्णन्, नच बहु गृह्णन्।

**सान्त्वयित्वा ततश्चार्तं व्रणे मधुघृतद्रुतैः ॥ ५४ ॥**
**अञ्जनक्षौमजमषीफलिनीशल्लकीफलैः ॥**
**सरोध्रमधुकैर्दिग्धे युञ्ज्याद्बन्धादि पूर्ववत् ॥ ५५ ॥**

ततः सीवनादनन्तरमातुरं सान्त्वयित्वा समाश्वास्य शीताम्बुस्पर्शव्यजनादिभिरनन्तरमुक्तैर्लिप्ते व्रणे सति। कैः? अञ्जनादिभिः। किम्भूतैः? मधुघृताभ्यां द्रुतैरालोडितैः। पूर्ववद्बन्धादि युञ्ज्यात्। 'तृतीयान्ताद्वतिः'। पूर्वोद्दिष्टेन कर्मणा तुल्यं कषायक्षालनादि कवलिकादिकं योजयेदित्यर्थः।

**व्रणो निःशोणितौष्ठो यः किञ्चिदेवावलिख्य तम्।**
**सञ्जातरुधिरं सीव्येत्सन्धानं ह्यस्य शोणितम् ॥ ५६ ॥**

अविद्यमानशोणितौष्ठो यः स्यात्तमेवंभूतं व्रणं किञ्चिदेवेषन्मात्रमेव शस्त्रेणावलिख्य ततः सञ्जातरुधिरं सन्तं सीव्येन्न त्वेवमेव। यस्मादस्य व्रणस्य सन्धानं शोणितमेव।

**बन्धनानि तु देशादीन् वीक्ष्य युञ्जीत तेषु च।**

बध्यते व्रण एभिरिति बन्धनान्याविकाजिनादीनि तेषु व्रणेषु देशकालसात्म्यादीन् वीक्ष्य निरूप्य यथायोगमाविकाद्यन्यतमं युञ्ज्यात्।

तेषां च बन्धनानां स्वरूपमाह—

**आविकाजिनकौशेयमुष्णं क्षौमं तु शीतलम् ॥ ५७ ॥**
**शीतोष्णं तूलसन्तानकार्पासस्नायुवल्कजम्।**

अविरेव अविकस्तस्येदमाविकम्। 'अवेः क इति कस्तस्येदमित्यण्'। अजिनं चर्म। कोशात्सम्भूतं कौशेयम्। 'कोशाड्ढञिति ढञ्'। आविकादिकं बन्धनत्रयमुष्णवीर्य्यम्। क्षौमं तु बन्धनं शीतलं शीतवीर्यम्। तूलसन्तानदिजं शीतोष्णमुभयस्वभावम्। तूलं शाल्मलादिजं, तस्य सन्तानः सन्ततिः सूत्ररूपता, तेन निष्पादितम्।

**ताम्रायस्त्रपुसीसानि व्रणे मेदःकफाधिके ॥ ५८ ॥**
**भङ्गे च युञ्ज्यात्फलकं चर्मवल्ककुशादि च।**

मेदःकफाधिके व्रणे ताम्रादीनि लेखनार्थं युञ्ज्यात्। भङ्ग इत्यादि। न केवलं ताम्रादीनि मेदःकफाधिके व्रणे युञ्ज्याद्यावच्च शब्दात्तानि भङ्गेऽपि युञ्ज्यात्। नच केवलं भङ्गे ताम्रादीनि युञ्ज्याद्यावत्फलकादि च युञ्ज्यात्। कुशाशब्देन वंशादिकम्बिकोच्यते।

अधुना बन्धप्रकारान्निर्दिशति—

**स्वनामानुगताकारा बन्धास्तु दश पञ्च च ॥ ५९ ॥**
**कोशस्वस्तिकमुत्तोलीचीनदामानुवेल्लितम्।**



**खट्वाविबन्धस्थगिकावितानोत्सङ्गगोफणाः ॥ ६० ॥**
**यमकं मण्डलाख्यं च पञ्चाङ्गी चेति योजयेत्।**
**यो यत्र सुनिविष्टः स्यात्तं तेषां तत्र बुद्धिमान् ॥ ६१ ॥**

स्वं च तन्नाम च स्वनाम तेनानुगतोऽनुबद्ध आकारः संस्थानविशेषो येषां ते पञ्चदश बन्धा वक्ष्यमाणाः । तुशब्दोऽवधारणार्थः । पञ्चदशैवेति न न्यूनाः । कोशादयः पञ्चाङ्ग्यन्तास्तेषां बन्धानां मध्ये या बन्धविशेषो यत्र यस्मिन्देहदेशे सुनिविष्टो भवेत्तं बन्धं कोशादिकं तत्र तस्मिन्देशे योजयेत्। तत्र कोशोऽङ्गुली-पर्वसु चर्मादिकृतः। स्वस्तिकं सन्धिकूर्चभ्रूस्तनान्तरकक्षाक्षिकपोलकर्णेषु । मुत्तोली ग्रीवामेढ्रयोः। चीनमपाङ्गयोः। दाम सन्धिवङ्क्षणादौ। अनुवेल्लितं शाखासु। खट्वा हनुसन्धिगण्डेषु। विबन्धमुदरोरुपृष्ठेषु। स्थगिकाङ्गुष्ठाङ्गुलीमेढ्रान्त्रमूत्रवृद्धिषु। वितानं मूर्धादौ पृथुलाङ्गे। उत्सङ्गमङ्गविशेषे लम्बिनि बाह्वादौ । गोफणः नासौष्ठचिबुकसक्थिषु। यमकं यमलव्रणयोः । मण्डलं वृत्तेऽङ्गे । पञ्चाङ्गी जत्रूर्ध्वमिति योजना कार्या ।

सम्प्रत्येषां बन्धानां गाढशिथिलादिबन्धत्वं देशाद्यनुरोधान्निरूपयति ।

**बध्नीयाद्गाढमूरुस्फिक्कक्षवङ्क्षणमूर्धसु ।**

ऊरुस्फिगादिषु देशेषु गाढं बध्नीयान्न तु श्लथम् ।

**शाखावदनकर्णोरःपृष्ठपार्श्वगलोदरे ॥ ६२ ॥**
**समं मेहनमुष्के च,**

शाखावदनादिषु समं बध्नीयात्। चशब्दान्मेहने मुष्कयोश्च सममेव ।

**नेत्रे सन्धिषु च श्लथम्।**

नेत्रे नयने तथा सन्धिषु शिथिलं बध्नीयात्।

**बध्नीयाच्छिथिलस्थाने वातश्लेष्मोद्भवे समम् ॥ ६३ ॥**
**गाढमेव समस्थाने भृशं गाढं तदाश्रये।**

यत्र शिथिलस्थाने शिथिलो बन्ध उपदिष्टस्तत्र स्थाने यौ व्रणौ वातश्लेष्मोद्भवौ तौ समं कृत्वा बध्नीयान्न गाढं न शिथिलम् । यत्र स्थाने समो बन्ध उपदिष्टस्तत्र स्थाने वातश्लेष्मोद्भवौ व्रणौ गाढमेव बध्नीयात्। भृशमित्यादि तदित्यनेन गाढाशयः परामृश्यते। गाढबन्धोद्दिष्टे स्थाने वातश्लेष्मोद्भवौ व्रणौ भृशं सुतरां गाढं बध्नीयात्।

**शीते वसन्ते च तथा मोक्षणीयौ त्र्यहात्त्र्यहात् ॥ ६४ ॥**

तौ वातश्लेष्मोद्भवौ व्रणौ शीते हेमन्तशिशिराख्ये काले वसन्ते च त्र्यहात्त्र्यहात्त्रिदिनमन्तरीकृत्य मोक्षणीयौ मोक्षितव्यौ—इत्यर्थः।

**पित्तरक्तोत्थयोर्बन्धो गाढस्थाने समो मतः।**





**समस्थाने श्लथो नैव शिथिलस्याशये तथा ॥ ६५ ॥**

पित्तरक्तोत्थयोर्गाढबन्धस्थाने समो बन्धो मतो न शिथिलः। समस्थाने समो बन्धो यत्रोपदिष्टः शाखावदनादौ तत्रस्थयोः पित्तरक्तोत्थयोर्व्रणयोः शिथिलो बन्धः कार्यः। शिथिलस्य बन्धस्याऽऽशये यत्र शिथिलो बन्धः कार्य इत्युक्तं तत्र नैव बन्धः कार्य इत्येवकारोऽवधारणार्थः कृतः ।

**सायं प्रातस्तयोर्मोक्षो ग्रीष्मे शरदि चेष्यते।**

तयोः पित्तरक्तोत्थयोः सायं प्रातर्द्वौ कालौ मोक्ष इष्यते। ग्रीष्मे शरदि चाऽन्यदोषोत्थव्रणस्याऽपि सायंप्रातर्मोक्ष इष्यते ।

ननु बन्धेन विना व्रणो धार्य इत्याह—

**अबद्धो दंशमशकशीतवातादिपीडितः ॥ ६६ ॥**
**दुष्टीभवेच्चिरं चाऽत्र न तिष्ठेत्स्नेहभेषजम्।**
**कृच्छ्रेण शुद्धिं रूढिं वा याति रूढो विवर्णताम् ॥ ६७ ॥**

अबद्धो व्रणो दंशादिभिः पीडितो व्यथितस्तथा आदिशब्दाद्रजोधूमादिभिर्व्यथितोऽदुष्टोऽपि व्रणो दुष्टीभवति । अत्र च व्रणे बन्धमन्तरेण व्रणघ्नः स्नेह उपयोजितो भेषजं वा योजितं चिरं न तिष्ठेत् । बन्धं च विना सम्यगुपचर्यमाणोऽपि व्रणः कष्टेन शुद्धिं याति रूढिं च कृच्छ्रेण याति। रूढोऽपि सन्विवर्णतां याति न शरीरवर्णतामित्यबन्धनाद्दोषाः ।

इदानीं बन्धनाद्गुणानाह—

**बद्धस्तु चूर्णितो भग्नो विश्लिष्टः पाटितोऽपि वा ।**
**छिन्नस्नायुसिरोऽप्याशु सुखं संरोहति व्रणः ॥ ६८ ॥**
**उत्थानशयनाद्यासु सर्वेहासु न पीडयेत्।**

तुरवधारणे । बद्ध एव व्रणो बन्धनमाहात्म्याच्चूर्णितोऽस्थिसमाश्रितो व्रणस्तथा भग्नोस्थिसमाश्रित एव व्रणस्तथा विश्लिष्टः सन्धिस्थानादन्यस्थानगतो व्रणो नेत्रादिस्तथा पाटितः सर्वदेशस्थितोऽपि तथा छिन्नस्नायुसिरोऽप्याशु व्रणः सुखं सम्यग्रोहति तथोत्थानशयनाद्यासु सर्वास्वीहासु चेष्टासु न पीडयेन्न व्यथयेत् ।

**उद्धृत्तौष्ठः समुत्सन्नो विषमः कठिनोऽतिरुक् ॥ ६९ ॥**
**समो मृदुररुक् शीघ्रं व्रणः शुध्यति रोहति ।**

ऊर्ध्वं वृत्तौ वर्तुलावोष्ठौ यस्य स उद्वृत्तौष्ठो न समः । तथा समुत्सन्नः समन्तादुत्सन्न उन्नतो यो व्रणो न समः । तथा विषम उद्वृत्तौष्ठसमुत्सन्नाभ्यां व्यतिरिक्तो विषमसंस्थानः । तथा कठिनो यो व्रणो न मृदुः । तथाऽतिरुग्यो व्रणः । स सर्व उद्वृत्तौष्ठादिपञ्चप्रकारोऽपि बन्धमाहात्म्यादशुभरूपतां हित्वा व्रणः शीघ्रं शुद्धिं याति रोहति । ननूद्वृत्तौष्ठसमुत्सन्नावपि विषमशब्देनैव ग्रहीष्येते किमिताभ्यामुपात्ताभ्याम् ? अस्त्येवैतत्, किन्त्वनयोः पृथङ्निर्देशेनाऽतिदुश्चिकित्स्यतरत्वं गमयति।

**स्थिराणामल्पमांसानां रौक्ष्यादनुपरोहताम् ॥ ७० ॥**
**प्रच्छाद्यमौषधं पत्रैर्यथादोषं यथर्तु च ।**
**अजीर्णतरुणाच्छिद्रैः समन्तात्सुनिवेशितैः ॥ ७१ ॥**
**धौतैरकर्कशैः क्षीरिभूर्जार्जुनकदम्बजैः ।**

स्थिराणां व्रणादीनां दीर्घकालानुबन्धिनां तथाऽल्पमांसानामनुपचितपललाना-मत एव हेतोस्तथा रौक्ष्यादनुपरोहतां रूढिमगच्छतामौषधं कल्कस्नेहादिकं यदुप-युज्यते तत्पत्रैः क्षीरिभूर्जार्जुनकदम्बजैः प्रच्छाद्यं स्थगितव्यं यथादोषं दोषानति-क्रमेण ऋत्वनतिक्रमेण च तद्वशाद्यथायोगम् । यथा वातव्रणे शीततौ स्निग्धोष्णैः, पित्तव्रणे घर्मकाले शीतस्वभावैः, कफव्रणे उष्णकाले रूक्षोष्णप्रायैः । एवं साधारणे-ऽपि काले मिश्रदोषे च कल्पनीयम् । किम्भूतैः पत्रैः ? अजीर्णान्यजर्जराणि तरु-णानि प्रत्यग्राण्यच्छिद्राणि छिद्ररहितानि तैरजीर्णतरुणाच्छिद्रैः । तथा समन्ता-त्सुनिवेशितैः । तथा धौतैर्जलादिना निर्मलीकृतैः । तथाऽकर्कशैरकठिनैः ।

**कुष्ठिनामग्निदग्धानां पिटिकामधुमेहिनाम् ॥ ७२ ॥**
**कर्णिकाश्चोन्दुरुविषे क्षारदग्धा विषान्विताः ।**
**न मांसपाके च बध्नीयाद् गुदपाके च दारुणे ॥ ७३ ॥**
**शीर्यमाणाः सरुग्दाहाः शोफावस्थाविसर्पिणः ।**

कुष्ठ्यादीनां ये व्रणास्ते न बन्धनीयाः । तथोन्दुरुविषे याः कर्णिकाः कोठ-रूपास्ताश्च न बध्नीयात् । तथा क्षारदग्धा ये व्रणास्ते न बन्धनीयाः । तथा मांस्पाके व्रणास्तथा दारुणे च गुदपाके व्रणास्ते न बन्धनीयाः । 'मांस्पाक इति मांसस्य पचि युग्घञोरित्यलोपः' । तथा शीर्यमाणाः शदनावस्थां भजमानाः । तथा सरु-ग्दाहास्तथा शोफावस्थाः, अनेकावस्थां भजन्तोऽपि ये शोफावस्थावस्थितास्तथा विसर्पिणो विसर्पावस्थास्थिता ये व्रणास्ते च न बन्धनीयाः ।

इदानीं सकृमीणां व्रणानां चिकित्सामाह—

**अरक्षया व्रणे यस्मिन् मक्षिका निक्षिपेत्कृमीन् ॥ ७४ ॥**
**ते भक्षयन्तः कुर्वन्ति रुजाशोफास्रसंस्रवान् ।**

अरक्षयाऽपालनेन यस्मिन् व्रणे मक्षिका कृमीन्निक्षिपेत् । ते तत्रस्थाः कृमयो व्रणं भक्षयन्तो रुजादीन् कुर्वन्ति ।

**सुरसादि प्रयुञ्जीत तत्र धावनपूरणे ॥ ७५ ॥**
**सप्तपर्णकरञ्जार्कनिम्बराजादनत्वचः ।**
**गोमूत्रकल्कितो लेपः सेकः क्षाराम्बुना हितः ॥ ७६ ॥**
**प्रच्छाद्य मांसपेश्या वा व्रणं तानाशु निर्हरेत् ।**

तत्र तस्मिन् व्रणे सुरसादिगणं धावने पूरणे च तन्निमित्तं प्रयुञ्जीत । धावनं च पूरणं च तस्मिन् । तथा तस्मिन्व्रणे सप्तपर्णादीनां त्वचो गोमूत्रकल्कितः पिष्ट-

लेपो हितः । तथा क्षाराम्बुना सेको हितः । अथवा मांसपेश्या व्रणं प्रच्छाद्य पिधाय तान् कृमीनाशु निर्हरेत् ।

**न चैनं त्वरमाणोऽन्तः सदोषमुपरोहयेत् ॥ ७७ ॥**
**सोऽल्पेनाऽप्यपचारेण भूयो विकुरुते यतः ।**

नचैनं व्रणमन्तःसदोषं त्वरमाणो वैद्य उपरोहयेत् । कस्मादित्याह—स इत्यादि । यतो यस्मात्सोऽन्तःस्थितदोषो व्रणो रूढोऽपि भूयः पुनस्तोकेनाऽप्यपचारेण विकृतिं याति ।

**रूढेऽप्यजीर्णव्यायामव्यवायादीन् विवर्जयेत् ॥ ७८ ॥**
**हर्षं क्रोधं भयं वापि यावदास्थैर्यसम्भवात् ।**
**आदरेणानुवर्त्योऽयं मासान्षट् सप्त वा विधिः ॥ ७९ ॥**

रूढेऽपि सत्यजीर्णादीन् विवर्जयेत् । अयमजीर्णव्यायामादिपरिवर्जनलक्षणो विधिः षट् सप्त वा मासानादरेण रक्षणीयः ।

**उत्पद्यमानासु च तासु तासु वार्तासु दोषादिबलानुसारी ।**
**तैस्तैरुपायैः प्रयतश्चिकित्सेदालोचयन् विस्तरमुत्तरोक्तम् ॥ ८० ॥**

तासु तासु वार्तास्ववस्थास्वनिर्दिष्टस्वरूपाभिधानासूत्पद्यमानासु जायमानासु तैस्तैरुक्तैरुपायैः साधनैश्चिकित्सेद्वैद्यः । यथा मक्षिकाभिः कृमिनिक्षेपात्कृमिप्राबल्ये जाते चिकित्सा विहिता । किम्भूतो वैद्यः ? दोषादिबलानुसारी दोषादीनां बलं दोषादिबलम्, आदिग्रहणाद्देशकालादयो गृह्यन्ते । तदनुसरत्येवंविधो यो वैद्यः । तथा प्रयतो यत्नपरः । तथोत्तर उत्तरतन्त्रे व्रणभङ्गविधान उक्तं निर्दिष्टं विस्तरमालोचयन् निरूपयन्न तु यदृच्छयेति भावः । 'इन्द्रवज्रा वृत्तम्' ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायामेकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

# त्रिंशोऽध्यायः ।

अतोऽनन्तरं क्षाराग्निकर्मविधिरारभ्यते यथैव हि शस्त्रेण पाटनादीनि कृत्वा तत्साध्य आमय उपक्रम्यते तथैव क्षाराग्निभ्यामित्याह—

**अथातः क्षाराग्निकर्मविधिमध्यायं व्याख्यास्यामः ।**

क्षारश्चाऽग्निश्च क्षाराग्नी, तयोः कर्म क्षाराग्निकर्म, तस्य विधिः । शेषं पूर्ववत् । क्षारस्य बाह्याभ्यन्तरोपयोगित्वेन पूर्वमुपन्यासः ।

**सर्वशस्त्रानुशस्त्राणां क्षारः श्रेष्ठः,**

सर्वाणि च तानि शस्त्राण्यनुशस्त्राणि च तान्येवं तेषां सर्वशस्त्रानुशस्त्राणां मध्ये क्षारः श्रेष्ठो ज्यायान् ।



कुतोऽस्य श्रेष्ठतेत्याह—

बहूनि यत्।

छेद्यभेद्यादिकर्माणि कुरुते विषमेष्वपि ॥ १ ॥

दुःखावचार्यशस्त्रेषु तेन सिद्धिमयात्सु च।

अतिकृच्छ्रेषु रोगेषु यच्च पानेऽपि युज्यते ॥ २ ॥

यद्यस्माद्बहूनि छेद्यभेद्यादीनि कर्माण्यसौ करोति। आदिशब्देन लेखनपाटनादिपरिग्रहः। विषमेष्वपि देहदेशेषु। दुःखावचार्यशस्त्रेषु नासार्शोऽर्बुदादिषु। दुःखेनावचारयितुं शक्यं शस्त्रं येषु तेषु। अपिशब्दात्समेषु देहेषु युज्यते। तेन च शस्त्रेण सिद्धिमयात्स्वसिध्यत्सु दुष्टव्रणेषु बहुशः प्रकोपिषु। किम्भूतेषु ? अतिकृच्छ्रेष्वतिदुःखसाध्येषु। दुष्टव्रणेषु बहुशः रोगेष्वसौ क्षारो युज्यते, योग्यः सम्पद्यते ततोऽपि हेतोः क्षारः श्रेष्ठः। यच्चेति—यस्माच्च क्षारः पानविषयेऽपि युज्यते शरीरान्तःस्थितरोगशान्त्यै। अपिशब्दाद्बाह्येऽपि बाह्यरोगस्थितिशान्त्यै लेपे स युज्यते।

अधुना क्षारस्य पेयलेपविषयविभागं दर्शयति—

स पेयोऽर्शोऽग्निसादाश्मगुल्मोदरगरादिषु।

स क्षारः, अर्शःसु विषये पेयः। तथाऽग्निसादे तथाऽश्मर्यां गुल्मादिषु च। आदिग्रहणादानाहशूलादिषु च।

योज्यः साक्षान्मषश्वित्रबाह्यार्शःकुष्ठसुप्तिषु ॥ ३ ॥

भगन्दरार्बुदग्रन्थिदुष्टनाडीव्रणादिषु।

स क्षारो योज्यः साक्षाल्लेपनेन मषादिषु। आदिग्रहणाच्चर्मकीलाऽक्षिवर्त्मतिलकादिपरिग्रहः।

न तूभयोऽपि योक्तव्यः पित्ते रक्ते बलेऽबले ॥ ४ ॥

ज्वरेऽतिसारे हृन्मूर्धरोगे पाण्ड्वामयेऽरुचौ।

तिमिरे कृतसंशुद्धौ श्वयथौ सर्वगात्रगे ॥ ५ ॥

भीरुगर्भिण्यृतुमतीप्रोद्वृत्तफलयोनिषु।

अजीर्णेऽन्ने शिशौ वृद्धे धमनीसन्धिमर्मसु ॥ ६ ॥

तरुणास्थिसिरास्नायुसेवनीगलनाभिषु।

देशेऽल्पमांसे वृषणमेढ्रस्रोतोनखान्तरे ॥ ७ ॥

वर्त्मरोगादृतेऽक्ष्णोश्च शीतवर्षोष्णदुर्दिने।

पानलेपनभेदेन द्विविधोऽपि क्षारः पित्तादौ न योक्तव्यः। बले बलवति। अबले बलहीने। ज्वरे। अतिसारे। हृद्रोगे। मूर्धरोगे। पाण्ड्वामये पाण्डुरोगे। अरुचावरोचके। कृतसंशुद्धौ कृतवमनविरेके। श्वयथौ सर्वगात्रगे सर्वाङ्गोच्छूने। तथा भीरौ। गर्भिण्याम्। ऋतुमत्याम्। प्रोद्वृत्तफलयोनिर्वक्ष्यमाणा उत्तरतन्त्रे गुह्यरोगज्ञाने। प्रकर्षेणोद्वृत्तं फलं रजोरूपं यस्या योनेः सा प्रोद्वृत्तफलयोनिः। रज एव फलं



गर्भाख्यफलसाधनोपायत्वात् । प्रोद्वृत्तफलयोनेर्लक्षणमुक्तं यथा—'वेगोदावर्तना-योनिं प्रपीडयति मारुतः । स फेनिलं रजः कृच्छ्रादुदावृत्तं विमुञ्चति । इयं व्यापदुदावृत्तेत्यादि' । शिशौ बाले । वृद्धे गतवयसि । तथा धमन्यादिषु शरीरदेशेषु । देशेऽल्पमांसे स्वल्पपिशिते । तथा वृषणादिषु शरीरदेशेषु । तथाक्ष्णोर्नेत्रयोर्वर्त्मरोगं वर्जयित्वाऽन्यत्र क्षारो न प्रयोज्यः । वर्त्मरोगे तु क्षारो योज्य एव । शीतवर्षोष्णदुर्दिने न च योज्यः । शीतवर्षोष्णाहानि हेमन्तशिशिरप्रावृड्ग्रीष्माः । दुर्दिनं मेघाद्याकुलदिवसम् । एषु क्षारो न योज्यः ।

अधुना क्षारक्रियामाह—

कालमुष्ककशम्याककदलीपारिभद्रकान् ॥ ८ ॥
अश्वकर्णमहावृक्षपलाशास्फोतवृक्षकान् ।
इन्द्रवृक्षार्कपूतीकनक्तमालाश्वमारकान् ॥ ९ ॥
काकजङ्घामपामार्गमग्निमन्थाग्नितिल्वकान् ।
सार्द्रान् समूलशाखादीन् खण्डशः परिकल्पितान् ॥ १० ॥
कोशातकीश्चतस्रश्च शूकनालं यवस्य च ।
निवाते निचयीकृत्य पृथक्तानि शिलातले ॥ ११ ॥
प्रक्षिप्य मुष्ककचये सुधाश्मानि च दीपयेत् ।
ततस्तिलानां कुन्तालैर्दग्ध्वाऽग्नौ विगते पृथक् ॥ १२ ॥
कृत्वा सुधाश्मनां भस्म द्रोणं त्वितरभस्मनः ।
मुष्ककोत्तरमादाय प्रत्येकं जलमूत्रयोः ॥ १३ ॥
गालयेदर्धभारेण महता वाससा च तत् ।
यावत्पिच्छलरक्ताच्छस्तीक्ष्णो जातस्तदा च तम् ॥ १४ ॥
गृहीत्वा क्षारनिस्यन्दं पचेल्लौह्यां विघट्टयन् ।
पच्यमाने ततस्तस्मिंस्ताः सुधाभस्मशर्कराः ॥ १५ ॥
शुक्तिक्षारपङ्कशङ्खनाभीश्चाऽऽयसभाजने ।
कृत्वाऽग्निवर्णान् बहुशः क्षारोत्थे कुडवोन्मिते ॥ १६ ॥
निर्वाप्य पिष्ट्वा तेनैव प्रतीवापं विनिक्षिपेत् ।
श्लक्ष्णं शकृद्दक्षशिखिगृध्रकङ्ककपोतजम् ॥ १७ ॥
चतुष्पात्पक्षिपित्ताऽऽलमनोह्वालवणानि च ।
परितः सुतरां चाऽतो दर्व्या तमवघट्टयेत् ॥ १८ ॥
सबाष्पैश्च यदोत्तिष्ठेद् बुद्बुदैर्लेहवद्घनः ।
अवतार्य ततः शीतो यवराशावयोमये ॥ १९ ॥
स्थाप्योऽयं मध्यमः क्षारः,

कालमुष्ककः मोक्षः । अश्वकर्णः कुंशिकः । महावृक्षः स्नुही । आस्फोतो गिरि-

कर्णिका। वृक्षको नन्दीवृक्षः। इन्द्रवृक्षः कुटजः। पूतीकः पूतीकरञ्जः। नक्तमालः करञ्जः। अश्वमारः करवीरः। कालमुष्ककादीन् मूलादिसहितान् खण्डं खण्डं कल्पितान् परश्वादिना छिन्नान्। तथा कोशातकीश्वतस्रो यवस्य च शूको नालो द्रव इव यो भवति तांश्च निवाते देशे शिलातले शिलापृष्ठे पृथङ्मुष्ककादीन्निचयीकृत्य मुष्ककचये च सुधाश्मानि सुधाशर्कराः प्रक्षिप्य दीपयेज्ज्वालयेत्। कैः? तिलानां कुन्तालैः प्रलालैः काण्डैः। सुधाश्मानि चेति नपुंसकत्वं चिन्त्यम्। पृथग्दीपनं चैषामचिन्त्यप्रभावम्। एवं तानि दग्ध्वाऽनन्तरमग्नौ विगते सुधाश्मनां भस्म द्रोणं पृथक्कृत्वा व्यस्तं संस्थाप्येतरभस्मनः शम्याकादिद्रव्यभस्मनो द्रोणमादाय गृहीत्वा। किंभूतं द्रोणम्? मुष्कक उत्तरोऽधिको यस्य तमादाय जलमूत्रयोः प्रत्येकमर्धभारेण तद्भस्म गालयेत्। कथं गालयेत्? महता विस्तीर्णेन वाससा। कियन्तं कालम्? यावत् क्षारनिष्यन्दः क्षारस्रावः पिच्छिलरक्ताच्छस्तथा तीक्ष्णो जातः सम्पन्नस्तदा तस्मिन्काले तं क्षारनिष्यन्दं गृहीत्वा लौह्यां स्नेहपाकविधिना पचेत्। किं कुर्वन्? दर्व्या कुण्डलसंज्ञया विघट्टयन्नालोडयन्। ततोऽनन्तरं तस्मिन्क्षारनिष्यन्दे पच्यमाने ताः स्थापिताः सुधाभस्मशर्करा या मुष्ककमध्ये प्रक्षिप्य दत्तास्तथा शुक्तीः प्राणिविशेषास्थीनि तथा क्षारपङ्कं प्रलेपकं खटिकासंज्ञं तथा शङ्खनाभीश्चाग्निवर्णान् कृत्वा क्षारोत्थे क्षारनिष्यन्दे पलाष्टकपरिमाणे क्वथितक्षारोत्थ आयसभाजने तीक्ष्णलोहपत्रगते बहून् वारान्निर्वाप्य शीतीकृत्य तेनैव क्षारनिष्यन्देन दृषदि पिष्ट्वा तस्मिन्पच्यमाने क्षारनिष्यन्दे प्रतीवापं विनिक्षिपेत्। 'द्रवद्रव्ये द्रव्यान्तरं श्लक्ष्णपिष्टं दीयते स प्रतीवाप उच्यते'। नच केवलमेष एव प्रतीवापत्वेन क्षेप्तव्यो यावद्दक्षादीनामपि शकृत् श्लक्ष्णं कृत्वा विनिक्षिपेत्। दक्षः कुक्कुटः। शिखी मयूरः। गृध्रः श्येनः। कङ्ककपोतकौ पक्षिणौ। तथा चतुष्पदां गवादीनां तथा पक्षिणां पित्तं तथा आलमनोह्वालवणानि च। आलं हरितालम्। मनोह्वा मनःशिला। लवणं सैन्धवादि। एतानि श्लक्ष्णानि कृत्वा प्रतीवापं विनिक्षिपेत्। अथ प्रतीवापादनन्तरं परितः समन्ताद्दर्व्याऽवघट्टयेत्। सबाष्पैरित्यादि—यदा यस्मिन् काले स क्षारनिष्यन्दः सबाष्पैः सोष्मभिर्बुद्बुदैर्घनो लेह इवोत्तिष्ठेदुद्गच्छेत्। सान्द्रतया पच्यमानः सन् लेहतुल्यो दर्वीप्रलेपी स्यादित्यर्थः। तदा तस्मिन् कालेऽवतार्याऽयोमये लोहभाण्डे स्थितो यवराशौ स्थाप्यः। किं कृत्वा? अवतार्य चुल्लीतः। तथा शीतः सन्। अयं मध्यमः क्षारः।

**न तु पिष्ट्वा क्षिपेन्मृदौ।**

**निर्वाप्यापनयेत्,**

मृदौ क्षारे सुधादीनि निर्वाप्य तस्मिन्निष्यन्दे प्रक्षिप्यैवापनयेद्विसर्जयेन्न तु पिष्ट्वा विनिक्षिपेत्।

**तीक्ष्णे पूर्ववत् प्रतिवापनम्॥ २०॥**



**तथा लाङ्गलिकादन्तिचित्रकातिविषावचाः ।**
**स्वर्जिकाकनकक्षीरिहिङ्गुपूतीकपल्लवाः ॥ २१ ॥**
**तालपत्री बिडं चेति सप्तरात्रात्परं तु सः ।**
**योज्यः,**

तीक्ष्णे क्षारे पूर्ववन्मध्यमक्षारतुल्यं प्रतिवापनं निर्वाप्य पिष्ट्वा विनिक्षिपेदिति । नचैतावदेवाऽत्र प्रतिवापनमित्याह—तथेत्यादि । लाङ्गलिकादीनि बिडपर्यन्तानि च तत्र प्रतिवापं विनिक्षिपेत् । सप्तरात्रात्परमनन्तरं स क्षारो योज्यः ।

इति क्षारंत्रैविध्यमुक्त्वा विषयं निर्दिदिक्षुराह—

**तीक्ष्णोऽनिलश्लेष्ममेदोजेष्वर्बुदादिषु ॥ २२ ॥**

तीक्ष्णः क्षारो वातश्लेष्ममेदःसमुत्थेष्वर्बुदादिषु याज्यः । महत्स्वेव योज्यः । मध्येषु क्षारान्तरविधानम् । आदिग्रहणादन्येष्वपि तत्साध्येषु रोगेष्वयं क्षारो योज्यः ।

**मध्येष्वेव च मध्यः,**

एष्वेवाऽनिलकफमेदोजेषु विकारेष्वर्बुदादिषु मध्येषु नोत्कृष्टेषु नाऽपि हीनेषु मध्यः क्षारो योज्यः ।

**अन्यः पित्तास्रगुदजन्मसु ।**

अन्यो मृदुः क्षारः पित्तरक्तसमुत्थेष्वर्शःसु योज्यो न तीक्ष्णमध्यौ क्षारौ ।

**बलार्थं क्षीणपानीये क्षाराम्बु पुनरावपेत् ॥ २३ ॥**

तस्मिन् क्षारे क्षीणपानीये घनीभूते क्षारे बलाधानार्थं पुनर्भूयः क्षाराम्बु क्षारविधिस्रुतं जलमावपेद्दद्यात् ।

अधुना क्षारगुणानाह—

**नातितीक्ष्णो मृदुः श्लक्ष्णः पिच्छिलः शीघ्रगः सितः ।**
**शिखरी सुखनिर्वाप्यो न विष्यन्दी न चातिरुक् ॥ २४ ॥**
**क्षारो दशगुणः शस्त्रतेजसोरपि कर्मकृत् ।**

क्षारे नातितीक्ष्णादयो दश गुणा भवन्ति । शीघ्रं गच्छति प्रसरत्याशु व्याप्नोतीति शीघ्रगः । शिखरी शिखरमुपरिष्टात्पीटिकोत्थानं तद्वान् । सुखेन काञ्जिकादिना निर्वाप्यते शीतीक्रियते सुखनिर्वाप्यः । विष्यन्दोऽस्यास्तीति विष्यन्दी स्रुतिमान्, न विष्यन्दी न स्रुतिमान् । न चातिरुक् न चार्तिमान् । नातितीक्ष्णादयो दश गुणा यस्य स दशगुणः क्षारः । सङ्ग्रहे चास्य दशैव दोषा गदिताः । तद्यथा— "अत्युष्णोऽतिशीतोऽतितीक्ष्णोऽतिमृदुरतितनुरतिघनोऽतिपिच्छिलो विसर्पी हीनौषधो हीनपाकश्चेति" । शस्त्रे यत्कर्म च्छेदनपाटनलेखनादि, तथा तेजसो वह्नेरपि यत्कर्म तत्साध्यव्याध्युपशमलक्षणं तत्करोति ।

अधुना त्वन्तरानुभवद्वारेण क्षारस्य गुणान्निर्दिशति—

**आचूषन्निव संरम्भाद्गात्रमापीडयन्निव ॥ २५ ॥**
**सर्वतोऽनुसरन् दोषानुन्मूलयति मूलतः ।**
**कर्म कृत्वा गतरुजः स्वयमेवोपशाम्यति ॥ २६ ॥**

संरम्भात्क्षोभाद्गात्रमाचूषन्निव तथाऽऽपीडयन्निव तथा सर्वतः सर्वस्मिन्ननुसरन् गच्छन् दोषान् शस्त्रसाध्यान् मूलत उन्मूलयत्युद्धरति । तथा कर्म स्वीयं दाहादिकं कृत्वा गतरुजः पुरुषस्य स्वयमेव यत्नं विनैवोपशाम्यति ।

**क्षारसाध्ये गदे छिन्ने लिखिते स्राविते ऽथवा ।**
**क्षारं शलाकया दत्वा प्लोतप्रावृतदेहया ॥ २७ ॥**
**मात्राशतमुपेक्षेत,**

क्षारसाध्ये व्याधावर्शोऽर्बुदादौ, छिन्ने द्विधाकृते, लिखिते शस्त्रेण विघृष्टे, स्राविते प्रच्छाद्य निर्हृतशोणिते कर्मणि कृते, क्षारो योज्यो नाकृते छेदादाविति क्षारस्य विषयो दर्शितः । क्षारं शलाकया दत्त्वा मात्राशतमुपेक्षेत, न काञ्जिकादिना निर्वापणं कार्यमित्यर्थः । किम्भूतया शलाकया ? प्लोतेन चैलखण्डेन प्रावृतः स्थगितो देहः परिग्रहो यस्याः ।

**तत्रार्शः स्वावृताननम् ।**
**हस्तेन यन्त्रं कुर्वीत,**

तत्र क्षारसाध्येष्वर्शःसु क्षारपातं कृत्वा मात्राशतं यावत्तावद्धस्तेन यन्त्रमावृताननं छादितमुखं कुर्यात् ।

**वर्त्मरोगेषु वर्त्मनी ॥ २८ ॥**
**निर्भुज्य पिचुनाच्छाद्य कृष्णभागं विनिक्षिपेत् ।**
**पद्मपत्रतनुः क्षारलेपो घ्राणार्बुदेषु च ॥ २९ ॥**

क्षारसाध्येषु वर्त्मरोगेषु वर्त्मनी निर्भुज्य कुटिलीकृत्य ततः क्षारस्पर्शपरिहाराय पिचुना कार्पासादिमयेन कृष्णभागं तारकप्रदेशमाच्छाद्य क्षारं विनिक्षिपेत् । तत्र च पद्मपत्रप्रमाणः क्षारलेपो देयो न गुदार्शःस्विव घनः । 'पद्मपत्रतनुरित्युपमानानि सामान्यवचनैरिति समासः' । घ्राणार्बुदेषु च पद्मपत्रतनुः क्षारलेपः ।

कथं तत्र लेपो देयस्तत्राह—

**प्रत्यादित्यं निषण्णस्य समुन्नम्याग्रनासिकाम् ।**
**मात्रा विधार्यः पञ्चाशत्,**

घ्राणजेष्वर्बुदेषु प्रत्यादित्यं रविसंमुखं निषण्णस्य संस्थितस्य तथाऽग्रे नासिकाऽग्रनासिका तमुन्नम्योत्क्षिप्य । कियन्तं कालं लेपो धार्य इत्याह । मात्राः पञ्चाशद्विधार्यः । वर्त्मसु चाल्पतरा मात्राः । स्थानस्य सुकुमारत्वात् ।





तद्वदर्शसि कर्णजे ॥ ३० ॥

कर्णजेऽर्शसि तद्वत्तेन घ्राणार्बुदेन तुल्यं स एव पद्मपत्रतनुः क्षारलेपस्ता एव पञ्चाशन्मात्रा धार्यः ।

**क्षारं प्रमार्जनेनानु परिमृज्याऽवगम्य च ।**
**सुदग्धं घृतमध्वक्तं तत्पयोमस्तुकाञ्जिकैः ॥ ३१ ॥**
**निर्वापयेत्ततः साज्यैः स्वादुशीतैः प्रदेहयेत् ।**

अनु पश्चात् क्षारलेपदाननियमितात्कालादनन्तरं क्षारं प्रमार्जनेन चैलादिना परिमृज्य शोधयित्वा सुदग्धं क्षारस्थानमर्शोऽर्बुदाद्यधिष्ठानमवगम्य सम्यग्दाहलक्षणेन ज्ञात्वा तत्क्षारदग्धस्थानं घृतमधुलेपितं कृत्वा पयःप्रभृतिभिः साज्यैः सघृतैर्लेपयेत् ।

**अभिष्यन्दीनि भोज्यानि भोज्यानि क्लेदनाय च ॥ ३२ ॥**

अभिष्यन्दीनि स्रुतिरूपश्लेष्मकारीणि भोज्यान्यन्नपानानि माषदध्यादीनि भोज्यानि भक्षयितव्यानि । किमर्थम् ? क्लेदनाय क्षारदग्धस्थानविशरणाय । यतः क्षारदग्धं क्लिन्नं सच्छीर्यते ।

**यदि च स्थिरमूलत्वात्क्षारदग्धं न शीर्यते ।**
**धान्याम्लबीजयष्ट्याह्वतिलैरालेपयेत्ततः ॥ ३३ ॥**

यदि च क्षारदग्धमभिष्यन्दिभिर्भोज्यैरुपयुक्तैः स्थिरमूलत्वाद् दृढमूलत्वाद्रोगाधिष्ठानं न शीर्यते ततो धान्याम्लस्य बीजमवयवविशेषस्तेन तथा मधुकतिलाभ्यामालेपयेत् ।

**तिलकल्कः समधुको घृताक्तो व्रणरोपणः ।**

तिलकल्को मधुयष्टियुक्तो घृतान्वितो व्रणस्य रोपणः ।

**पक्वजम्ब्वसितं सन्नं सम्यग्दग्धम्,**

पक्वजम्बूफलवदसितं कृष्णं तथा सन्नं निम्नं सम्यग्दग्धं स्थानं विद्यात् ।

**विपर्यये ॥ ३४ ॥**
**ताम्रतातोदकण्ड्वाद्यैर्दुर्दग्धम्,**

विपर्यये पक्वजम्ब्वसितादिलक्षणविपर्यये तथा ताम्रतातोदकण्ड्वाद्यैरादिग्रहणात् शोफविस्फोटादिभिर्दुर्दग्धं स्थानं विद्यात् ।

**तं पुनर्दहेत् ।**

तं तथाभूतं ज्ञात्वा पुनर्दहेत्, भूयस्तत्र क्षारं पातयेद्दाहीयम् ।

**अतिदग्धे स्रवेद्रक्तं मूर्च्छादाहज्वरादयः ॥ ३५ ॥**

अतिदग्धे सति रक्तं स्रवेत् । तथा मूर्छादयो जायन्ते । आदिग्रहणाद्विसर्पशोफोषविस्फोटादयोऽपि ।

**गुदे विशेषाद्विण्मूत्रसंरोधोऽतिप्रवर्तनम् ।**
**पुंस्त्वोपघातो मृत्युर्वा गुदस्य शातनाद् ध्रुवम् ॥ ३६ ॥**



गुदेऽतिदग्धे विशेषेण विण्मूत्रयोः संरोधस्तथा तयोरेवातिप्रवर्तनं कदाचिद्भवति। विशेषग्रहणात्पूर्वोक्ता रक्तस्रावादयोपि। तथा पुंस्त्वोपघातः शुक्रक्षयात्कान्तागमनासामर्थ्यम्। अथवा गुदस्य शातनाद्विदारणान्निश्चयेन मृत्युर्भवति।

**नासायां नासिकावंशदरणाकुञ्चनोद्भवः।**
**भवेच्च विषयाऽज्ञानम्,**

नासायां क्षारातिदग्धायां नासिकावंशस्य दरणाकुञ्चने उद्भवतस्तथा विषयाज्ञानं गन्धस्यावेदनं च भवेत्।

**तद्वच्छ्रोत्रादिकेष्वपि ॥ ३७ ॥**

तद्वत्तेन क्षारातिदग्धेन नासिकाविषयाज्ञानेन तुल्यं क्षारातिदग्धेषु श्रोत्रादिषु श्रोत्रचक्षूरसनेषु स्थानेषु विषयाज्ञानं स्यात्।

**विशेषादत्र सेकोऽम्लैर्लेपो मधुघृतं तिलाः।**
**वातपित्तहरा चेष्टा सर्वैव शिशिरा क्रिया ॥ ३८ ॥**

तस्मिन्नतिक्षारदग्धे विशेषेणाम्लैः काञ्जिकादिभिः सेको हितः। मधुघृततिलाश्च लेप इष्टः। तथा सर्वैव च शिशिरा क्रिया वातपित्तहरेष्टा। सङ्ग्रहे चोक्तम्—"पाययेतातियोगेऽतस्तं शीघ्रं सघृतं दधि। सगुडं वा दधिसरं तैलं वा ससितोपलमिति"।

**अम्लो हि शीतः स्पर्शेन क्षारस्तेनोपसंहितः।**
**यात्याशु स्वादुतां तस्मादम्लैर्निर्वापयेत्तराम् ॥ ३९ ॥**

तस्माद्धेतोः क्षारदग्धमम्लैः काञ्जिकादिभिर्निर्वापयेत्तराम्। यस्मादम्लः शीतः स्पर्शेन। तेन चाऽम्लेन क्षार उपसंहितो युक्त आश्वेव कटुलवणभूयिष्ठतां त्यक्त्वा स्वादुतां यात्ति। तरांग्रहणमतिशयेनाम्लैर्निर्वापयेत्, देशसात्म्यानुरोधात्कदाचित्क्षीरादिभिरपीति गमयति। इति क्षारविधिः।

अग्निकर्मविधिमाह—

**अग्निः क्षारादपि श्रेष्ठस्तद्दग्धानामसम्भवात्।**
**भेषजक्षारशस्त्रैश्च न सिद्धानां प्रसाधनात् ॥ ४० ॥**

क्षारादप्यग्नेः प्रशस्यतरत्वम्। कुतः? तेनाग्निना दग्धानां रोगाणामर्शःप्रभृतीनामसम्भवात्। भूयोऽग्निदग्धो रोगः प्ररोहं न याति। मूलादुन्मूलनादित्यर्थः। भेषजक्षारशस्त्रैश्च ये रोगा न शान्तास्तेषां प्रसाधनाज्ज्वलनो ज्यायान्।

**त्वचि मांसे सिरास्नायुसन्ध्यस्थिषु स युज्यते।**

सोऽग्निदाहस्त्वगादिषु युज्यते।

**मषाऽङ्गग्लानिमूर्धार्तिमन्थकीलतिलादिषु ॥ ४१ ॥**
**त्वग्दाहो वर्तिगोदन्तसूर्यकान्तशरादिभिः।**

तत्र मषादिषु रोगेषु त्वग्दाहः कार्यो वर्त्यादिभिः। वर्तिः पिचुवर्तिः। आदि-



ग्रहणादन्येष्वपि क्षुद्ररोगाध्यायोक्तेषु त्वग्दाहो योज्यः। शरादिभिरित्यादिग्रहणादन्यैरपि देशान्तरप्रसिद्धैस्त्वग्दाहः कार्यः।

**अर्शोभगन्दरग्रन्थिनाडीदुष्टव्रणादिषु ॥ ४२ ॥**
**मांसदाहो मधुस्नेहजाम्बवोष्ठगुडादिभिः।**

अर्शःप्रभृतिषु रोगेषु मधुस्नेहादिभिर्मांसदाहः कार्यः। आदिग्रहणेनार्बुदगण्डमालादयो गृह्यन्ते। तत्र कदाचिन्मधुना कदाचित्पृथक्स्नेहैः कदाचिज्जाम्बवोष्ठेन। जाम्बवोष्ठः शलाकाविशेषो यन्त्रविधावुक्तो येन क्षारो दीयते कदाचिद्गुडेन कदाचिदेवंप्रायेणान्येनापि देशविशेषप्रसिद्धेन।

**श्लिष्टवर्त्मन्यसृक्स्रावनील्यसम्यग्व्यधादिषु ॥ ४३ ॥**
**सिरादिदाहस्तैरेव,**

तैरेव श्लिष्टवर्त्मादिषु सिरादाहः कार्यः। तैरेव मधुस्नेहादिभिः।

**न दहेत्क्षारवारितान्।**
**अन्तःशल्यासृजो भिन्नकोष्ठान् भूरिव्रणातुरान् ॥ ४४ ॥**

क्षारवारितान्न दहेत्। न केवलं येषु क्षारो वारितस्तान् दहेद्यावदन्तःशल्यं तथान्तर्लोहितं येषां तान्।

**सुदग्धं घृतमध्वक्तं स्निग्धशीतैः प्रदेहयेत्।**

सुदग्धमग्निना रोगाधिष्ठानं ज्ञात्वा घृतमधुभ्यामभ्यक्तं कृत्वा स्निग्धशीतैर्मधुयष्टिकशालिमूलादिभिः प्रलेपयेत्।

**तस्य लिङ्गं स्थिते रक्ते शब्दवल्लसिकान्वितम् ॥ ४५ ॥**
**पक्वतालकपोताभं सुरोहं नातिवेदनम्।**

तस्येत्यनेन सुदग्धं स्थानं परामृश्यते। तस्य सुदग्धस्य स्थानस्य लिङ्गं लक्षणं स्थिते रक्ते दह्यमानावस्थाप्रवृत्तासृजि निवृत्ते सति शब्दवद्बुद्बुदशब्दवत् स्थानं भवेत्। तथा लसिकान्वितम्। लसिका कुशशस्त्रादिविक्षते प्रथमं या दृश्यते जललवाकृतिः। तथा पक्वतालसदृशम्। सुखेन रोहति सुरोहम्। तथा नातिवेदनं नातितीव्ररुक्।

**प्रमाददग्धवत्सर्वं दुर्दग्धात्यर्थदग्धयोः ॥ ४६ ॥**

दुर्दग्धात्यर्थदग्धयोः प्रमाददग्धेन तुल्यं सर्वं लक्षणं बोध्यम्।

नच लक्षणमन्तरेणैतत्सम्यग्ज्ञायत इति तल्लक्षणार्थं भेदान्तरदर्शनार्थमाह—

**चतुर्धा तत्तु तुत्थेन सह,**

तत्प्रमाददग्धं चतुष्प्रकारम्। कथम्? तुत्थेन तुत्थदग्धलक्षणेन सह। अविमृश्यदग्धं हि कदाचित्सम्यग्दग्धलक्षणं कदाचिद्दुर्दग्धलक्षणं कदाचिदतिदग्धलक्षणं कदाचिच्च तुत्थदग्लक्षणं स्यात्।

**तुत्थस्य लक्षणम्।**



**त्वग्विवर्णोष्यतेऽत्यर्थं न च स्फोटसमुद्भवः ॥ ४७ ॥**

तुत्थस्य तुत्थदग्धस्य लक्षणमिति कार्ये कारणमुक्तम् । त्वगेत्यादि–त्वग्विवर्णा सत्यत्यर्थमुष्यते रुज्यते नच स्फोटानां समुद्भूतिरिति तुत्थदग्धस्थानस्य लक्षणम् । यत्किञ्चिन्मात्रमेवाग्निना स्पृष्टं तत्तुत्थदग्धमित्युच्यते ।

**सस्फोटदाहतीव्रोषं दुर्दग्धम्,**

यत्र प्रदेशे स्फोटानामुद्भवो दाहयुक्ता तीव्रा उषा जायते तद्दुर्दग्धं रोगाधिष्ठानं विद्यात् ।

**अतिदाहतः ।**

**मांसलम्बनसङ्कोचदाहधूपनवेदनाः ॥ ४८ ॥**

**सिरादिनाशस्तृण्मूर्छाव्रणगाम्भीर्यमृत्यवः ।**

अतिदाहाद्रोगाधिष्ठानस्य मांसलम्बनादयः स्युः । सङ्कोचः सिरादीनाम् । धूपनं धूमनिर्गमनमिव भवनम् । वेदना रुजा । सिरादीनां नाशो व्यापद् । व्रणगाम्भीर्यं गम्भीरव्रणता । मृत्युर्मरणं च । सम्यग्दग्धलिङ्गं तूक्तमेव । तस्य लिङ्गं– 'स्थिते रक्त इत्यादिना' तस्मात्तत्पुनर्न निर्दिष्टम् ।

अधुना चतुर्विधस्याऽस्य चिकित्सितमाह—

**तुत्थस्याऽग्निप्रतपनं कार्यमुष्णं च भेषजम् ॥ ४९ ॥**

तुत्थदग्धस्याऽग्निना प्रतपनं कार्यम् । तथोष्णं भेषजमौषधम् । रक्तस्य विलयनार्थमेतत् ।

यतो हि तुत्थदग्धे त्ववश्यं स्त्यानमसृग्भवतीति युक्त्या प्रतिपादयन्नाह—

**स्त्यानेऽस्रे वेदनात्यर्थं विलीने मन्दता रुजः ।**

लोहिते स्त्याने सत्यतिशयेन रुग्भवति विलीने रक्ते पडिाया मन्दता मन्दत्वं भवति । अतो हि तुत्थदग्धेऽग्निप्रतपनं योज्यम् ।

**दुर्दग्धे शीतमुष्णं च युञ्ज्यादादौ ततो हिमम् ॥ ५० ॥**

शीतमुष्णं च पर्यायेणौषधं तत्रादौ प्रथमं भेषजं युञ्ज्यात् ।

**सम्यग्दग्धे तुगाक्षीरिप्लक्षचन्दनगैरिकैः ।**

**लिम्पेत्साज्यामृतैरूर्ध्वं पित्तविद्रधिवत्क्रिया ॥ ५१ ॥**

सम्यग्दग्धे तवक्षीर्यादिभिर्लेपयेत् । किम्भूतैः ? साज्यामृतैर्घृतगुडूचीयुक्तैः । आदावित्यत्राऽपि योज्यम् । आदौ तैर्लेपयेदूर्ध्वमनन्तरं पित्तविद्रधिवत् क्रिया कार्येति शेषः ।

**अतिदग्धे द्रुतं कुर्यात्सर्वं पित्तविसर्पवत् ।**

अतिदग्धे द्रुतं शीघ्रमेव सर्वं बहिरन्तश्च भेषजं पित्तविसर्प इव कुर्यात् ।

**स्नेहदग्धे भृशतरं रूक्षं तत्र तु योजयेत् ॥ ५२ ॥**

स्नेहदग्धेऽतितरां रूक्षं योजयेत् । भृशतरं रूक्षं चाऽत्र भेषजं तत्र तु योजयेत् ।

तुशब्दान्न केवलं भृशतरग्रहणाच्च बाहुल्येन रूक्षं प्रलेपादि तत्र योजयेत्, किन्तु देहदेशादिसात्म्यवशात्स्निग्धमपि यथावस्थं यथावद्योजयेत्।

**समाप्यते स्थानमिदं हृदयस्य रहस्यवत्।**

वक्तव्यं यद्वस्तु तस्य सर्वस्यैवोक्तत्वादिदं स्थानं समाप्यते निष्पाद्यते। किम्भूतं स्थानम्? रहस्यवद् रहस्यमत्यर्थं गुह्यरूपं तदस्याऽस्ति तद्रहस्यवत्। कस्य स्थानम्? हृदयस्य। हृदयमिव हृदयम्। हृदयशब्देनाष्टाङ्गहृदयमुपलक्ष्यते। यथा सत्यभामा भामेति।

कुत एतत्स्थानं रहस्यवदित्याह—

**अत्रार्थाः सूत्रिताः सूक्ष्माः प्रतन्यन्ते हि सर्वतः॥ ५३॥**

**इति वैद्यपतिसिंहगुप्तसूनुवाग्भटविरचितायामष्टाङ्गहृदयसंहितायां प्रथमं सूत्रस्थानं सम्पूर्णम्।**

यस्मादत्र स्थानेऽर्थाः सूत्रिताः सूचिताः सूचनमात्रेणोक्ताः। किम्भूताः? सूक्ष्मास्तीक्ष्णतरमतिसमधिगम्या यतस्त एवार्थाः सर्वस्मिंस्तन्त्रे प्रतन्यन्ते विस्तार्यन्ते। अस्मादिदं स्थानं तन्त्रसम्बन्धिनामन्यस्थानानां रहस्यवदित्युक्तमिति।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां क्षाराग्निकर्मविधिस्त्रिंशत्तमोऽध्यायः॥ ३०॥

**समाप्तमिदं सूत्रस्थानम्।**





# अष्टाङ्गहृदये शारीरस्थानम्।

## प्रथमोऽध्यायः।

श्रीगणेशाय नमः। अथ सूत्रस्थानादनन्तरं शारीरस्थानमिदमारभ्यते। तत्राऽयं सम्बन्धः। पूर्वस्मिन्स्थाने कायादीन्यष्टावङ्गानि चिकित्साधारभूतानि सकलतन्त्रसारभूतानि सूत्रितानि 'कायबालेत्यादिना' ग्रन्थेन। कायश्च निजागन्तूनां व्याधीनामधिष्ठानम्। तस्य च कायस्य चतुर्वर्गसाधनस्य पालनार्थं हेतुलिङ्गौषधस्कन्धभेदेन त्रिस्कन्धोऽयं ग्रन्थो ग्रन्थकृता प्रणीतः। ततश्च कायस्य प्रथमं सूत्रितत्वात्प्राधान्याच्च प्राक् सूत्रस्थानादनन्तरं शारीरस्थानमिदमारभ्यत इत्याह—

**अथाऽतो गर्भावक्रान्तिशारीरं व्याख्यास्यामः।**
**इति ह स्माहुरात्रेयादयो महर्षयः।**

शरीरमधिकृत्य कृतो ग्रन्थः शारीरः। गर्भस्याऽवक्रान्तिरवक्रमणं सम्प्राप्तिः। यथाऽगर्भो गर्भतां सम्पद्यत इत्यर्थः। 'गर्भावक्रान्तिर्विद्यते यस्मिन्नध्याय इति मत्वर्थे छप्रत्ययः। तस्याऽध्यायानुवाकयोर्लुगिति लुक्'। अथादिशब्दानामर्था आयुष्कामीयाध्याये व्याख्याता एव।

**शुद्धे शुक्रार्तवे सत्वः स्वकर्मक्लेशचोदितः।**
**गर्भः सम्पद्यते युक्तिवशादग्निरिवारणौ॥ १॥**

शुद्ध इति। शुक्रमन्त्यो धातुः। ऋतौ भवमार्तवम्। स्त्रीणां यदपत्यमार्गाच्छुद्धमीषत्कृष्णं विगन्धं च वायुप्रेरितं लोहितं प्रवर्तते तदार्तवमुच्यते। शुक्रं चाऽर्तवं च शुक्रार्तवं पित्रोः सम्बन्धि गर्भबीजम्। तस्मिन् शुक्रार्तवे शुद्धे वातादिभिरदूषितेऽधिष्ठानभूते सत्वो जीवो गर्भः सम्पद्यते। किल नाऽसौ गर्भोऽथ च गर्भतामासादयति। कीदृशः सत्वः? स्वकर्मेत्यादि। कर्माणि पूर्वजन्मार्जितानि शुभाशुभानि। स्वानि च तानि कर्माणि। क्लेशयन्ति लोकान् दुःखयन्तीति क्लेशाः। ते चाऽविद्याऽस्मितारागद्वेषाभिनिवेशाः। अतथावस्तुनि तथेति ख्यातिर**विद्या**। शरीराद्यतिरिक्त आत्मा नास्तीत्येवं प्रत्यय **अस्मिता**। सुखानुशायी **रागः**। दुःखानुशायी **द्वेषः**। स्वरसवाही विदुषोऽपि तथा गूढोऽ**भिनिवेशः**। स्वकर्माणि च क्लेशाश्च स्वकर्मक्लेशास्तैश्चोदितः प्रेरितो गर्भः सम्पद्यते नतु कर्मक्लेशवियुक्तः। अत एव वीतरागाणां जन्मासम्भवः, कर्मक्लेशरहितत्वात्। तथाचोक्तम्—"चित्तमेव हि संसारि रागादिक्लेशदूषितम्। तदेव तैर्विनिर्मुक्तं भवान्त इति कथ्यत इति।" अथ किं शुद्धे शुक्रार्तवे स्वकर्मक्लेशचोदित एव गर्भः सम्पद्यतेऽथवाऽन्यदपि किञ्चिद-



पेद्यत इति ? आह—युक्तिवशादिति । योजनं युक्तिरुपादेयस्याऽर्थस्येतिकर्तव्यता-साधनोपायार्थम् । युक्तेर्वशः सामर्थ्यं प्रभावो युक्तिवशः । ततः शुद्धे शुक्रार्तवे स्वकर्मक्लेशचोदित एव स सत्वो गर्भः सम्पद्यते नान्यथा । कथमित्याह । अग्नि-रिवारणौ । तथाहि—" मथ्यमन्थनमन्थानादिसंयोगवशादीदृक्सामग्रीमन्तरेणा-रणावग्निर्यथा न जायते तथा गर्भोऽपि यथोक्तसामग्रीवैकल्यान्न भवति । सकल-सामग्रीसद्भावादेव भवतीति भावः ।

एवं गर्भस्य सम्पत्तिमभिधाय यथा तस्य कुक्षौ वृद्धिः स्यात्तथा वक्ति—

**बीजात्मकैर्महाभूतैः सूक्ष्मैः सत्वानुगैश्च सः ।**
**मातुश्चाहाररसजैः क्रमात्कुक्षौ विवर्धते ॥ २ ॥**

बीजेति । बीजात्मकैर्गर्भजननसम्मुखभावैः शुक्रार्तवरूपतः परिणतैः । कैः ? महाभूतैराकाशादिभिः सत्वरजस्तमोमयैः । तत्र 'सत्वबहुलमाकाशम् । तमो-रजोबहुलो वायुः । सत्वरजोबहुलोऽग्निः । सत्वतमोबहुला आपः । तमोबहुला पृथ्वी' । इत्येवंरूपैः स गर्भः कुक्षौ विवर्धते विशेषेण वृद्धिं याति । किम्भूतैः ? सूक्ष्मैरतीन्द्रियैर्योगिदृश्यैः । तथा सत्वं चेतोऽनुगच्छन्ति सत्वानुगानि तैः । यत्र सत्वं तिष्ठति तत्राऽवश्यं तान्यपि तिष्ठन्ति सत्वानुशायित्वात्तेषाम् । तथा चोक्तम्—"अतीन्द्रियैस्तैरतिसूक्ष्मरूपैरात्मा कदाचिन्न वियुक्तपूर्व इत्यादि" । च शब्दो हेतुस-मुच्चयार्थः । न केवलं महाभूतैर्हेतुभूतैर्गर्भो विवर्धते यावन्मातुश्चाहाररसजैरित्यतो वक्ष्यमाणाद्धेतोरपि वर्धत इत्यर्थः । मातुरित्यादि । मातुः सम्बन्धिभिराहाररस-जैश्च कुक्षौ विवर्धते । चशब्दोऽत्राऽनुक्तसमुच्चयार्थः । न केवलं पूर्वोक्ताद्यथानिर्दि-ष्टाद्धेतोर्गर्भः कुक्षौ विवर्धते यावदनिर्दिष्टादपि मातुः सौमनस्यादेः कललार्बुदपेश्याद्य-वस्थाभावेन विशेषतो वृद्धिं यातीति । कथं वर्धत इत्याह—क्रमात्, न झटित्येव । ननु मातुश्चाहाररसजैरिति कथमुक्तम् ? यतः पञ्चभूतात्मक एवाऽऽहाररसो न च यदात्म-कोऽसौ तस्यैव जन्मकारणं भवितुमर्हत्यव्यतिरिक्तत्वात् । तस्मादेवमयं व्याख्या-तव्यः—आहाररसे जातैराहाररसजैः । 'सप्तम्यन्तादुपपदाज्जनेर्डः । मातुराहार-रसात्मना परिणतैरिति ।

ननु सत्वः कुक्षौ प्रविष्टो गर्भतामाप्नोतीत्युक्तं न चाऽस्य प्रवेश उपलभ्यत इत्यत्राह—

**तेजो यथार्करश्मीनां स्फटिकेन तिरस्कृतम् ।**
**नेन्धनं दृश्यते गच्छत्सत्वो गर्भाशयं तथा ॥ ३ ॥**

तेज इति । न केवलं दृश्यत्वादृश्यत्वाभ्यां वस्तुसद्भावासद्भावौ व्यवस्थाप्येते, येनाऽदृश्यत्वात्सत्वस्य कुक्षौ प्रवेशासम्भवः । किन्तर्हि तत्कार्यान्यथानुपपत्त्याऽपि वस्तुसद्भावो व्यवस्थाप्यत एव । यथाऽर्करश्मीनां सम्बन्धि तेजः स्फटिकेन सूर्य-कान्ताख्येन तिरस्कृतं व्यवहितं स्फटिकस्याधस्तात् स्थितमिन्धनं गच्छद्व्रजन्न

दृश्यते । अथ च तेजःकार्यमिन्धनगतं दृश्यते नान्यसम्बन्धि कार्यम् । तदेवं तेजः-कार्यान्यथानुपपत्त्या तेजस इन्धनगमनं तथा तत्र तस्य सद्भावोऽप्यधिगम्यते । एवं सत्वो गर्भाशयं गच्छन् व्रजन्न दृश्यत एव । वस्तुप्रभावाद्गच्छति च । सत्वशब्द उपलक्षणार्थो महाभूतान्यपि तदन्तर्गतानि न दृश्यन्त एवाऽथ च कार्येणोपलभ्यन्त एव । तदेवं सत्वानुयायिभिर्महाभूतैर्गर्भः कुक्षौ विवर्धते न तु केवलैः सत्वानधिष्ठितैः । चेतोऽवक्रान्त्या हि क्रमात्कललादिना वस्तुजातं विवृद्धिं विपुलतामापद्यते नान्यथा मृतशरीरवत् ।

ननु सत्वो भूतानुग एकरूप एव कथमनेकजात्याकृत्या नरतुरगोरगगजादिमत्याऽऽलिङ्गितः सम्पद्यत इत्यस्मिन् पर्युनुयोगे, इदमाह—

**कारणानुविधायित्वात्कार्याणां तत्स्वभावता ।**
**नानायोन्याकृतीः सत्वो धत्तेऽतो द्रुतलोहवत् ॥ ४ ॥**

कारणेति । कारणं हेतुमवश्यमनुविदधतीति कारणानुविधायीनि । 'आवश्यके णिनिः' । कारणस्वभावानि कार्याणि भवन्ति सर्वाण्येव, तस्माद्धेतोः कार्याणां तत्स्वभावता । स्वभावशब्दः सदृशार्थः । तच्छब्देन कारणं परामृश्यते । तस्य कारणस्य स्वभावता तत्सादृश्यम् । तस्मात्कार्यकारणसादृश्याद्धेतोः सत्वो महाभूतानुग एकरूप एवानेकरूपनानायोन्याकृतीः प्रतिबिम्बविशेषान् धत्ते धारयति । कथमिव ? द्रुतलोहवत् । यथाहि रूप्यादिवस्तुजातमग्निना द्रुतरूपतां गतमेकरूपमेव सिकतादिकल्पितायां नानारूपायां मनुष्याद्याकृतौ निषिक्तं तां तामाकृतिं यथाकल्पितां धत्ते, एवं स सत्वो नानायोनौ गच्छति तां तां यथास्वमाकृतिं धारयति ।

**अत एव च शुक्रस्य बाहुल्याज्जायते पुमान् ।**
**रक्तस्य स्त्री तयोः साम्ये क्लीबः,**

अत इति । अत एव च पूर्वोक्तात्कार्यकारणसादृश्याद्धेतोः शुक्रस्य पुंरेतसो बाहुल्याद्बहुत्वात्सामर्थ्यलभ्यत्वाच्च स्त्रीरेतसो रजसोऽल्पत्वात्पुमान् जायते न स्त्री । तथाविधस्य कारणस्याभावात् । तथा पूर्वोक्तात्कार्यकारणसादृश्यात्स्त्रीरेतसो रक्तस्य बाहुल्याद्बहुत्वात्सामर्थ्यलभ्यत्वाच्च पुंरेतसोऽल्पत्वात्स्त्री जायते न पुमान् । तथाविधस्य कारणस्याऽभावात् । पुंरेतो हि बलवदल्पं स्त्रीरजोऽभिभूय पुंगर्भस्य कारणतां याति । यदा तु स्त्रीरजसो बलवत्वमल्पत्वं च पुंरेतसस्तदा स्त्रीरजोऽल्पं तु पुंरेतोऽभिभूय स्त्र्याख्यस्य गर्भस्य कारणतामापद्यते । यदा तु शुक्रार्तवयोः साम्यं तुल्यत्वं भवति तदा न स्त्री न पुमान् जायते, अपितु लिङ्गद्वयालिङ्गितः क्लीबः षण्ढो जायते । एवं पितुः सम्बन्धि शुक्रं स्त्रीरक्तमिश्रितं गर्भकारणं न केवलं पितुः सम्बन्ध्येव मातुर्वा । दारुवाहिना तूक्तम्—"स्त्रीपुंसयोः सुसंयोगे यद्यादौ विसृजेत्पुमान् । शुक्रं ततः पुमान्वीरो जायते बलवान् दृढः । अथ चेद्वनिता पूर्वं विसृजेद्रक्तसंयुतम् । ततो





रूपान्विता कन्या जायते दृढसंहतेति"। अत एव च पुंगर्भाः केचित्किञ्चिन्मातृसदृशा दृश्यन्ते स्त्रीगर्भाश्च केचित्किञ्चित्पितृसदृशा दृश्यन्ते । ननु ' रसाद्रक्तं ततो मांसं मांसान्मेदस्ततोऽस्थि च। अस्थ्नो मज्जा ततः शुक्रं शुक्राद्गर्भः प्रजायते"–इत्यविशिष्य निर्दिष्टं, न तु पुंशुक्राद्गर्भः प्रजायत इत्येवं निर्दिष्टम् । उभयोरपि च स्त्रीपुंसयोरवश्यं सप्तधातुकत्वमभ्युपगन्तव्यं न पुंस एव। तदेवं तरुणीनां कुसुमशराक्रान्तमानसानां तथाविधेन पुरुषसंयोगेन विनाऽपि केवलात्स्मृतिसंस्पर्शदर्शनाच्चलितप्रस्रुतरेतसां किमिति गर्भो न जायते। शुक्रार्तवं हि गर्भकारणम् । तच्च सन्निहितमेव ? इति केचित्। तान् ब्रमहे—पुंशुक्राभावात्। पुंशुक्रं हि स्त्रीरेतोरक्तयुक्तं गर्भकारणम्। न च तदत्राऽस्ति । तदभावाद्गर्भस्याऽनुत्पत्तिः । तथा च सङ्ग्रहेऽप्यध्यगीष्ट—" योषितोऽपि स्रवन्त्येव शुक्रं पुंसः समागमे। गर्भस्यं तु न तत्किञ्चित्करोतीति न चिन्त्यत इति "।

साम्प्रतं यथाऽनेकगर्भत्वं तुल्यकालं स्यात्तथा प्रतिपादयितुमाह—

**शुक्रार्तवे पुनः ॥ ५ ॥**
**वायुना बहुशो भिन्ने यथास्वं बह्वपत्यता।**

वातेन यथास्वं शुक्रार्तवे बहुशो भिन्ने बहुधा कृते सति बह्वपत्यता भवति। यथास्वमिति। यदा शुक्रमाधिक्येन वर्तमानं, वातेन बहुधा भिद्यते, तदा पुंगर्भाऽनेकत्वम्। यदा तु स्त्रीरज आधिक्येन वर्त्तमानं, वायुना बहुधा भिद्यते, तदा स्त्रीगर्भाऽनेकत्वम्। इति बह्वपत्यता भवति। सूकरसारमेयादिजातिषु त्वनेनैव हेतुना सदाऽनेकापत्यता।

ननु कथं वियोनयो विकृताकाराश्च गर्भाः स्युरित्याह—

**वियोनिविकृताकारा जायन्ते विकृतैर्मलैः ॥ ६ ॥**

वियोनयश्च विकृताकाराश्च वियोनिविकृताकारास्ते तथाविधा गर्भा जायन्ते । कथमित्याह। विकृतैर्मलैः। वातादिभिर्दुष्टैरुन्मार्गगामिभिः।

**मासि मासि रजः स्त्रीणां रसजं स्रवति त्र्यहम्।**
**वत्सराद् द्वादशादूर्ध्वं याति पञ्चाशतः क्षयम् ॥ ७ ॥**

स्त्रीणां मासि मासि प्रतिमासं रजो रक्तं त्र्यहं स्रवति त्रीणि दिनानि प्रवर्तते। ननु शुद्धे शुक्रार्तव इति पूर्वं शुक्रमेवोद्दिष्टं ततस्तस्यैव निर्देशो न्याय्य इति शुक्रमानुपूर्वीप्राप्तमुल्लङ्घ्य कस्माद्रक्तं निर्दिष्टम् ? उच्यते। बहुवक्तव्यत्वात्। रक्ते हि बहुवक्तव्यमस्त्यतस्तदेव प्राग्वक्तुं युक्तम्। ' त्र्यहमिति कालाध्वनोरिति द्वितीया।' किम्भूतं रजः ? रसाज्जातं रसजम्। ननु रक्तं रसजमेव। वक्ष्यति हि—' रसाद्रक्तं ततो मांसमित्यादि '। तत्किमर्थं रसजमित्युक्तम् ? ब्रमहे—रसादाहाररसात् परिणमतो जातं रसजमित्यत्र निर्दिष्टं, न तु रसधातोर्जातमिति बोध्यम् । कुतःप्रभृति तद्रजः प्रवर्तत इत्याह। वत्सरादित्यादि। द्वादशाद्वर्षादूर्ध्वमनन्तरं स्रवति । पञ्चाशतो वर्षादूर्ध्वं परेण क्षयं याति। ' द्वादशानां पूरणं वर्षमिति तस्य पूरणे डडिति

ड्ट् '। द्वादशादिति प्रायिकमेतत् । एकादशवार्षिकाणामपि स्त्रीणां रक्तप्रवृत्ति-दर्शनात् । पञ्चाशतः क्षयमित्यत्राप्येवमेव चिन्त्यम् ।

**पूर्णषोडशवर्षा स्त्री पूर्णविंशेन सङ्गता ।**
**शुद्धे गर्भाशये मार्गे रक्ते शुक्रेऽनिले हृदि ॥ ८ ॥**
**वीर्यवन्तं सुतं सूते,**

पूर्णानि षोडशवर्षाणि यस्याः सैवंविधा स्त्री पूर्णविंशेन नरेण सङ्गता मिथुनतां याता सती गर्भाशयादिषु शुद्धेषु वीर्यवन्तं सामर्थ्ययुक्तं पुत्रं सूते जनयति । प्रायिकं चैतदर्वागपि साधुगर्भदर्शनात् । अत एवाऽयमेव तन्त्रकारोऽन्यथा सङ्ग्रहे जगाद—"षोडशवर्षायाः पञ्चविंशतिवर्षः पुत्रार्थं यतेतेति" । विंशतेः पूरण इति डडिति विंशतेरिति तिलोपे विंशशब्दः । पूर्णो विंशो यस्येति पूर्णविंशः । गर्भस्याशयो गर्भाशयस्तस्मिन् शुद्धे निर्मले वातादिभिरदुष्टे । तथा मार्गे प्रकृतत्वादपत्यमार्गे वातादिभिरदुष्टे । तथा रक्ते स्त्रीरजसि शुद्धे । तथा शुक्रे पुम्बीजे शुद्धे । तथाऽनिले शुद्धे पित्तादिभिरनावृते । तथा हृदि शुद्धे दोषानधिष्ठितेऽसन्तप्ते ।

**ततो न्यूनाब्दयोः पुनः ।**
**रोग्यल्पायुरधन्यो वा गर्भो भवति नैव वा ॥ ९ ॥**

ततः पूर्वोक्ताद्वयःपरिमाणान्न्यूनाब्दयोर्हीनवर्षयोः स्त्रीपुरुषयोः पञ्चदशाष्टादशवर्षयो रोगी भवति । 'रोगीत्यतिशय इनिर्मत्वर्थीयः' । तथोत्पन्नोऽल्पायुरधन्यश्चाऽप्रशस्तो गर्भो भवति न भवत्येव वा ।

ननु दम्पत्योः शुक्रार्तवसंयोगोऽपि सति क्वचिद्गर्भसम्भूतिर्न दृश्यते तत्कथमेतदित्याशङ्कायामाह—

**वातादिकुणपग्रथिपूयक्षीणमलाह्वयम् ।**
**बीजाऽसमर्थं रेतोऽस्रम्,**

वातादीति । आदिशब्देन पित्तश्लेष्मणोः परिग्रहः । वातादयश्च कुणपं च ग्रन्थिश्च पूयश्च क्षीणं च मलं चेति द्वन्द्वः । एतान्याह्वयः संज्ञा यस्य रेतोऽस्रस्य तदेवम् । आह्वयशब्दः प्रत्येकं वातादिषु योज्यः । रेतश्चाऽस्रं च रेतोऽस्रं वाताद्याह्वयम् । वातसंज्ञं शुक्रं वातशुक्रम् । एवं पित्तशुक्रम् । कफशुक्रम् । एवं कुणपगन्धित्वात्कुणपं नाम शुक्रं कुणपशुक्रं तद्रक्तेन दुष्टेन भवति । एवं ग्रन्थिशुक्रं पूयशुक्रं क्षीणशुक्रम् । मलाह्वयं तु द्विधा मूत्रपुरीषभेदात् । मूत्रसदृशं शुक्रं मूत्रशुक्रम् । एवं पुरीषशुक्रम् । आर्तवमपि शुक्रवद्दोषदूषितबीजमेव । तस्य लिङ्गं नाम च शुक्रवद्बोध्यम् । यथा—वातार्तवं पित्तार्तवमित्यादियावत्पुरीषार्तवमिति । साध्यासाध्यविभागश्च तद्वदेव । शुक्रार्तवदोषेषु च चिकित्सामपि तुल्यां ब्रूते । यत्र तु विशेषं वक्ष्यति तत्र विशेषमभिधास्यति। यथा 'पिबेद् ग्रन्थ्यार्तवे पाठेत्यादि' ।

**स्वलिङ्गैर्दोषजं वदेत् ॥ १० ॥**

**रक्तेन कुणपं श्लेष्मवाताभ्यां ग्रन्थिसन्निभम् ।**
**पूयाभं रक्तपित्ताभ्यां क्षीणं मारुतपित्ततः ॥ ११ ॥**

स्वलिङ्गैरिति । स्वानि च तानि लिङ्गानि लक्षणानि च स्वलिङ्गानि यथास्वं वातादीनां स्वरूपाणि । यथा रूक्षश्यावारुणादीनि वायोः । विस्रगन्धोष्णादीनि पित्तस्य । स्निग्धपाण्डुपिच्छिलादीनि कफस्य । तैः स्वलिङ्गैर्वातादिदोषजं वदेज्जानीयाद्वैद्य इति शेषः । रक्तेन दुष्टेन कुणपगन्धित्वात्कुणपं कुणपसंज्ञमन्वर्थं रेतोऽस्रं भवति । एवं ग्रन्थ्यादीनामप्यन्वर्थसंज्ञता बोध्या । श्लेष्मवाताभ्यां दुष्टाभ्यां ग्रन्थिसन्निभं ग्रन्थ्याकारम् । रक्तपित्ताभ्यां पूयसदृशं रेतोऽसृं पूयाख्यं भवति । क्षीणं नाम रेतोऽस्रं मारुतपित्ततो भवति । मारुतपित्ताभ्यां दुष्टाभ्यां दुष्टं तद्दूषणात्क्षीणतां नीतमित्यर्थः ।

**कृच्छ्राण्येतान्यसाध्यं तु त्रिदोषं मूत्रविट्प्रभम् ।**

पूर्वोक्तानीमानि वातादिशुक्रार्तवानि क्षीणशुक्रार्तवान्तानि कृच्छ्रसाध्यत्वात्कृच्छ्राणि । असाध्यं त्विति । मूत्रं च विट् च मूत्रविशौ तयोरिव प्रभा यस्य तदेवं रेतोऽस्रमुभयमपि मलसंज्ञं त्रिदोषदुष्टमसाध्यं साधयितुमशक्यम् ।

इदानीमुपक्रममाह—

**कुर्याद्वातादिभिर्दुष्टे स्वौषधम्,**

स्वमात्मीयं च तदौषधं च स्वौषधम् । वाताद्यौषधमित्यर्थः । तेन वायोः कुपितस्य यदौषधं प्रशमोपायः स्निग्धोष्णाम्ललवणादि । पित्तस्य मधुरशीतकषायादि । श्लेष्मणः कटुकरूक्षकषायादि । तत्तस्य भेषजमित्यवतिष्ठते । विशेषतस्तु— "वातजे शुक्रदोषे शुक्रसैन्धवफलाम्लसिद्धं यवक्षारप्रतीवापं सर्पिःपानम् । बिल्वविदारीसिद्धं क्षीरयुक्तमास्थापनम् । मधुभद्रदारुसिद्धं तैलमनुवासनम् । क्षीरकुलीररससिद्धं तैलमनुवासनमुत्तरबस्तिश्च । पैत्तिके काण्डेक्षुश्वदंष्ट्रागुडूचीक्वाथसिद्धं मूर्वामधूकप्रतीवापं सर्पिःपानम् । त्रिवृच्चूर्णः सघृतो विरेकः । पयस्याश्रीपर्णीसिद्धं क्षीरयुक्तमास्थापनम् । मधुकमुद्गपर्णीसिद्धं तैलमनुवासनमुत्तरबस्तिश्च । श्लैष्मिके पाषाणभेदाश्मन्तकामलकक्वाथसिद्धं पिप्पलीमधुकचूर्णप्रतीवापं सर्पिःपानम् । मदनफलकषायो वमनम् । दन्तीविडङ्गचूर्णस्तैललीढो विरेकः । राजवृक्षमदनफलकषायप्रगाढमास्थापनम् । मधुकपिप्पलीसिद्धं तैलमनुवासनमुत्तरबस्तिश्च । वातजे पुष्पदोषे भार्गीभद्रदारुसिद्धं सर्पिःपानम् । काश्मर्यक्षुद्रसहासिद्धं वा क्षीरं मधुकशृगालविन्नाकल्कं पयःसर्पिःसहितं प्रियङ्गुतिलकल्कं वा योनौ धारयेत् । सरलमुद्गपर्णीकषायः प्रक्षालनम् । पित्तजे काकोलीद्वयविदारीमूलक्वाथमुत्पलपद्मकक्वाथं मधुकपुष्पकाश्मर्यफलक्वाथं वा सशर्करं पिबेत् । श्वेतचन्दनक्वाथं वा सक्षौद्रम्" इत्यादिकं सङ्ग्रहे बोध्यम् ।

इदानीं कुणपचिकित्सामाह—

कुणपे पुनः ॥ १२ ॥

**धातकीतुष्पखदिरदाडिमार्जुनसाधितम्।**
**पाययेत्सर्पिरथवा विपक्वमसनादिभिः ॥ १३ ॥**

कुणपाह्वये तु रेतसि धातक्यादिद्रव्यसाधितं घृतं पाययेत्। वैद्य इति शेषः। अथवाऽसनादिभिरसनादिगुणोद्दिष्टैर्भेषजैर्विपक्वं घृतं पाययेत्। ननु कुणप इति सामान्योक्तावपि कथं रेतसीति विशेषो लभ्यते? ब्रूमः। रेतःप्रकरणात्। अपिच कुणपास्रस्य पुरस्तादुपक्रमं वक्ष्यति—'पेयं कुणपपूयास्र इति' तस्माद्रेतस एवेह ग्रहणं युक्तम्। पुनर्ग्रहणमत्र वातादिदुष्टे रेतस्यस्योक्तां क्रियां न कुर्यादिति द्योतयति।

साम्प्रतं ग्रन्थिसंज्ञे रेतस्युपक्रमं ब्रूते—

**पलाशभस्माश्मभिदा ग्रन्थ्याभे,**

पलाशस्य भस्म पलाशभस्म। अश्मभित्पाषाणभेदः। पलाशभस्म चाऽश्मभिच्च तेन विपक्वं घृतं ग्रन्थ्याभे ग्रन्थिनाम्नि रेतसि पाययेत्।

**पूयरेतसि।**
**परूषकवटादिभ्याम्,**

पूयाख्ये रेतसि परूषकवटादिभ्यां विपक्वं घृतं पाययेत्। परूषकश्च वटश्च परूषकवटौ, तावादी ययोस्तौ परूषकवटादी, ताभ्याम्। 'परूषकं वरा द्राक्षेति' परूषकादिः। तथा 'न्यग्रोधपिप्पलेति' वटादिः।

**क्षीणे शुक्रकरी क्रिया ॥ १४ ॥**
**स्निग्धं वान्तं विरिक्तं च निरूढमनुवासितम्।**
**योजयेच्छुक्रदोषार्तं सम्यगुत्तरबस्तिभिः ॥ १५ ॥**

क्षीणे क्षीणत्वात् क्षीणाह्वये रेतसि शुक्रकरी क्रिया कार्येति शेषः। शुक्रलमतिशयेन सेव्यमित्यर्थः।

**संशुद्धो विट्प्रभे सर्पिर्हिङ्गुसेव्यादिसाधितम्।**
**पिबेत्,**

संशुद्धः कृतवमनविरेचनो विट्प्रभे मलसदृशे रेतस्यातुरो घृतं पिबेत्। किम्भूतम्? हिङ्गुसेव्यादिसाधितम्। अत्राऽऽदिशब्दो व्यवस्थावाची। तेन सङ्ग्रहोक्तस्य "हिङ्गूशीरचित्रकप्रियङ्गुसमङ्गामृणालसिद्धं त्वगेलाचोचचूर्णप्रतीवापमित्यस्य पाठस्य" सूचना भवति। हिङ्गुसेव्याग्निसाधितमित्यपरे पेठुः। नन्वसाध्यं तु त्रिदोषं मूत्रविट्प्रभमित्युवाच तन्त्रकृत्। तत्किमित्यस्य चिकित्सोपदिष्टा? ब्रूमः। किञ्चित्साध्यताप्यस्यास्तीति प्रतिपादयितुं चिकित्सामुपदिदेश शास्त्रकारः। अत एव मूत्रप्रभस्यासाध्यत्वाच्चिकित्सां नोपादिशत्। मूत्रप्रभार्तवविट्प्रभार्तवयोरप्यसाध्यत्वादेवोपक्रमं नाभ्यधात्।



वाताद्यार्तवेषु स्वौषधं कुर्यादित्युक्तम् । कुणपग्रन्थ्याद्यार्तवेषु विशेषेण चिकित्सां वक्ष्यति ।

**ग्रन्थ्यार्तवे पाठाव्योषवृक्षकजं जलम् ॥ १६ ॥**

ग्रन्थ्यार्तवे ग्रन्थिनाम्न्यार्तवे स्त्रीरजसि जलं पिबेत् । किम्भूतम् ? पाठादिजातम् । पाठा प्राचीना । व्योषं त्रिकटुकम् । वृक्षकः कुटजः ।

**पेयं कुणपपूयास्रे चन्दनं, वक्ष्यते तु यद् ।**
**गुह्यरोगे च, तत्सर्वं कार्यं सोत्तरबस्तिकम् ॥ १७ ॥**

कुणपाख्ये रजसि पूयाख्ये वाऽपि चन्दनं पेयम् । अत्र 'द्रवानुक्तौ जलं देयमिति' परिभाषया जलेन पातव्यमिति बोध्यम् । क्षीणार्तव इह चिकित्सितं नोक्तं तच्च स्वधियोह्यम् । यथा क्षीणरेतसि शुक्रकरी क्रिया कार्येत्युक्तं तथा क्षीणे रक्ते रक्तकरी क्रिया कार्येति । नच केवलमेतत्पूर्वोक्तमेव चिकित्सितं कार्यं यावद्गुह्यरोगप्रतिषेधे यद्वक्ष्यते भणिष्यते, तदपि सर्वं साधनं यथायोगं वमनादि योनौ पिचुकधारणादिकं च कार्यम् । किम्भूतम् ? सोत्तरबस्तिकम् । उत्तरबस्तिरपि तत्र कार्य इत्यर्थः । 'सोत्तरबस्तिकमिति तेन सहेतितुल्ययोग इति बहुव्रीहिः । शेषाद्विभाषेति कप् । वोपसर्जनस्येति सभावः' । उत्तरबस्तिरपि तत्रौषधमित्यर्थः ।

बीजाऽसमर्थं रेतोऽस्रमभिधाय साम्प्रतं शुद्धं यच्छुक्रार्तवं बीजसमर्थं तल्लक्षणार्थमाह—

**शुक्रं शुक्लं गुरु स्निग्धं मधुरं बहुलं बहु ।**
**घृतमाक्षिकतैलाभं सद्गर्भाय,**

'शुद्धे शुक्रार्तवे' इति पूर्वं शुक्रस्योपदेशात्प्राधान्याच्च शुक्रस्य पूर्वमुपन्यासः । तत्राहाररसस्य सम्यक्परिणतस्य क्रमान्मज्जानमनुप्राप्तस्य सारः शुक्रसंज्ञां लभते । तच्च क्षीर इव सर्पिरिक्षुरस इव गुडः । शरीरे शुक्रधरां कलामाश्रित्य सर्वाङ्गव्यापितया स्थितं विशेषतश्च मज्जमुष्कस्तनेषु हर्षोदीरितं सङ्घट्टनेन हृदयावेशात् पिण्डीभूतमङ्गादङ्गात्प्रवर्तते तच्च शुक्लादिगुणयुक्तं शुक्रम् । तत्र घृताभं माक्षिकाभं तैलाभं वा सद्गर्भाय शोभनगर्भार्थं भवति । तत्र घृताभेन गौरवर्णत्वं गर्भस्य । माक्षिकाभेन श्यामवर्णत्वम् । तैलाभेन कृष्णवर्णत्वं भवति ।

**आर्तवं पुनः ॥ १८ ॥**
**लाक्षारसशशास्राभं धौतं यच्च विरज्यते ।**

रक्तमेव स्त्रीणां मासि मासि गर्भकोष्ठमनुप्राप्य त्र्यहं प्रवर्तमानमार्तवमाचक्षते । अतिप्रसङ्गेनानृतौ वा प्रवर्तमानं तदेवासृग्दरादिसंज्ञां लभते । यदार्तवं लाक्षारसाभमलक्तकरससदृशं तथा शशरुधिरसदृशम् । तथा यच्च धौतं सद्विरज्यते वस्त्रादिलग्नं धौतं सल्लौहित्यं जहातीत्यर्थः । तदीदृशमार्तवं तु सद्गर्भाय सम्पद्यते ।

शुद्धशुक्रार्तवलक्षणमुक्त्वेदानीं गर्भसम्भवात्पूर्वमितिकर्तव्यतामाह—



**शुद्धशुक्रार्तवं स्वस्थं संरक्तं मिथुनं मिथः ॥ १९ ॥**
**स्नेहैः पुंसवनैः स्निग्धं शुद्धं शीलितबस्तिकम् ।**

शुक्रं चार्तवं च शुक्रार्तवे । शुद्धे शुक्रार्तवे यस्य मिथुनस्य तच्छुद्धशुक्रार्तवं स्त्रीपुरुषयुगलं समुपाचरेदिति सम्बन्धः । तथा स्वस्थमरोगं रोगलेशेनाप्यनाक्रान्तम् । तथा मिथः परस्परं संरक्तमनुरागयुक्तमन्योन्यदर्शनेन कुसुमचापाविष्टमेवंविधम् । स्नेहैः पुंसवनैर्यथाभिमतगर्भग्रहणप्रभावैः फलसर्पिर्महाकल्याणकादिभिः स्निग्धम् । शुद्धं कृतवमनविरेचनम् । तथा शीलितबस्तिकम् । शीलिता अभ्यासेनानुष्ठिता बस्तयो येन मिथुनेन तच्छीलितबस्तिकम् । न सकृदेवानुष्ठितबस्तिकमित्यर्थः ।

एवं दम्पत्योस्तुल्यामितिकर्तव्यतामभिधायेदानीमनयोः पृथगुपक्रमं वक्ति—

**नरं विशेषात्क्षीराज्यैर्मधुरौषधसंस्कृतैः ॥ २० ॥**

नरमिति । विशेषाद्विशेषणातिशयेन नरं क्षीरैर्घृतैश्च समुपाचरेदिति सम्बन्धः । विशेषादित्यनेनैतद् द्योतयति—विशेषेण नरं क्षीराज्यैः समुपाचरेन्न पुनर्नारीमपि तैः समुपाचरेदिति । किम्भूतैः ? मधुरौषधसंस्कृतैः । मधुराणि मधुरप्रायाणि मधुरप्रभावाणि च तान्यौषधानि जीवनीयादीनि तैर्मधुरौषधैः संस्कृतैः सिद्धैरित्यर्थः ।

**नारीं तैलेन माषैश्च पित्तलैः समुपाचरेत् ।**

नारीं तैलेन माषैश्च समुपाचरेत् । चशब्दोऽत्र भिन्नक्रमः । पित्तलैश्च समुपाचरेदित्यर्थः । पित्तलानि हि रक्तवृद्धिहेतवः । उक्तं हि—'आश्रयाश्रयिणां मिथः । यदेकस्य तदन्यस्य वर्धनक्षपणौषधमिति' । एवं च तैलं पित्तकृत्त्वादेवोपन्यस्तम् । विशेषादित्यत्राऽप्यनुवर्तते । क्षीराज्येभ्योऽपि विशेषेण नारीं तैलादिभिः समुपाचरेदित्यर्थः । पुरुषस्य तु रजसोऽभावात्तद्वृद्धिहेतवस्तैलादयो नोपयुज्यन्त एव ।

एवं पूर्वोक्तसकलसामग्रीयुक्तादपि मिथुनाद्विशिष्टकालमन्तरेण गर्भस्यासम्भव इति स्त्रियमधिकृत्य तद्गर्भग्रहणयोग्यं कालं दर्शयितुमाह—

**क्षामप्रसन्नवदनां स्फुरच्छ्रोणिपयोधराम् ॥ २१ ॥**
**स्रस्ताक्षिकुक्षिं पुंस्कामां विद्यादृतुमतीं स्त्रियम् ।**

कार्श्यहेतुं विना क्षामं तथा प्रसन्नं निर्मलं वदनं मुखं यस्याः सैवंभूता, ताम् । श्रोणिश्च पयोधरौ च श्रोणिपयोधरम् । स्फुरत्कम्पमानं श्रोणिपयोधरं यस्यास्ताम् । श्रोणिः कटिः । स्रस्ते चलिते इवाक्षिणी कुक्षिश्च यस्यास्ताम् । तथा पुंसि कामोऽभिलाषो यस्यास्ताम् । एवंविधां स्त्रियमृतुमतीमृतुयुक्तां विद्यात् । तस्याः स गर्भग्रहणकाल इत्यर्थः । ' पुंस्कामामिति संपुंकानां सो वक्तव्य इति मकारस्य सकारादेशाद्रुत्वाभावः ' ।

"सर्वं च हेतुमद् भूयाद्" इत्यागमः । अत आह—

**पद्मं सङ्कोचमायाति दिनेऽतीते यथा, तथा-॥ २२ ॥**



**ऋतावतीते योनिः सा शुक्रं नातः प्रतीच्छति ।**

यथा दिवा प्रफुल्लं पद्ममनन्तरं दिवसातिक्रान्तौ सङ्कोचमायाति मुकुलभावं प्राप्नोति तत्स्वभावत्वात्तस्य। तथा तेनैव प्रकारेण ऋतौ द्वादशरात्रस्वभावे, अतीतेऽतिक्रान्ते योनिः सङ्कोचमायाति । सा च योनिः सङ्कुचितत्वाच्छुक्रं न प्रतीच्छति।

विवृताविवृतमुखत्वं हि योनेर्गर्भग्रहणाग्रहणहेतुस्तच्च वायोः क्रियावतः कालसहायस्यायत्तमित्याह—

**मासेनोपचितं रक्तं धमनीभ्यामृतौ पुनः ॥ २३ ॥**
**ईषत्कृष्णं विगन्धं च वायुर्योनिमुखाद् नुदेत् ।**

मासेन यदुपचितमाहाररसतो वृद्धिं प्राप्तं रक्तं तत्पुनर्मासोपचितं रक्तमृतौ वायुर्योनिमुखाद् नुदेत्प्रेरयेत्। 'विधौ लिङ्'। तदा योनिमुखं विवृतं सम्पद्यते। केन नुदेत् ? धमनीभ्यां स्रोतोविशेषाभ्याम्। किम्भूतं रक्तम्? ईषत्कृष्णं तथा विगन्धं विस्रगन्धरहितम् । प्रकृतिस्थप्रेरकपवनसम्पर्कादीषत्कृष्णता । नतु कुपितसमीरणप्रेरणासंश्लेषवशादिवात्यन्तं कृष्णता। नाऽपि पित्तेन तथाभूतेन युक्तं येन विस्रगन्धि स्यात्। नाऽपि श्लेष्मणा तथाभूतेन युक्तं येन तद्वर्णयुक्तं स्यात्। तस्माच्छुद्धं विशिष्टे काले योनिमुखात्प्रवर्तमानं रक्तमार्तवसंज्ञां लभेत। तदेव वाऽन्यदा योनिमुखात्प्रवर्तमानमसृग्दरसंज्ञामासादयति। शुद्धं च रक्तं पुष्पसंज्ञं गर्भाख्यस्य फलस्य भविष्यतोऽभिव्यञ्जकत्वात्।

अत एवाह—

**ततः पुष्पेक्षणादेव कल्याणध्यायिनी त्र्यहम् ॥ २४ ॥**
**मृजालङ्काररहिता दर्भसंस्तरशायिनी ।**
**क्षैरेयं यावकं स्तोकं कोष्ठशोधनकर्षणम् ॥ २५ ॥**
**पर्णे शरावे हस्ते वा भुञ्जीत ब्रह्मचारिणी ।**

तत इति। पुष्पेक्षणात्पुष्पस्य दर्शनादेव दर्शनानन्तरं स्त्री त्र्यहं त्रीणि दिनानि कल्याणं शुभमवश्यं ध्यायति चिन्तयतीति कल्याणध्यायिनी स्यात्। 'आवश्यके णिनिः'। तथा मृजा स्नानक्रिया। अलङ्कारः कटकादिः पुष्पादिर्वा । अलंक्रियते भूष्यते शरीरमेभिरिति कृत्वा गन्धमाल्यस्याप्यलङ्कारत्वम् । तथा च वक्ष्यति—'गन्धमाल्यादिकां भूषामिति'। मृजालङ्काराभ्यां रहिता वर्जिता । तथा दर्भाणां संस्तरः शय्या तत्र शेते सा दर्भसंस्तरशायिनी। 'व्रत इति णिनिः' तथा त्र्यहं क्षैरेयं क्षीरसिद्धं यावकं यवान्नविशेषं पर्णे शरावे हस्ते वा भुञ्जीत भक्षयेत्। कियन्मात्रम् ? स्तोकमल्पमात्रम् । तत्क्षैरेयमुपयुक्तं कीदृशं स्यादित्याह—कोष्ठेत्यादि। शोधनं च कर्षणं च शोधनकर्षणम्। 'कोष्ठस्य शोधनकर्षणमिति षष्ठीसमासः'। शरीरस्य महास्रोतो मध्यमो भाग आमपक्काशयः कोष्ठशब्दवाच्यः, स एव गर्भाधिष्ठानमतस्तस्यैव शोधनम्। तथा तदङ्गानां कर्षणमिति व्याख्येयम्।

न पुनः कोष्ठस्य शोधनमन्येषां चाङ्गानां कर्षणम् । यथा हि त्रिवृतादिना विरिच्यते नैवमनेन यावकेन, वस्तुस्वाभाव्यात्; कोष्ठशोधनकर्षणमात्रमेव क्रियते । 'क्षैरेय-मिति क्षीराड्ढञिति ढञ् । याव एव यावक इति यावादिभ्यः कन्निति कन्' । तथा ब्रह्मचारिणी त्यक्तव्यवाया स्यात् ।

**चतुर्थेऽह्नि ततः स्नात्वा शुक्लमाल्याम्बरा शुचिः ॥ २६ ॥**
**इच्छन्ती भर्तृसदृशं पुत्रं पश्येत्पुरः पतिम् ।**

ततस्त्र्यहादूर्ध्वं चतुर्थे वासरे स्नाता तथा शुक्लानि माल्यान्यम्बराणि च यस्याः, सैवम् । तथा शुचिरन्तर्बहिश्च पवित्रा सती पुरः पूर्वं पतिं पश्येत् । सङ्ग्रहेऽप्युक्तम्— "चतुर्थे त्वहन्युद्वर्तिता शीतसलिलस्नाताऽनुलिप्ताऽलङ्कृता शुक्लमाल्याम्बरा कृत-मङ्गलस्वस्त्ययनैवंविधमेव भर्तारं पश्येदनन्यमनाः" । तथा हि—'यादृशं पश्यति चिन्तयति वा तादृशमेव प्रसूत इति' ।

तत्किं त्र्यहमेव ऋतुरत्रैव पुष्पदर्शनाद्, अथवोत्तरकालमपि? इत्याशङ्क्याऽऽह—

**ऋतुस्तु द्वादश निशाः, पूर्वास्तिस्रोऽत्र निन्दिताः ॥ २७ ॥**
**एकादशी च, युग्मासु स्यात्पुत्रोऽन्यासु कन्यका ।**

ऋतुदर्शनात्प्रभृति यावद्द्वादशरात्रयस्तावदृतुर्योषितः, न पुनस्त्र्यहमेव—यत्र पुष्पं प्रवर्तत इति, तुशब्देन दर्शयति । अत्रास्मिन् द्वादशनिशावधावृतुकाले याः पूर्वास्तिस्रो निशाः, यासु प्रायः पुष्पं प्रवर्तते, ता निन्द्या गर्ह्याः सद्भिः । न तत्र सन्मतिः स्त्रियं सङ्गच्छेत् । अत एवाऽत्र ब्रह्मचारित्वोपदेशः । तथैकादशी निशा निन्द्याऽप्रशस्ता । चशब्दोऽत्रानुक्तायास्त्रयोदश्याः समुच्चयार्थः । त्रयोदश्यां हि मिथुनीभावे नपुंसकस्योत्पत्तिरिति केचिदाहुः । युग्मासु चतुर्थषष्ठाष्टमदशमद्वादश-लक्षणासु निशासु सङ्गमे पुत्रः स्यादचिन्त्यत्वाद्धेतुप्रभावस्य । तासु हि रात्रिष्वार्तव-मल्पीभवति । अन्यास्वयुग्मासु निशासु पञ्चमीसप्तमीनवमीषु कन्या जायते । तदा हि शुक्रमल्पीभवति पूर्वोक्ताद्धेतोः । यदि पुनराहारादिवशात् शुक्रस्याधिक्यमयुग्मासु, युग्मासु च न्यूनता स्यात्तदा पुमान् स्त्र्याकृतिर्दुर्बलो हीनाङ्गो वा जायते । स्त्री च पुरुषाकृतिर्दुर्बला हीनाङ्गा वा । उक्तं हि—"स्त्रियाः शुक्रेऽधिके स्त्री स्यात्पुमान्पुंसोऽधिके भवेत् । तस्माच्छुक्रविवृद्ध्यर्थं वृष्यं स्निग्धं च सेवयेत् ।" एकादशीत्रयो-दश्योस्तु नपुंसकमिति । तदेवं दम्पती पुंगर्भमिच्छन्तौ युग्मासु निशासु पुंसवना-दिकं कर्माचरेताम् । स्त्रीगर्भमिच्छन्तौ त्वयुग्मासु रात्रिषु ।

**उपाध्यायोऽथ पुत्रीयं कुर्वीत विधिवद्विधिम् ॥ २८ ॥**
**नमस्कारपरायास्तु शूद्राया मन्त्रवर्जितम् ।**

अथेत्यानन्तर्ये मङ्गलसूचको निर्दिष्टः । अत एवाऽयमत्रार्थः—ऋतुकालाद-नन्तरं मङ्गलपूर्विकां सर्वामिमां वक्ष्यमाणामितिकर्तव्यतां कुर्यादिति । उपाध्यायः

पुरोहितोऽथर्ववेदवित्, पुत्रीयं पुत्राय हितं विधिमिष्टिं कुर्वीत । कथम्? विधिवद्, न यथाकथञ्चित् । 'विधिवदिति प्रशंसायां मतुप्' । क्रियाविशेषणं चैतत् । तेन प्रशस्तं वेदोक्तमन्यूनातिरिक्तं विधानं यथा भवति तथा विधिं कुर्वीतेत्यवतिष्ठते । ब्राह्मणादिवर्णत्रयस्यैवं विधिं कुर्वीत । शूद्रायाः पुनर्नमस्कारपराया नमस्कारप्रधानाया यथोक्तं सर्वविधिं मन्त्रवर्जितं कुर्यात् । 'पुत्रीयमिति पुत्राच्छ चेति च्छः' ।

**अवन्ध्य एवं संयोगः स्यादपत्यं च कामतः ॥ २९ ॥**

एवं यथोक्तविध्यनुष्ठाने दम्पत्योर्यः संयोगो मिथुनीभावः, स न वन्ध्यः स्यात् । अपि तु सफलो गर्भसम्भवहेतुर्भवेदित्यर्थः । न केवलं दम्पत्योः संयोग एव निष्फलो न भवेद्, अपत्यं च कामतो यथाभिमतं पुङ्गर्भरूपं स्त्रीगर्भरूपं वा स्यात् ।

अत एवाह—

**सन्तोऽप्याहुरपत्यार्थं दम्पत्योः सङ्गतं रहः ।**

रहःशब्देन ग्राम्यवचसाऽत्र ग्राम्यधर्मं सूचयति । हि यस्मात्सन्तः साधवोऽपत्यार्थमपत्यजननार्थं दम्पत्योः स्त्रीपुरुषयोः, रह एकान्ते विशिष्टकालोचितं विशिष्टसंयोगं सङ्गतमाहुः ।

न ग्राम्यसुखलिप्सायै न चापत्यमात्रायेत्याह—

**दुरपत्यं कुलाङ्गारो गोत्रे जातं महत्यपि ॥ ३० ॥**

दुष्टापत्यं स्त्रीगर्भः पुङ्गर्भो वा महत्यपि गोत्रे जातमुत्कृष्टेऽपि कुल उत्पन्नमङ्गारकार्यकरणसामर्थ्यात्समस्तकुलविनाशहेतुत्वात्कुलाङ्गार इत्युच्यते ।

**इच्छेतां यादृशं पुत्रं तद्रूपचरितांश्च तौ ।**
**चिन्तयेतां जनपदांस्तदाचारपरिच्छदौ ॥ ३१ ॥**

तौ दम्पती यादृशं पुत्रमिच्छेतां कामयेतां तद्रूपचरितान् जनपदांश्चिन्तयेताम् । रूपं वर्णसंस्थानप्रमाणाकृत्यादि । तथा चरितं श्रुद्धाश्रुतसत्यार्जवानृशंस्यदानदयादाक्षिण्यस्वभावादि, तस्य मनीषितस्य सदृशे रूपचरिते येषां, तान् जनपदांश्चिन्तयेतां ध्यायेताम् । पुत्रशब्दोऽपत्यमात्रोपलक्षणार्थोऽत्र । तथाहि । दुहितरमपि कश्चिदिच्छत्येव । किम्भूतौ तौ पितरौ ? तदाचारपरिच्छदौ । आचरणमाचारः कुलानुरूपस्य चेतिकर्तव्यतालक्षणस्य कर्मणोऽनुष्ठानम् । परिच्छदो मनुजगवाश्वधनधान्यवस्त्रालङ्काररत्नरथायुधगृहोद्यानवीणापणवगायनशय्यास्तरणादिः । आचारश्च परिच्छदश्चाचारपरिच्छदौ तदित्यनेनाभिलषितापत्यं परामृश्यते । तस्यैवाऽऽचारपरिच्छदौ ययोस्तौ दम्पती इच्छासदृशरूपचरितान् जनपदान् ध्यायेताम् ।

**कर्मान्ते च पुमान्सर्पिःक्षीरशाल्योदनाशितः ।**
**प्राग्दक्षिणेन पादेन शय्यां मौहूर्तिकाज्ञया ॥ ३२ ॥**
**आरोहेत् स्त्री तु वामेन तस्य दक्षिणपार्श्वतः ।**
**तैलमाषोत्तराहारा तत्र मन्त्रं प्रयोजयेत् ॥ ३३ ॥**



कर्मान्त इति । कर्मान्ते च पुत्रीयविध्यनुष्ठानावसाने च पुमान् स्त्रीतः प्राक् पूर्वं शय्यामारोहेदाक्रामेत् । किम्भूतः ? सर्पिःक्षीरशाल्योदनाशितः । सर्पिर्मिश्र-क्षीरशाल्योदनेनाऽशितो भोजितः । कथमारोहेद्दक्षिणेन पादेन मौहूर्तिकाज्ञया ज्योतिःशास्त्रविदादिष्टः । स्त्री तु वामेन पादेन तस्य दक्षिणपार्श्वतः शय्यामारोहेन्मौ-हूर्तिकाज्ञयेति योज्यम् । तुरवधारणे । उभयत्राऽपि पुमान् दक्षिणेनैव पादेन प्रागेव । स्त्री पश्चादेव वामेनैव पादेन पुंसो दक्षिणपार्श्वत एव शय्यामारोहेन्नान्यथा-कृत्वेति । पुमान् सर्पिःक्षीरशाल्योदनाशित इत्युक्तम् । स्त्रियास्तु तत्कालोचित-माहारं निरूपयन्नाह--तैलं च माषाश्च ताभ्यामुत्तरोऽधिक आहारो यस्याः सैवम् । उत्तरशब्दोऽत्र, तैलमाषौ पित्तलौ रक्तवृद्धिहेतुतयाऽत्यन्तं सेवितव्यौ, न पुनस्तथा शुक्रवृद्धिकराण्यन्यान्यपि क्षीरादीनि द्रव्याणीति प्रतिपादयति । तत्र च मन्त्रं वक्ष्यमाणं प्रयोजयेत्पठेत् ।

तमेव मन्त्रमाह—

**अहिरसि आयुरसि सर्वतः प्रतिष्ठासि धाता त्वां**
**दधातु विधाता त्वां दधातु ब्रह्मवर्चसा भवेति ।**
**ब्रह्मा बृहस्पतिर्विष्णुः सोमः सूर्यस्तथाश्विनौ ।**
**भगोऽथ मित्रावरुणौ वीरं ददतु मे सुतम् ।**

अहिरसीत्यादि वीरं ददतु मे सुतमित्यन्तं मन्त्रं पठेत् ।

**सान्त्वयित्वा ततोऽन्योऽन्यं संविशेतां मुदान्वितौ ।**
**उत्ताना तन्मया योषित्तिष्ठेदङ्गैः सुसंस्थितैः ॥ ३४ ॥**

ततो मन्त्रपाठादनन्तरं परस्परं सान्त्वयित्वा प्रियवचनादिना प्रीतिमुत्पाद्य सं-विशेतां मिथुनीभावं गच्छेताम् । किम्भूतौ ? मुदा हर्षेणान्वितौ युतौ । तत्र च संवेशने योषिदुत्ताना तच्चित्ता च अवयवैः सुसंस्थितैस्तिष्ठेत् ।

किमेवं सति भवतीत्याह—

**तथा हि बीजं गृह्णाति दोषैः स्वस्थानमास्थितैः ।**

हि यस्मात्तथा तेन प्रकारेण सा बीजं गृह्णाति दोषैर्वातादिभिः स्वस्थानाव-स्थितैः सद्भिः । सङ्ग्रहे तूक्तम्—"न चासावधस्तिष्ठेत् । तथाहि स्त्रीचेष्टः पुमान् जायते पुंचेष्टा वा स्त्री च । न च न्युब्जां पार्श्वगतां वा सेवेत । न्युब्जाया वातो बलवान् स योनिं पीडयति । दक्षिणपार्श्वगायाः श्लेष्मा पीडितश्च्युतः पिदधाति गर्भाशयम् । वामपार्श्वगतायास्तत्पित्तं विदहति रक्तशुक्रे । तस्मादुत्ताना बीजं गृह्णीयादिति" ।

**लिङ्गं तु सद्योगर्भाया योन्या बीजस्य सङ्ग्रहः ॥ ३५ ॥**
**तृप्तिर्गुरुत्वं स्फुरणं शुक्रास्राऽननुबन्धनम् ।**
**हृदयस्पन्दनं तन्द्रा तृड्ग्लानिर्लोमहर्षणम् ॥ ३६ ॥**



लिङ्गमिति। सद्यस्तत्क्षणाद्गर्भो यस्याः सैवं तस्याः सद्योगभार्या लक्षणं बीजस्य गर्भाख्यस्य योन्या करणभूतया सङ्ग्रहः सम्यग्ग्रहणम्। तथा तृप्तिरिव तृप्तिः। गुरुत्वं स्फुरणं च कुक्षेर्भवति। तथा शुक्रं चास्रं च शुक्रास्रे। अनुबन्धनं प्रवर्तनम्, नानुबन्धनमननुबन्धनं शुक्रास्रयोर्योनिमुखादवमनं बहिर्निःसरणमेतच्च योन्या गृहीतबीजत्वम्। तथा हृदयस्पन्दनादयः पञ्च सद्योगर्भाया लक्षणानि भवन्ति। लोमहर्षणं च हर्षवशाद्भवति। तथा च सङ्ग्रहे–"प्रहर्षो हृल्लास इत्यादि"।

इदानीं गर्भस्यावस्थाः प्रदर्शयितुमाह—

**अव्यक्तः प्रथमे मासि सप्ताहात्कलली भवेत्।**
**गर्भः पुंसवनान्यत्र पूर्वं व्यक्तेः प्रयोजयेत्॥ ३७॥**

सप्ताहादर्वाग्गर्भगोलकः श्लेष्मपिण्डीभूतो भवेत्। सप्ताहादनन्तरं यावन्मासंस्तावदव्यक्ताकृतिः कलली भवेत्। अत्र कललीभूते यावत्स्त्रीपुरुषाद्युत्पत्तिलक्षणा व्यक्तिर्न भवति तावद्व्यक्तेः प्राक् प्रथमे मासि पुंसवनानि प्रयोजयेत्।

ननु 'शुद्धे शुक्रार्तवे सत्वः स्वकर्मक्लेशचोदितः। गर्भः सम्पद्यते' इत्युक्तम्। तत्र यदि प्राक्कृतेन कर्मणा स्त्रीगर्भः कर्तुमाक्षिप्तस्तदा पुरुषप्रयत्ने सत्यपि पुङ्गर्भः कर्तुं न शक्यते। तस्मात्पुंसवनमनर्थकमेव? इत्याशङ्क्याह--

**बली पुरुषकारो हि दैवमप्यतिवर्तते।**

हि यस्मात्पुरुषकरो बलवान्, दुर्बलं दैवमतिवर्ततेऽतिक्रम्य वर्तते। अपिशब्दात्पुरुषकारमपि दुर्बलं, दिष्टं बलीयोऽतिक्रम्य वर्तत इति प्रतिपादयति। अन्यथा प्राक्कृतेन कर्मणा बलीयसा आक्षिप्तस्य स्त्रीगर्भस्य पुंसवनादिदानेन पौरुषेण कर्मणा शतशोऽपि प्रयोजितेन न कथञ्चित्पुङ्गर्भतां कर्तुं पार्येत इति। उक्तञ्च (मुनिना)। "दैवं पुरुषकारेण दुर्बलं ह्युपहन्यते। दैवेन चेतरत्कर्म प्रकृष्टेनोपहन्यत इति"। अत्र पुंसवनादि सम्यक् प्रयोजितं, सिद्ध्यसिद्ध्यनुमीयमानं प्राक्कृतस्य कर्मणो हीनबलप्रबलत्वमवगमयति।

अधुना पुंसवनप्रयोगमाह--

**पुष्ये पुरुषकं हैमं राजतं वाथवाऽऽयसम्॥ ३८॥**
**कृत्वाऽग्निवर्णं निर्वाप्य क्षीरे तस्याञ्जलिं पिबेत्।**

पुष्ये पुष्यनक्षत्रयुक्ते काले, पुरुषकं पुत्तलकं, हेमादिकृतमग्निवर्णं कृत्वा सुध्माततया, ततः क्षीरे निर्वाप्य शीतीकृत्य, तस्य क्षीरस्याञ्जलिं पलचतुष्टयाख्यं पिबेत्। 'पुरुषकमिति पुरुष इवेत्यस्मिन्नर्थे–इवे प्रतिकृताविति कन्। हैममिति हेम्नो विकारार्थेऽण्, नस्तद्धित इति टिलोपः। राजतमिति प्राणिरजतादिभ्योऽञिति अञ्। आयसमिति तस्येदमित्यण्'।

**गौरदण्डमपामार्गं जीवकर्षभसैर्यकान्॥ ३९॥**
**पिबेत्पुष्ये जले पिष्टानेकद्वित्रिसमस्तशः।**



गौरदण्डादींश्चतुरो द्रव्यविशेषान् पिबेत् । किम्भूतान् ? जले पिष्टान् कल्कीकृतान् । कथं कृत्वा ? एकद्वित्रिसमस्तशः । 'एकादिषु प्रत्येकं शस्प्रत्ययार्थयोगः' । तेनैकमेकं कृत्वा, द्वौ द्वौ कृत्वा, त्रींस्त्रीन्कृत्वा, चतुरश्चतुरः कृत्वैतान् पिबेदित्यर्थोऽवतिष्ठते । कदा प्राश्यम् ? पुष्ये पुष्ययुक्ते काले ।

**क्षीरेण श्वेतबृहतीमूलं नासापुटे स्वयम् ॥ ४० ॥**
**पुत्रार्थं दक्षिणे सिञ्चेद्वामे दुहितृवाञ्छया ।**

शुक्लपुष्पकण्टकारिकाया मूलं क्षीरेण कल्कीकृत्य स्वयं स्त्री दक्षिणे नासापुटे पुत्रार्थं पुत्रसम्पत्तये सिञ्चेत् । दुहितृवाञ्छया सुताकाम्यया वामे नासापुटे सिञ्चेत् ।

**पयसा लक्ष्मणामूलं पुत्रोत्पादस्थितिप्रदम् ॥ ४१ ॥**
**नासयाऽऽस्येन वा पीतं वटशुङ्गाष्टकं तथा ।**
**ओषधीर्जीवनीयाश्च बाह्यान्तरुपयोजयेत् ॥ ४२ ॥**

पयसेति । पयसा लक्ष्मणामूलं कल्कीकृत्य पीतं, पुत्रोत्पादप्रदं पुत्रस्थितिप्रदं च भवति । कथं पीतम् ? नासया आस्येन वा, कदाचिन्नासिकया कदाचिदास्येन । यस्याः पुत्रो नोत्पद्यते, तथोत्पन्नो वा स्थितिं न लभते चिरं न जीवति, तयैवं पातमित्यर्थः । वटशुङ्गाष्टकं तथा तेनैव प्रकारेण नासया आस्येन वा पीतं, पुत्रोत्पादस्थितिप्रदं भवति । न्यग्रोधस्य प्रथमोद्भिन्नः प्ररोहो वटशुङ्गस्तस्याऽष्टकमिति । प्रभावस्याऽचिन्त्यत्वादेतत्सङ्ख्यावच्छिन्नत्वम् । जीवनीया या ओषध्यो जीवन्तीकाकोल्याद्या दश शोधनादिगणसङ्ग्रहोक्तास्ता बाह्यान्तरुपयोजयेत् । तत्र स्नानोद्वर्तनादिना बाह्य उपयोगः । आहारपानादिनाऽन्तरुपयोगः ।

**उपचारः प्रियहितैर्भर्त्रा भृत्यैश्च गर्भधृक् ।**
**नवनीतघृतक्षीरैः सदा चैनामुपाचरेत् ॥ ४३ ॥**

उपचार उपचरणम् । प्रिया इष्टाः, हिताः पथ्याः, आहारविहारास्तैः प्रियहितैर्य उपचारो भर्त्रा पत्या कृतो भृत्यैश्च, य एवम्भूतः कृतः, गर्भधृक्, तदनुष्ठानाद्गर्भः स्थितिं दधातीत्यर्थः । एनां च स्त्रियं नवनीतादिभिर्यथासात्म्यं सदोपाचरेत्।

**अतिव्यवायमायासं भारं प्रावरणं गुरु ।**
**अकालजागरस्वप्नकठिनोत्कटकासनम् ॥ ४४ ॥**
**शोकक्रोधभयोद्वेगवेगश्रद्धाविधारणम् ।**
**उपवासाध्वतीक्ष्णोष्णगुरुविष्टम्भिभोजनम् ॥ ४५ ॥**
**रक्तं निवसनं श्वभ्रकूपेक्षां मद्यमामिषम् ।**
**उत्तानशयनं यच्च स्त्रियो नेच्छन्ति तत्त्यजेत् ॥ ४६ ॥**
**तथा रक्तस्रुतिं शुद्धिं बस्तिमामासतोऽष्टमात् ।**
**एभिर्गर्भः स्रवेदामः कुक्षौ शुष्येन्म्रियेत वा ॥ ४७ ॥**

अतीति । गर्भिणी स्त्री, अतिव्यवायादीनुत्तानशयनान्तांस्त्यजेत् । न केवल-

मेतानन्यच्चाहारविहारादिवस्तुजातं, स्त्रियो बहुशः प्रसूतास्तत्कालव्यापारनिपुणा वा याः काश्चन स्त्रियो नेच्छन्ति तदपि वर्जयेत् । तथा रक्तस्रुतिं शुद्धिं च वमनविरेचनरूपां त्यजेत् । बस्तिमनुवासनमष्टमं मासं मर्यादीकृत्य वर्जयेत् । अष्टमे मासि बस्तिं प्रयोजयेदेवेत्यर्थः । एभिर्वर्ज्यैर्वस्तुभिरासेव्यमानैर्गर्भ आमोऽसम्पूर्णः स्रवेत्पतेत् । कुक्षौ वा शुष्येद् म्रियते वा मृत्युं वा गर्भः प्राप्नुयात् ।

**वातलैश्च भवेद्गर्भः कुब्जान्धजडवामनः, ।**
**पित्तलैः खलतिः पिङ्गः, श्वित्री पाण्डुः कफात्मभिः ॥ ४८ ॥**

वातलैरिति । वातलैश्चाहारैर्मात्राऽसेवितैः कुब्जोऽन्धो जडो वामनो वा गर्भो भवति । पित्तलैराहारैर्मात्राऽसेवितैः खलतिः खल्वाटः, पिङ्गो वा स्यात् । कफकृद्भिराहारैर्मात्राऽसेवितैः श्वित्रवान् पाण्डुर्वा स्यात् ।

**व्याधींश्चास्या मृदुसुखैरतीक्ष्णैरौषधैर्जयेत् ।**

अस्याश्च गर्भिण्या ये व्याधयो जायन्ते, तान् व्याधीन् मृदुसुखैरौषधैस्तथाऽतीक्ष्णैर्जयेत् । मृदूनि च तानि सुखानि च मृदुसुखानि । मृदून्यकर्कशानि वीर्यादिभिर्नोत्कृष्टसामर्थ्यानि सुकुमारोचितानि । सुखानि सुखोपभोग्यानि प्रियाणीति यावत् । ननु मृदूनि परिहृत्यातीक्ष्णानि चेति निर्देष्टव्यं किमुभयोपादानेन ? यतो मृदून्यतीक्ष्णान्यप्यकर्कशानीत्यनर्थान्तरमेतयोः । अत्रोच्यते–मृदून्यकर्कशानि शर्करादीनि । उत्कृष्टशक्तीनि मरिचादीन्यतीक्ष्णानि । तीक्ष्णानि पुनस्तीक्ष्णगुणयुक्तानि राजिकादीनि दोषोत्क्लेशकराणि भेषजानि भवन्तीति द्वयोरुपादानं युक्तम् तन्त्रान्तरे तूक्तम्–"इत्यनात्ययिके व्याधौ, विधिरात्ययिके पुनः । तीक्ष्णैरपि क्रियायोगैः स्त्रियं यत्नेन पालयेदिति" । यच्च व्यवायादि गर्भिण्याः परिहार्यत्वेन निर्दिष्टं तथा 'व्याधींश्चास्या मृदुसुखैरतीक्ष्णैरौषधैर्जयेदिति', तदस्मिन् काले विशेषेणेति द्रष्टव्यम् । तथा चाऽन्यदातिव्यवायादिसेवनान्न तथा प्रत्यवायभयम् । तथा तीक्ष्णौषधप्रयोगाच्च । अत एव 'तथा रक्तस्रुतिं शुद्धिं बस्तिमामासतोऽष्टमाद्' इत्येतत्पृथङ्निर्दिशत्यतिव्यवायादिपरिहार्यगणमध्ये ।

प्रथमे मास्यव्यक्तलिङ्गः कललावस्थो गर्भो भवेत् । द्वितीये तु मासि गर्भः कीदृशः स्यादित्याह—

**द्वितीये मासि कललाद्घनः पेश्यथवाऽर्बुदम् ॥ ४९ ॥**
**पुंस्त्रीक्लीबाः क्रमात्तेभ्यः,**

द्वितीये मासि कललाद्घनः पेश्यथवाऽर्बुदं गर्भः स्यादिति योज्यम् । तेभ्यो घनादिरूपेभ्यः क्रमात् परिपाट्या पुंस्त्रीक्लीबाः सम्पद्यन्ते । घनात्पुमान् । पेशीतः स्त्री । अर्बुदात् क्लीबः षण्ढो न स्त्री न पुमानिति ।

**तत्र व्यक्तस्य लक्षणम् ।**

**क्षामता गरिमा कुक्षौ मूर्च्छाच्छर्दिररोचकः ॥ ५० ॥**



**जृम्भा प्रसेकः सदनं रोमराज्याः प्रकाशनम्।**
**अम्लेष्टता स्तनौ पीनौ सस्तन्यौ कृष्णचूचुकौ ॥ ५१ ॥**
**पादशोफो विदाहोऽन्ये श्रद्धाश्च विविधात्मिकाः।**

तत्र व्यक्ताव्यक्तयोर्मध्याद्व्यक्तो निर्धार्यते। व्यक्तस्य गर्भस्य वक्ष्यमाणं लक्षणं क्षामेतत्यादिकम्। 'गरिमा गुरोर्भाव इति पृथ्वादिभ्य इमनिज्वेतीमनिच्, प्रियस्थिरेत्यादिना गरादेशः'। विदाहोऽन्य इति। अन्ये आचार्याः, विदाहो देहे भवतीत्याहुः। नानाप्रकाराश्च श्रद्धाः पथ्यापथ्यविषया अभिलाषाः, व्यक्तस्य गर्भस्य लक्षणम्। सङ्ग्रहे तूक्तम्—"तस्याश्च रजोवाहिनां स्रोतसां वर्त्मान्युपरुध्यन्ते गर्भेण, तस्मात्ततः परमार्तवं न दृश्यते। ततस्तदधः प्रतिहतमपरमपरं चोपचीयमानमपरेत्याहुरिति।"

गर्भिण्याश्च श्रद्धासूत्पन्नासु किमपथ्यं तस्यै देयं न वेत्येवं सन्देहे तद्व्युदासार्थमाह—

**मातृजं ह्यस्य हृदयं मातुश्च हृदयेन तत्॥ ५२ ॥**
**सम्बद्धं तेन गर्भिण्या नेष्टं श्रद्धाविमाननम्।**

हि यस्मादस्य गर्भस्य यद्धृदयं चेतनाधिष्ठानं तन्मातृजम्। तथा चोक्तम्—'मृद्वत्र मातृजं रक्तेत्यादि'। तच्च गर्भहृदयं मातृहृदयेन सम्बद्धं संयुक्तं भवति। ततश्च गर्भिणीहृदयेन सन्तप्तेन गर्भहृदयमपि सन्तप्यते। परस्परं हृदयस्य सम्बद्धत्वात्। अत एव च गर्भिणी द्विहृदया दौर्हृदिनीत्युच्यते। अत एव च परायत्तहृदयत्वात्तत्काले स्वस्वभावोचितमभिलाषं विहाय नानाभिलाषा जायते। यतश्चैवं तेन कारणेन गर्भिण्याः श्रद्धाविमाननमभिलाषाऽप्रतिपूरणं नेष्टम्।

तदर्थमाह—

**देयमप्यहितं तस्यै हितोपहितमल्पकम्॥ ५३ ॥**

तस्यै गर्भिण्यै हितेन पथ्येन युक्तमहितमपथ्यमपि विदाहिविष्टम्भ्यादि पूर्वनिषिद्धं यत्तदपि देयम्। अपिशब्देन किमु तस्यै प्रार्थ्यमानायै हितं देयमिति गमयति, किं मात्रामनपेक्ष्यैवाहितं देयम्? नेत्याह। अल्पमतिशयेनाल्पकम्।

ननु यदहितं तत्कस्माद्दीयत इत्याह—

**श्रद्धाविघाताद्गर्भस्य विकृतिश्च्युतिरेव वा।**

यदि चिरकालोषितः कुक्षौ गर्भस्तदा तस्य गर्भस्य विकृतिर्वैरूप्यं भवेत्। अथाऽचिरोषितो गर्भस्तदा तस्य गर्भस्य च्युतिर्विनाशो भवेत्। अत एव श्रद्धाविमानना नोचिता। निदानकुपितपवनत्वाद्धेतोः। लब्धदौर्हृदा वीर्यवन्तं चिरायुषं च सुतं सूते।

**व्यक्तीभवति मासेऽस्य तृतीये गात्रपञ्चकम्॥ ५४ ॥**
**मूर्धा द्वे सक्थिनी बाहू सर्वसूक्ष्माङ्गजन्म च।**



**सममेव हि मूर्धाद्यैर्ज्ञानं च सुखदुःखयोः ॥ ५५ ॥**

व्यक्तीति। अस्य गर्भस्य तृतीये मासि गात्रपञ्चकं व्यक्तीभवत्यव्यक्तरूपं व्यक्तं तदानीं सम्पद्यत इति चार्थः। तदेव पञ्चाङ्गमाह—मूर्धा, द्वे सक्थिनी, द्वे च बाहू इति। सर्वेषां सूक्ष्माणां चाङ्गानां चेतनाधिष्ठानानां जन्मोत्पत्तिरन्यत्र जन्मोत्तरकालजेभ्यो दन्तादिभ्यः। तथा सममेव तुल्यकालमेव मूर्धाद्यैः सुखदुःखयोर्ज्ञानं भवति। तदानीं सुखसंविद् दुःखसंविच्च गर्भस्य जायत इत्यर्थः। चः समुच्चये। हिर्यस्मादर्थे।

अथ मात्राऽभ्यवहृताभ्यामन्नपानाभ्यां कथं गर्भो वर्धत इत्याह—

**गर्भस्य नाभौ मातुश्च हृदि नाडी निबध्यते।**
**यया स पुष्टिमाप्नोति केदार इव कुल्यया ॥ ५६ ॥**

गर्भस्येति। एकैव नाडी गर्भस्य नाभौ मातुश्च हृदये निबध्यतेऽदृष्टवशात्संश्लिष्यते। यया नाड्या स गर्भः पुष्टिमाप्नोत्यावहति। क इव? केदार इव, कुल्यया लघुनाड्या जलं वहन्त्या केदारस्थः शाल्यादिर्यथाऽभिवर्धते, तथैव मातृहृदयाश्रितया नाड्या, मात्राभ्यवहृतादाहाराज्जाठराग्निना पच्यमानात् प्रसादाख्येन रसेन। यस्माद्व्यक्तीभवदङ्गप्रत्यङ्गस्य नाभ्यां प्रतिबद्धा नाडी, नाड्यामपरा, अपरस्यां मातृहृदयम्। ततो मातृहृदयादाहाररससारो धमनीभिः स्यन्दमानोऽपरामुपैति। ततः क्रमान्नाभितश्च स पुनर्गर्भस्य पक्वाशये कायाग्निना पच्यमानः प्रसादबाहुल्याद् धात्वादिपुष्टिकरः सम्पद्यते। तथा रोमकूपैरुपस्नेह एव प्रविशति। साक्षादन्नपानाऽननुप्रवेशाद्, रसस्य कफमलत्वाद्, गर्भस्य स्थूलमूत्रपुरीषाद्यसम्भवः।

**चतुर्थे व्यक्तताङ्गानां चेतनायाश्च पञ्चमे।**

गर्भस्येत्यनुवर्तते। चतुर्थे मासि गर्भस्य सर्वेषामङ्गानां सूक्ष्मत्वादव्यक्तरूपाणां व्यक्तता भवति। चेतनायाः पुनर्मनोद्वितीयनामिकाया अव्यक्तरूपायाः, पञ्चमे मासि व्यक्तता जायते।

**षष्ठे स्नायुसिरारोमबलवर्णनखत्वचाम् ॥ ५७ ॥**

षष्ठे मास्यव्यक्तरूपाणां स्नाय्वादीनां व्यक्तता जायते।

**सर्वैः सर्वाङ्गसम्पूर्णो भावैः पुष्यति सप्तमे।**

सप्तमे मासि सर्वैः सकलैर्भावैर्वस्तुभिः सर्वाङ्गसम्पूर्णो गर्भः पुष्यति, पोषं याति। अङ्गसम्पूर्णः पुष्यतीत्येतावतैव प्रकृतार्थावगतेः, सर्वग्रहणमधिकार्थद्योतनाय। तेन सर्वेण जन्मजीवनलक्षणेनार्थेनाङ्गैश्च सम्पूर्णो भवतीत्यवतिष्ठते। अकालप्रसवात्तु न तथा गर्भस्य जन्मजीवनलक्षणो योऽसावर्थः सोऽप्यस्मिन् भवतीति ज्ञाप्यते। तथा चास्मिन् मासि गर्भो जातो जीवति, किन्त्वकालप्रसवत्वान्न तथा दीर्घजीवितत्वादिकं स्यात्। वक्ष्यति हि—' कालः सूतेरतः परमिति '। अमुमेव च न्यायं चेतसि निधायाऽष्टमे मास्योजःस्वरूपनिगदनप्रस्तावे, ' जातो न

जीवति शिशुरिति ' वक्ष्यति । अन्यथाऽकालप्रसवत्वादेवाऽस्मिन् गर्भस्य जीवनं न सम्भाव्यत एव । जातो न जीवतीत्येतद्वाक्यमनर्थकमिव स्यात् । तस्मात्सप्तमे मासि जातो जीवतीति सुप्रतिपादितमेतत् ।

**गर्भेणोत्पीडिता दोषास्तस्मिन् हृदयमाश्रिताः ।**
**कण्डूं विदाहं कुर्वन्ति गर्भिण्याः किक्किसानि च ॥ ५८ ॥**

गर्भेणेति । गर्भेणोत्पीडिता दोषा वातादयस्तस्मिन् काले हृदयमाश्रिता गर्भिण्याः कण्डूं विदाहं कुर्वन्ति । तथा किक्किसानि कुर्वन्ति । ऊरुस्तनोदरे वलिविशेषा रेखाकारास्तत्काले प्रायो ये जायन्ते ते किक्किससंज्ञाः कैश्चिच्छूकैरिव पूर्णता किक्किसानीति व्याख्यायि । पाणिपादांसमूलेषु विविधः सन्तापो विदाह उच्यते ।

**नवनीतं हितं तत्र लोलाम्बुमधुरौषधैः ।**
**सिद्धमल्पपटुस्नेहं लघु स्वादु च भोजनम् ॥ ५९ ॥**
**चन्दनोशीरकल्केन लिम्पेदूरुस्तनोदरम् ।**
**श्रेष्ठया चैणहरिणशशशोणितयुक्तया ॥ ६० ॥**
**अश्वघ्नपत्रसिद्धेन तैलेनाभ्यज्य मर्दयेत् ।**
**पटोलनिम्बमञ्जिष्ठासुरसैः सेचयेत्पुनः ॥ ६१ ॥**
**दार्वीमधुकतोयेन मृजां च परिशीलयेत् ।**

नवनीतेति । तत्र तेषु कण्ड्वादिषूपशमार्थं नवनीतं हितमन्तर्बहिश्चोपयोगितया । कीदृशम् ? लोलाम्बुना मधुरौषधैर्द्राक्षादिभिश्च कल्कीकृतैः सिद्धं पक्वम् । तथा तत्र भोजनं हितम् । किम्भूतम् ? अल्पं पटु लवणं स्नेहश्च यत्र तदेवम् । तथा लघु मात्रास्वभावाभ्याम् । तथा स्वादु मधुरम् । तथा चन्दनोशीरयोर्यः कल्कः पिष्टो जलेनालोडितस्तेनोरुस्तनोदरं लिम्पेत् । श्रेष्ठया वा त्रिफलया वा ऊरुस्तनोदरं लिम्पेत् । किम्भूतया ? एणादिरुधिरपिष्टया । तथाऽश्वघ्नपत्रसिद्धेन तैलेनाभ्यज्याऽभ्यक्तं कृत्वाऽङ्गमनन्तरं पटोलनिम्बमञ्जिष्ठासुरसैर्मर्दयेत् । अश्वघ्नः करवीरः । सेचयेत्पुनः परिषेकं च कुर्यात् । दार्वीमधुकतोयेन दारुहरिद्रामधुयष्टिकाभ्यां क्वथितेन जलेन । तथा मृजां शुद्धिं स्नानादिकां शीलयेत् । सङ्ग्रहे तूक्तम्—" परिषेकैः पुनर्मालतीमधुकसिद्धेनाम्भसा । कण्डूयनं वर्जयेत् । त्वग्भेदवैरूप्यपरिहारार्थं स्नानोद्वर्तनं शीलयेत् । मधुरं चाहारमल्पस्नेहलवणमल्पोदकानुपानं भुञ्जीतेति " ।

**ओजोऽष्टमे सञ्चरति मातापुत्रौ मुहुः क्रमात् ॥ ६२ ॥**
**तेन तौ म्लानमुदितौ तत्र जातो न जीवति ।**
**शिशुरोजोऽनवस्थानान्नारी संशयिता भवेत् ॥ ६३ ॥**

ओज इति । ओजः सर्वधातूनां तेजः कर्तृ मातापुत्रौ कर्मभूतौ सञ्चरति ।

' माता च पुत्रश्चेति द्वन्द्वः। आनङृतौ द्वन्द्व इत्यानङादेशः '। कथं सञ्चरति ? मुहुर्मुहुः क्रमात्क्रमेण। कदाचिद्गर्भिणीमोजः सञ्चरति कदाचित्पुत्रमिति। एवं कादाचित्केनौजःसञ्चरणेन तौ मातापुत्रौ म्लानमुदितौ स्याताम्। तथा पूर्वनिरूपितया गर्भगर्भिण्युभयसम्बद्धया नाड्योभयत्र सञ्चरत्तदोज उभयसम्बन्धि, यदा गर्भं सञ्चरति तदा मुदितो हर्षितो भवेदोजःसम्पत्त्या, गर्भिणी च म्लाना भवेत्। यदा च तदोजो गर्भिणीं सञ्चरति, तदा तथैवोजःसम्पत्त्या गर्भिणी मुदिता भवेच्छिशुर्म्लानो भवेदोजःसम्पत्त्यभावात्। तस्मिन् काले शिशुर्बालो जात उत्पन्नो न जीवति। कुतः ? ओजोऽनवस्थानात्। ओजसस्तदानीं शिशावनवस्थितत्वादचिरकालप्ररूढत्वात्। गर्भिण्यां तु न सर्वमचिरकालमनवस्थितमोजो यथा गर्भे। तस्मान्न तस्या निरोजस्त्वम्। अत एवाह—' नारीसंशयिता भवेत् '। कदाचिज्जीवति कदाचिन्न जीवतीति संशयितेत्यर्थः।

**क्षीरपेया च पेयाऽत्र सघृतान्वासनं घृतम्।**
**मधुरैः साधितं शुद्ध्यै पुराणशकृतस्तथा ॥ ६४ ॥**
**शुष्कमूलककोलाम्लकषायेण प्रशस्यते।**
**शताह्वाकल्कितो बस्तिः सतैलघृतसैन्धवः ॥ ६५ ॥**

क्षीरेति। अत्राऽष्टमे मासि क्षीरसंस्कृता पेया पातव्या। किम्भूता ? सघृता। तथाऽन्वासनं घृतं शस्यते। कीदृक् ? मधुरैर्द्राक्षादिभिः साधितं पक्वम्। तथा तेनैव प्रकारेण पुराणशकृतः शुद्ध्यर्थं बस्तिर्निरूहः प्रशस्यते युज्यते। तत्र च बस्तौ कः कषायः कः कल्क इत्याह। शुष्कमूलकादीनां कषायेण। तथा शताह्वाकल्कितस्तथा सह तैलेन घृतेन सैन्धवेन च।

**तस्मिंस्त्वेकाहयातेऽपि कालः सूतेरतः परम्।**

तस्मिन्निति। एकं च तदहश्चेकाहम्। ' राजाहःसखिभ्यष्टजिति टच्। अह्नष्टखोरेवेति टिलोपः '। एकाहेन यातोऽतिक्रान्तोऽन्तरितोऽष्टमो मास एकाहयातस्तस्मिन्नष्टमे मासि पुनरेकदिवसातिक्रान्तेऽप्यतः परं सूतेः प्रसवस्य कालो यावद्वर्षम्। अपिशब्दाद्याते त्वष्टमे मास्यतः परं सूते काल इति गम्यते। अष्टमान्मासादनन्तरं नवमदशमैकादशद्वादशमासान्यावत्। एषु मासेषु गर्भो जातो दीर्घायुरादियुक्तो जीवति।

**वर्षाद्विकारकारी स्यात्कुक्षौ वातेन धारितः ॥ ६६ ॥**

वर्षादिति। ' आनन्तर्ये पञ्चमी '। वर्षाद् द्वादशमासादनन्तरं गर्भः कुक्षौ वातेन धारितो रुद्धनिष्क्रमणो विकारकारी भवेत्। विकारमवश्यं करोति। गर्भस्य संनिवेशोऽपि सङ्ग्रहे प्रोक्तो यथा—" गर्भस्तु मातृपृष्ठाभिमुखो ललाटे कृताञ्जलिः सङ्कुचिताङ्गो गर्भकोष्ठे दक्षिणं पार्श्वमाश्रित्यावतिष्ठते पुमान्, वामं स्त्री, मध्यं नपुंसकम्। तत्र स्थितश्च गर्भो मातरि स्वपत्यां स्वपिति प्रबुद्धायां प्रबुध्यत इति '।

**शस्तश्च नवमे मासि स्निग्धो मांसरसौदनः।**
**बहुस्नेहा यवागूर्वा पूर्वोक्तं चानुवासनम्॥ ६७॥**

शस्त इति। नवमे मासि स्निग्धो मांसरसयुक्त ओदनः शस्तो हितः। अथवा पेया बहुस्नेहा शस्तेति लिङ्गविपरिणामेन सम्बन्धः। पूर्वोक्तमनुवासनं घृतं मधुरैः साधितमित्यादि तच्च शस्तम्।

**तत एव पिचुं चाऽस्या योनौ नित्यं निधापयेत्।**
**वातघ्नपत्रभङ्गाम्भः शीतं स्नानेऽन्वहं हितम्॥ ६८॥**

तत इति। तत एवान्वासनघृतात्पिचुं नक्तकमस्या गर्भिण्या योनौ नित्यं सदा निधापयेत्तत्र स्थापयेद्वातविजयार्थम्। पवनेनानाक्रान्तयोनिर्हि सुखं गर्भं सूते। तथा वातघ्नानां द्रव्याणां पत्राणि तेषां भङ्गः समूहस्तेन क्वथितमम्भः शीतं कृत्वा स्नानेऽन्वहमहरहर्गर्भिण्यै हितम्। 'अन्वहमित्यनश्चेति टच्'।

**निःस्नेहाङ्गीं न नवमान्मासात्प्रभृति वासयेत्।**

निःस्नेहाङ्गीमस्नेहगात्रां तां गर्भिणीं गर्भप्रसवकालं यावन्न वासयेदपि तु सस्नेहाङ्गीं स्थापयेत्। निःशेषेण निरस्तः स्नेहो यस्मादङ्गात्तदेवं निःस्नेहमङ्गं यस्याः सा निःस्नेहाङ्गी, ताम्। 'अङ्गगात्रकण्ठेभ्यो वक्तव्यमिति ङीप्'। कुतः कालादारभ्य? नवमान्मासात्प्रभृति। यद्यपि कालोऽपि न निर्दिष्टस्तथाऽपि नवमान्मासादारभ्य सामर्थ्याद्यावन्मुक्तगर्भशल्या स्यात्तावन्निःस्नेहाङ्गीं गर्भिणीं न स्थापयेदिति लभ्यते। सस्नेहाङ्गधारणं च तस्याः कुपितवायोर्नित्यं सन्निहितत्वात्।

इदानीं गर्भिण्या यैर्लक्षणैरव्यभिचारिभिः पुत्रदुहितृनपुंसकयमकप्रसवोऽनुमीयते तान्याह—

**प्राग्दक्षिणस्तनस्तन्या पूर्वं तत्पार्श्वचेष्टिनी॥ ६९॥**
**पुन्नामदौर्हृदप्रश्नरता पुंस्त्वप्रदर्शिनी।**
**उन्नते दक्षिणे कुक्षौ गर्भे च परिमण्डले॥ ७०॥**
**पुत्रं सूतेऽन्यथा कन्यां या चेच्छति नृसङ्गतिम्।**
**नृत्यवादित्रगान्धर्वगन्धमाल्यप्रिया च या॥ ७१॥**

प्रागिति। प्राक्पूर्वं दक्षिणे स्तने स्तन्यं क्षीरं यस्याः प्रादुर्भवति सा पुत्रं सूते इति सम्बन्धः। तथा पूर्वं तत्पार्श्वचेष्टिनी। तच्छब्देन दक्षिणपार्श्वं परामृश्यते। तेन दक्षिणेन पार्श्वेन चेष्टितं गमनस्वपनादिकं यस्याः सा तत्पार्श्वचेष्टिनी पुत्रं सूत इति सर्वत्र योज्यम्। तथा गच्छन्त्याः पूर्वं दक्षिणपादोत्क्षेपो हस्तकरणीये च पूर्वं दक्षिणेन पाणिना चेष्टत इति पार्श्वचेष्टा बोध्या। पुन्नामेत्यादि। पुंलिङ्गोपलक्षितं नाम पुन्नाम। दौर्हृदं च प्रश्नश्च दौर्हृदप्रश्नौ। पुन्नाम्नोर्दौर्हृदप्रश्नयो रताऽभियुक्ता। पुन्नाम्नि दौर्हृदे रता। दौर्हृदकाले योऽभिलाषाविशेषो गर्भिण्याः स दौर्हृदशब्दवाच्यः। तथा पुन्नाम्नि प्रश्नेऽभिरता पुनः पुनः पुन्नामप्रश्नं करोति।

तथा पुन्नामधेयान् स्वप्नान् पुरुषगजवाजिवराहादीनाम्रदाडिमाशोकवृक्षादीन्वा द्रष्टुं शीलं यस्याः, सैवम् । तथा उन्नते दक्षिणे गर्भकोष्ठाख्ये कुक्षौ । तथा गर्भे गर्भस्थाने परिमण्डले वर्तुले सति पुत्रं सूते । अन्यथा पुत्रप्रसवसूचकाद्धेतोर्वैपरीत्ये च लक्षणे कन्यां सूते । यथा प्राग्दक्षिणस्तनस्तन्येत्यादि पुत्रप्रसवसूचकं लक्षणमतोऽन्यथा प्राग्वामस्तनस्तन्येत्यादि लक्षणं गर्भिण्याः कन्याप्रसवसूचकम् । न केवलं पुत्रप्रसवलक्षणाद्विपर्ययेण कन्यां सूते यावद्या चेच्छति नृसङ्गतिम् । या च गर्भिणी पुरुषेण सह सङ्गतिमिच्छति कामयते साऽपि कन्यां सूते । तथा या च नृत्यादिप्रिया सा कन्यां सूते ।

इदानीं षण्ढप्रसवलक्षणमाह—

**क्लीबं तत्सङ्करे तत्र मध्ये कुक्षेः समुन्नतम् ।**
**यमौ पार्श्वद्वयोन्नामात्कुक्षौ द्रोण्यामिव स्थिते ॥ ७२ ॥**

क्लीबमिति । तदित्यनेनाऽत्र पुत्रप्रसूतिलक्षणं दुहितृप्रसूतिलक्षणं च द्वयमपि परामृश्यते । द्वयस्यैतस्य लक्षणस्य सङ्करे सङ्कीर्णलक्षणतायां क्लीबं नपुंसकं गर्भं सूते । तत्र तस्मिन् क्लीबे गर्भे कुक्षिस्थिते कुक्षेर्मध्यं समुन्नतं भवति । यमौ द्वौ गर्भौ गर्भिणी सूते । कथमिति तल्लक्षणार्थमाह । पार्श्वद्वयोन्नामात् पार्श्वद्वयोत्सेधात् । अत एव कुक्षावुदरे द्रोण्यामिव स्थिते । द्रोणी मध्यनिम्ना कुक्षिरपि पार्श्वद्वयोन्नत्या मध्यनिम्ना भवति ।

**प्राक्चैव नवमान्मासात्सूतिकागृहमाश्रयेत् ।**
**देशे प्रशस्ते सम्भारैः सम्पन्नं साधकेऽहनि ॥ ७३ ॥**
**तत्रोदीक्षेत सा सूतिं सूतिकापरिवारिता ।**

प्रागिति । सा गर्भिणी सूतिकागृहं सूतिकागारं नवमान्मासात्पूर्वमेवाश्रयेत् । कुत्र देशे कृतमित्याह । देशे प्रशस्ते प्राक्प्रवणे उदक्प्रवणे वा वास्तुविद्याविद्भिः परीक्ष्य कल्पितम् । कीदृशम् ? सम्भारैः सम्पन्नं सकलैरुपकरणैर्युक्तम् । तथा साधकेऽहनि शुभपुण्यनक्षत्रे दिवसे सति ।

तत्र सूतिकागृहे स्थिता सूतिमुदीक्षेत । अहमत्र प्रसविष्य इति चेतसि निधाय सा गर्भिणी तत्राऽसीतेत्यर्थः । किम्भूता ? सूतिकापरिवारिताऽनेकवारप्रसवानुभूततत्कालोचितव्यवहारकुशलाभिः स्त्रीभिः परिवारिता । सङ्ग्रहे तूक्तम्—"बहुशः प्रसूताभिरनुरक्ताभिरविषादिनीभिरविसंवादिनीभिः क्लेशसहाभिः परिवृता स्वस्त्ययनपराऽनुलोमनैराहारविहारैरनुलोमितवातमूत्रपुरीषा प्रसवकालमुदीक्षेत । स्वल्पेऽपि च विण्मूत्रविबन्धे फलवर्तीः प्रयोजयेदिति ।

इदानीमासन्नप्रसवाया लक्षणमाह—

**अद्यश्वः प्रसवे ग्लानिः कुक्ष्यक्षिश्लथता क्लमः ॥ ७४ ॥**
**अधोगुरुत्वमरुचिः प्रसेको बहुमूत्रता ।**



**वेदनोरूदरकटीपृष्ठहृद्बस्तिवङ्क्षणे ॥ ७५ ॥**
**योनिभेदरुजातोदस्फुरणस्रवणानि च ।**

अद्येति । अद्य वा श्वो वा प्रसवस्तस्मिन्नासन्नप्रसवे, ग्लान्यादयो भवेयुर्गर्भिण्या इति सम्बन्धः । ग्लानिर्हर्षक्षयः । तथा कुक्षी चाक्षिणी च कुक्ष्यक्षि, तस्य श्लथता शिथिलत्वं स्वस्थानाच्चलितत्वमिव । तथा क्लम उपतापः । तथाऽधो गुरुत्वादीनि भवन्ति । तथा ऊर्वादिषु वेदना पीडा भवति । तथा योनिभेदादयः स्युः ।

**आवीनामनुजन्मातस्ततो गर्भोदकस्रुतिः ॥ ७६ ॥**

आवीनामिति । अतोऽस्माद्योनिभेदादेरनु पश्चादावीनां गर्भनिष्क्रमणकालशूलविशेषाणां जन्मोत्पादः । ततोऽनन्तरं गर्भोदकस्रुतिस्तत्कालं योनितो जलस्रावमात्रं स गर्भोदकसंज्ञः ।

**अथोपस्थितगर्भां तां कृतकौतुकमङ्गलाम् ।**
**हस्तस्थपुन्नामफलां स्वभ्यक्तोष्णाम्बुसेचिताम् ॥ ७७ ॥**
**पाययेत्सघृतां पेयाम्,**

अथेति । अथ गर्भोदकस्रुतेरनन्तरं तां गर्भिणीमुपस्थितगर्भामभिमुखीभूतगर्भामाविजन्मोदकस्रावादिना ज्ञात्वा सघृतां पेयां पाययेत् । किम्भूताम् ? कृतकौतुकमङ्गलाम् । विशिष्टकाले यो रक्षाबन्धो बाह्वादौ बध्यते स कौतुकशब्दवाच्यः । कौतुकाख्यं मङ्गलं कौतुकमङ्गलम् । कृतं कौतुकमङ्गलं यस्यास्ताम् । तथा हस्तस्थं पुन्नाम दाडिमादिफलं यस्यास्ताम् । सुष्ठ्वभ्यक्ताम् । तथोष्णाम्बुसेचिताम् । इत्यस्यानन्तरं पाययेत्पेयामिति पठन्नुष्णाम्बुसेचनादनन्तरं पेयापानं कार्यमिति बोधयति ।

**तनौ भूशयने स्थिताम् ।**
**आभुग्नसक्थिमुत्तानामभ्यक्ताङ्गीं पुनःपुनः ॥ ७८ ॥**
**अधो नाभेर्विमृद्गीयात्कारयेज्जृम्भचङ्क्रमम् ।**

तनाविति । तनौ मृदूनि भूशयने स्थितां मृद्गीयान्न खट्वादिशयनस्थिताम् । तथा सङ्ग्रहे चोक्तम्—"सुरक्तार्षभचर्मप्रच्छदे मृदुनि भूशयने शयानामित्यादि" । कुतोऽङ्गात्प्रभृतिविशेषेण मृद्गीयात् । नाभेरधो नोर्ध्वं नाभेः । किम्भूतां ताम् ? आभुग्नसक्थिम् । आसमन्ताद् भुग्ने कुञ्चिते सक्थिनी यस्याः साऽऽभुग्नसक्थिस्तां तथाविधां मृद्गीयात् । तथा पुनः पुनरभ्यक्ताङ्गीं वातकोपभयात् । तथा जृम्भं चङ्क्रमं च तां कारयेत् । जृम्भो जृम्भणम् । चङ्क्रमश्चङ्क्रमणं द्रुतगमनम् ।

किमेवमनुष्ठिते सति भवतीत्याह—

**गर्भः प्रयात्यवागेवं तल्लिङ्गं हृद्विमोक्षतः ॥ ७९ ॥**
**आविश्य जठरं गर्भो बस्तेरुपरि तिष्ठति ।**

गर्भ इति । एवमनयेतिकर्तव्यतयाऽनुष्ठितया गर्भोऽवाक् प्रयात्यूर्ध्वादधो

गच्छति । हृत्स्थानं परित्यज्याधोऽवस्थितिं करोतीत्यर्थः । सङ्ग्रहे तूक्तम्—"दद्या-त्कुष्ठलाङ्गलकीवचाचव्यचित्रकचिरिबिल्वचूर्णमुपाघ्रातुं मुहुर्मुहुर्योजयेत्तथा भूर्जपत्रशिंशपासर्जरसानामन्यतमं धूममन्तरान्तरा च । पार्श्वपृष्ठकटीसक्थिदेशान्कोष्णेन तैलेनाऽभ्यज्यानुसुखमस्या विमृद्नीयादेवमवाक् परिवर्तते गर्भ इति" । 'मुसलेनोलूखलं धान्यपूर्णमाहननीयं गर्भस्याऽवाक्स्थितये' इति केचिदाहुस्तदयुक्तम् । यतो गर्भिण्यास्तावद्व्यायामवर्जनं सततमुपदिष्टम् । विशेषतश्च प्रसवकाले प्रचलितसर्वधातु-दोषाद्याः सुकुमाराशयाया नार्या मुसलव्यायामप्रेरितो हि वायुः प्राणान् हिंस्यादिति । विमर्दनादिक्रियां च गर्भिण्यास्तावत्कारयेद्यावद्गर्भनिष्क्रमणं भवति । अथ मातृहृदयान्मुक्तो गर्भः केन लक्षणेन ज्ञायत इत्याह । तल्लिङ्गमित्यादि । तदित्यनेन गर्भः परामृश्यते । तस्य गर्भस्य लिङ्गम् । गर्भस्यैतल्लिङ्गं यद् हृद्विमोक्षतो हृदयमोचनादनन्तरं स गर्भो जठरमाविश्य बस्तेरुपरि तिष्ठति ।

**आव्यो हि त्वरयन्त्येनां खट्वामारोपयेत्ततः ॥ ८० ॥**

आव्यः प्रसवकालशूलविशेषा यस्मादेनां गर्भिणीमभित्वरयन्ति, अनवरतमुत्पद्यमानत्वात् । ततस्तस्मादेनां गर्भिणीं खट्वामारोपयेदारोहयेत् ।

**अथ सम्पीडिते गर्भे योनिमस्याः प्रसारयेत् ।**

अथ खट्वारोहणादनन्तरं खट्वास्थिताया गर्भे सम्पीडिते वायुना योनिमुखाक्रान्ततया, अस्या गर्भिण्या योनिं प्रसारयेदभ्यङ्गादिदानेन विकासयेत् ।

**मृदुपूर्वं प्रवाहेत बाढमाप्रसवाच्च सा ॥ ८१ ॥**

ततः सा गर्भिणी गर्भं मृदु कृत्वा पूर्वं प्रवाहेत यावद्योनिमुखे नागतो गर्भः । गर्भं योनिद्वारमागतं ज्ञात्वा बाढं भृशं प्रवाहेत, अप्रसवात्प्रसवं यावत् । तथा चोक्तं सङ्ग्रहे—"शनैः शनैश्च पूर्वं प्रवाहिष्ठा निर्गमे बाढम् । गर्भस्य योनिमुखप्रतिपत्तौ बाढतरम्" । 'आप्रसवादित्याङ्मर्यादावचन इत्याङः कर्मप्रवचनीयत्वे पञ्चम्यपाङ्परिभिरिति पञ्चमी' ।

**हर्षयेत्तां मुहुः पुत्रजन्मशब्दजलाऽनिलैः ।**

तां गर्भिणीमनन्तरं हर्षयेत् सुमनसं मुहुः कारयेत् । केन ? पुत्रजन्मशब्देन । प्रसूतासि सुभगे धन्यं पुत्रमित्येवंरूपेणासकृत् स्त्रीभिरुच्चारितेन । तथा जलेन शीतलेन । तथाऽनिलेन । सङ्ग्रहेऽप्युक्तम्—"एनां ब्रूयाच्च सुभगे शनैः शनैः प्रवाहयस्व शोभनस्ते (?) मुखवर्णं पुत्रं जनयिष्यसीति'। तथाऽन्या तु वामकर्णेऽस्या मन्त्रमिमं जपेत्—"क्षितिर्जलं वियत्तेजो वायुर्विष्णुः प्रजापतिः । सगर्भां त्वां सदा पान्तु वैशल्यं वा दधत्यपि । प्रसूष्व त्वमविक्लिष्टमविक्लिष्टा शुभानने । कार्तिकेयद्युतिं पुत्रं कार्तिकेयाभिरक्षितमिति " तथा—" इहामृतं च सोमश्च चित्रभानुश्च भामिनि । उच्चैःश्रवाश्च तुरगो मन्दिरे निवसन्तु ते । इदममृतमपां समुद्धृतं वै तव लघु गर्भमिमं प्रमुञ्चतु स्त्री । तदनलपवनार्कवासवास्ते सह लवणाम्बुधरैर्दिशन्तु

शान्तिमिति "। अपरा स्त्री गर्भिणीमनुशिष्याद् 'अनागतायां वेदनायां मा प्रवाहिष्ठाः, अकालप्रवाहणं हि विण्मूत्रादिवेगानामिवोदीरणमनर्थकरमहितं च। गर्भस्य श्वासकासशोफकुब्जतादिकरत्वादिति'।

अथ किं हर्षाद्युत्पादनेन स्यादित्याह—

**प्रत्यायान्ति तथा प्राणाः सूतिक्लेशावसादिताः ॥ ८२ ॥**

तथा तेन प्रकारेण हर्षादिजननेन प्राणाः सूतेः क्लेशा आवयस्तत्कृतानि दुःखानि तैरवसादिता ग्लानिं नीताः प्रत्यायान्ति पुनर्नवीभवन्ति।

**धूपयेद्गर्भसङ्गे तु योनिं कृष्णाहिकञ्चुकैः।**
**हिरण्यपुष्पीमूलं च पाणिपादेन धारयेत् ॥ ८३ ॥**
**सुवर्चलां विशल्यां वा जराय्वपतनेऽपि च।**
**कार्यमेतत्तथोत्क्षिप्य बाह्वोरेनां विकम्पयेत् ॥ ८४ ॥**
**कटीमाकोटयेत्पाष्र्ण्या स्फिजौ गाढं निपीडयेत्।**
**तालुकण्ठं स्पृशेद्वेण्या मूर्ध्नि दद्यात्स्नुहीपयः ॥ ८५ ॥**
**भूर्जलाङ्गलिकीतुम्बीसर्पत्वक्कुष्ठसर्षपैः।**
**पृथग्द्वाभ्यां समस्तैर्वा योनिलेपनधूपनम् ॥ ८६ ॥**
**कुष्ठतालीसकल्कं वा सुरामण्डेन पाययेत्।**
**यूषेण वा कुलत्थानां बिल्वजेनाऽऽसवेन वा ॥ ८७ ॥**

धूपयेदिति। गर्भस्य सङ्गे सक्तौ योनिं कृष्णसर्पनिर्मोकेण धूपयेत्। धूपनं योनौ कुर्यात्। 'धूपयेदिति गुपूधूपेत्यादिना आयप्रत्ययः, ततो विधौ लिङ्'। तथा हिरण्यपुष्पीमूलं पाणिना पादेन च सा गर्भिणी धारयेत्। अथवा सुवर्चलां विशल्यां वा धारयेत्। एतद्गर्भसङ्गोक्तं जरायोरपराख्यस्यापतनेऽनिष्क्रान्तौ कार्यं विधातव्यम्। न केवलं गर्भसङ्गोक्तं कार्यं यावदेनामपतितजरायुं बाह्वोर्द्वयोरुत्क्षिप्य विकम्पयेत्। सङ्ग्रहे तूक्तम्—" न चेदपरा पतति ततो दक्षिणेन पाणिना नाभेरुपरिष्टाद्बलवदुत्पीड्याऽन्येन पृष्ठत उपसंगृह्य विधुनुयादिति "। तथा पाष्र्ण्या कटीमाकोटयेदिति। पुनः पुनः कट्यां पार्ष्णिघातं कुर्यादित्यर्थः। तथा स्फिजौ युतौ सुष्ठु निपीडयेत्। तथा वेण्या केशरचनाविशेषाख्यया तालुकण्ठं स्पृशेत्। सङ्ग्रहेऽप्युक्तम्—" वेण्याऽङ्गुल्या वा केशवेष्टितया वा तालुकण्ठं परामृशेदिति '। तथा मूर्ध्नि मस्तके स्नुहीपयः सुधादुग्धं दद्यात्। तथा भूर्जादिभिर्द्रव्यैः पृथक् प्रत्येकमथवा द्वाभ्यां कृत्वा समस्तैर्वा योन्या लेपनं धूपनं च कार्यमिति शेषः। कुष्ठतालीसपत्रयोः कल्कं वा सुरामण्डेनोपरिस्थितेन तां पाययेत्। अथवा कुलत्थानां यूषेण क्वाथेन पाययेत्। बिल्वजेनाऽऽसवेन वा। बिल्वं वारिणा आसुत्य धान्यराशौ धारितं तच्छीतकषायो बिल्वज आसव उच्यते। सङ्ग्रहेऽप्युक्तम्—'भूर्जपत्रकाचमणिसर्पनिर्मोकैश्च योनिं धूपयेत्।



भूर्जगुग्गुलुभ्यां वा शालिमूलसिद्धेन सर्पिषा योनिमभ्यज्य कटुकालाबुजालिनीनिम्बसर्पनिर्मोकैश्च कुक्ष्यादि धूपयेत्। अनभ्यक्तां वा कटुतैलमिश्रैः कल्कीकृतैर्वा तैलाक्तैरालिम्पेत्। गुडनागरकल्केन वा लिम्पेत्। तदेव वा भक्षयेत्। लाङ्गलीमूलकल्केन वा पाणिपादमुदरं च लिम्पेदिति"। तथोक्तम्—"कुष्ठैलाकल्कं वा सुरया पाययेत्। अर्कालर्ककषायं वा सुरोन्मिश्रम्। कुष्ठलाङ्गलकीमूलकल्कं वा मद्यमूत्रान्यतरेण। शतपुष्पाकुष्ठमदनहिङ्गुसिद्धस्य च तैलस्य पिचुं ग्राहयेदिति"।

**शताह्वासर्षपाजाजीशिग्रुतीक्ष्णकचित्रकैः।**
**सहिङ्गुकुष्ठमदनैर्मूत्रे क्षीरे च सार्षपम्॥ ८८॥**
**तैलं सिद्धं हितं पायौ योन्यां वाऽप्यनुवासनम्।**
**शतपुष्पावचाकुष्ठकणासर्षपकल्कितः॥ ८९॥**
**निरूहः पातयत्याशु सस्नेहलवणोऽपराम्।**
**तत्सङ्गे ह्यनिलो हेतुः सा निर्यात्याशु तज्जयात्॥ ९०॥**

शताह्वेति। शताह्वादिभिर्द्रव्यैः सार्षपं तैलं मूत्रे क्षीरे चोभयस्मिन् सिद्धं पक्वमनुवासनं हितम्। क्व? पायौ गुदे। अथवा योन्यां गर्भनिष्क्रमणद्वारे। तथा शतपुष्पादिभिर्द्रव्यैः कल्कितैर्निरूहो बस्तिकल्पोक्तो यौगिकः सह स्नेहेन लवणेन वा वर्तमान आशु शीघ्रमेवापरां जरायुसंज्ञां पातयति। यस्मात्तत्सङ्गेऽनिलो हेतुर्वायुः कारणम्। तज्जयाद्वातजयात्साऽपरा निर्याति कुक्षितो बहिर्निष्क्रामति। पवनविजये च बस्तिः प्रधानम्। तथाचोक्तम्—"वातोल्बणेषु दोषेषु वाते वा बस्तिरिष्यत इत्यादि"। सङ्ग्रहे तु गर्भिण्या आस्थापनेऽनुवासने च सन्निवेशविशेष उक्तः। यथा—"गर्भिणीं तु न्युब्जामास्थापयेदनुवासयेच्च। तथाऽस्या विवृतमार्गतया सम्यगौषधमनुप्रविशतीति"

**कुशला पाणिनाऽक्तेन हरेत्क्लृप्तनखेन वा।**

अथवा कुशला तद्व्यापारनिपुणा योषित् पाणिना सर्पिषाऽभ्यक्तेन तां हरेत्। किम्भूतेन पाणिना? क्लृप्तनखेन, क्लृप्ताः कल्पिताः शस्त्रेण नखा यस्य तेन तथाविधेन पाणिना तां नालानुसारत आकर्षेत्। सङ्ग्रहेऽप्युक्तम्—"शाल्मलीपिच्छया वा सघृतया योनिं पूरयित्वा विधुनुयादिति"।

**मुक्तगर्भापरां योनिं तैलेनाङ्गं च मर्दयेत्॥ ९१॥**

गर्भश्चापरा च गर्भापरं, मुक्तं गर्भापरं यया योन्या तां तैलेन मर्दयेत्। अङ्गं शरीरं च मर्दयेत्।

**मक्कल्लाख्ये शिरोबस्तिकोष्ठशूले तु पाययेत्।**
**सुचूर्णितं यवक्षारं घृतेनोष्णजलेन वा॥ ९२॥**
**धान्याम्बु वा गुडव्योषत्रिजातकरजोऽन्वितम्।**

मक्कल्लाख्ये रोग उत्पन्ने शिरोबस्तिकोष्ठशूललक्षणे सति यवक्षारं सूक्ष्म-

चूर्णितं घृतेनाऽथवोष्णजलेन तां सूतां पाययेत्। धान्याम्बु वा तां पाययेत्। किम्भूतम्? गुडव्योषत्रिजातकरजोऽन्वितम्। गुड इति सामान्योक्तावपि पुराणोऽत्र गुडो ग्राह्यः, पथ्यत्वात्। मक्कल्लाख्यो रोगः 'शिरोबस्तिकोष्ठशूल' इति लाघवेन तन्त्रकृतास्य लक्षणमुक्तम्।

**अथ बालोपचारेण बालं योषिदुपाचरेत्॥ ६३॥**

अथ बालं जातमात्रमेवोपाचरेदुपपादयेत्। का? योषिद्बहुकृत्वः प्रसूता, न पुमान्। केन? बालोपचारेण बालोपचरणीयोक्तेनाऽऽहारविहारादिना।

**सूतिका क्षुद्वती तैलाद्घृताद्वा महतीं पिबेत्।**
**पञ्चकोलकिनीं मात्रामनु चोष्णं गुडोदकम्॥ ६४॥**

सूतिकेति। सूतिका क्षुद्वती बुभुक्षिता सती तैलादथवा घृतान्महतीं मात्रां पिबेत्। किम्भूताम्? पञ्चकोलकं विद्यते यस्या मात्रायास्तां पञ्चकोलकिनीम्। सूक्ष्मचूर्णीकृतपञ्चकोलकयुक्तां तां मात्रां पिबेदित्यर्थः। अष्टभिर्यामैर्या जरां गच्छति सा स्नेहमात्रा महती। अनु चोष्णं गुडोदकं पिबेदिति योज्यम्।

**वातघ्नौषधतोयं वा तथा वायुर्न कुप्यति।**
**विशुध्यति च दुष्टास्रं द्वित्रिरात्रमयं क्रमः॥ ६५॥**

वातहरद्रव्यक्वाथं वा पश्चात्पिबेत्। तथैवं कृते सति, वायुर्न कुप्यति न कोपं याति, शून्यं कोष्ठं प्राप्य। दुष्टं रक्तं च विशुध्यति। अयमेव क्रमो द्विरात्रं त्रिरात्रं वा यथायोग्यं कार्यः।

**स्नेहाऽयोग्या तु निःस्नेहममुमेव विधिं भजेत्।**
**पीतवत्याश्च जठरं यमकाक्तं विवेष्टयेत्॥ ६६॥**

स्नेहेति। स्नेहपानाऽयोग्या तु स्त्री या स्नेहं नार्हति सा निःस्नेहं स्नेहं विनाऽमुमेव पूर्वोक्तं विधिं भजेत्। पीतवत्याश्च तस्या जठरं यमकाक्तं तैलघृताभ्यामभ्यक्तं विवेष्टयेद्वाससेति शेष। 'पीतवत्या' इत्यविशेषनिर्देशः कदाचित्स्नेहयोग्या स्नेहं पीतवती, स्नेहाऽयोग्या तूष्णीं गुडोदकं पीतवती, अथवा वातघ्नौषधतोयं पीतवतीति सामान्यो यो निर्देशस्तस्यार्थः।

**जीर्णे स्नाता पिबेत्पेयां पूर्वोक्तौषधसाधिताम्।**
**त्र्यहादूर्ध्वं विदार्यादिवर्गक्वाथेन साधिता॥ ६७॥**
**हिता यवागूः स्नेहाढ्या सात्म्यतः पयसाऽथवा।**
**सप्तरात्रात्परं चास्यै क्रमशो बृंहणं हितम्॥६८॥**

जीर्ण इति। स्नेहे जीर्णे, कवोष्णगुडोदके, वातघ्नौषधतोये वा, अनन्तरं स्नाता सती पूर्वोक्तौषधसाधितां पञ्चकोलकृतां पेयां पिबेत्। त्र्यहादूर्ध्वमनन्तरं विदार्यादिवर्गोक्तौषधैः सिद्धा यवागूः पेया स्नेहाढ्या हिता। अथवा सात्म्यवशात् पयसा

क्षीरेण साधिता यवागूर्हिता। सप्तरात्रात्परमनन्तरं क्रमशो न सहसा तस्यै बृंहणं हितम्। बृंहणं च जीवनीयबृंहणीयमधुरवर्गसिद्धैरभ्यङ्गोद्वर्तनपरिषेकावगाहनैर्हृद्यैश्चाऽन्नपानैर्विधातव्यम्।

**द्वादशाहेऽनतिक्रान्ते पिशितं नोपयोजयेत्।**

द्वादशाहेऽनतिक्रान्तेऽपरिसमाप्ते पिशितं मांसं नोपयोजयेन्नाऽभ्यवहारयेत् स्कन्दादिद्वादशग्रहाभिषङ्गपरिहारार्थम्। मांसभोजनेन हि कदाचित्तैरभिषङ्गो भवेत्तेषां मांसादत्वात्।

**यत्नेनोपचरेत्सूतां दुःसाध्या हि तदामयाः॥ ९९॥**
**गर्भवृद्धिप्रसवरुक्क्लेदास्रस्रुतिपीडनैः।**

यत्नेनेति। सूतां स्त्रीं यत्नेन तात्पर्येणोपचरेदुपक्रमेत्। कुतो हेतोरित्याह। हि यस्मात्तस्या आमया रोगा दुःसाध्याः कृच्छ्रेणोपक्रम्याः। किमिति कृच्छ्रसाध्या इत्याह—गर्भेत्यादि। वृद्धिश्च प्रसवश्च वृद्धिप्रसवौ गर्भस्य वृद्धिप्रसवौ च रुक् च क्लेदास्रस्रुतिश्च पीडनं च गर्भवृद्धिप्रसवरुक्क्लेदास्रस्रुतिपीडनानि तैर्हेतुभूतैस्तदामया दुःसाध्याः।( रुक्क्लेदास्रस्रुतिपीडनानि ) रुक्प्रवाहवेदनाः।

**एवं च मासादध्यर्धान्मुक्ताहारादियन्त्रणा।**
**गतसूताभिधाना स्यात्पुनरार्तवदर्शनात्॥ १००॥**

एवमिति। एवमनेन प्रकारेण सार्धं मासमुपक्रान्ता क्रमेण मुक्ताहारविहारयन्त्रणा स्यात्। अध्यर्धमासात्परेण गतसूताभिधाना व्यपेतप्रसूतिव्यपदेशा पुनरार्तवदर्शनाद्भवेत्। सङ्ग्रहे तूक्तम्—"जरायुणा मुखे छन्ने कण्ठे च कफवेष्टिते। वायोर्मार्गनिरोधाच्च गर्भस्थो न प्ररोदितीति"। ( अयमस्थाने पद्योद्धार इति मौद्गल्यः। )

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां शारीरस्थाने प्रथमोऽध्यायः।

—:०:—

# द्वितीयोऽध्यायः।

गर्भावक्रान्तिशारीरादनन्तरं गर्भव्यापच्छारीरमारभ्यते। गर्भस्य व्यात्प्रतीकारविज्ञानार्थमाह—

**अथाऽतो गर्भव्यापदं शारीरं व्याख्यास्यामः।**

गर्भस्य व्यापद्गर्भव्यापत् सा विद्यते यस्मिन्निति छः। 'तस्याध्यायानुवाकयोर्लुगिति लुक्'। यद्यपि चाऽत्र गर्भव्यापदश्चिकित्साऽप्युक्ता न केवलं व्यापत्, तथाऽपि बाहुल्यादिदमुक्तमिति वेद्यम्। अथादीनां पूर्ववद्व्याख्या।

**गर्भिण्याः परिहार्याणां सेवया रोगतोऽपि वा।**
**पुष्पे दृष्टेऽथवा शूले, बाह्यान्तःस्निग्धशीतलम्॥ १॥**



**सेव्याऽम्भोजहिमक्षीरिवल्ककल्काऽऽज्यलेपितात् ।**
**धारयेद्योनिबस्तिभ्यामार्द्रार्द्रान् पिचुनक्तकान् ॥ २ ॥**

गर्भिण्या इति । गर्भिण्याः परिहार्याणामाहारविहाराणां पूर्वोक्तानामतिव्यवायादीनां सेवनेन पुष्पे दृष्टेऽथवा रोगतः पुष्पे दृष्टे, रोगस्य च स्वभावापथ्यसर्षपशाकमन्थकदध्यादेराहारान्मात्रादिदेशकालादिवशाद्वा सम्भवः । गर्भाख्यफलहेतुत्वाद्रक्तं पुष्पमुच्यते । तस्मिन् दृष्टे चक्षुर्गोचरं प्राप्ते । अथवा शूले दृष्टे प्रश्नादिनोपलब्धे सति । 'दृशिरत्रोपलब्धिवचनः' । बाह्यान्तः स्निग्धशीतलं साधनमन्नपानप्रदेहपरिषेकादि कार्यम् । बहिः स्नानावगाहादावन्तश्च भोजनानुपानादावित्यर्थः । ' रोगत इति तृतीयार्थे तसिः ' । तथा स्त्री योनिबस्तिभ्यां पिचुनक्तकान् धारयेत् । किम्भूतान् ? सेव्यादिभिर्लेपितान् । सेव्यमुशीरम् । अम्भोजं पद्मम् । हिमं चन्दनम् । क्षीरं विद्यते येषां, ते क्षीरिणो वृक्षाः पिप्पलादयः । येषां शस्त्रादिच्छिन्नानां क्षीरं दृश्यते । वल्कं वल्कलम् । सेव्यं चाम्भोजं च हिमं च क्षीरिवल्कं च तेषां कल्कं चाज्यं च तैर्लेपितान् । पुनः किम्भूतान् ? आर्द्रार्द्रानतिशयेनार्द्रीकृतान् । पिचुशब्देन विकेशिकासदृशः कार्पासमयो नक्तकश्चैलखण्डः ।

**शतधौतघृताक्तां स्त्रीं तदम्भस्यवगाहयेत् ।**
**ससिताक्षौद्रकुमुदकमलोत्पलकेसरम् ॥ ३ ॥**
**लिह्यात् क्षीरघृतं खादेच्छृङ्गाटककसेरुकम् ।**
**पिबेत्कान्ताब्जशालूकबालोदुम्बरवत्पयः ॥ ४ ॥**
**शृतेन शालिकाकोलीद्विबलामधुकेक्षुभिः ।**
**पयसा रक्तशाल्यन्नमद्यात्समधुशर्करम् ॥ ५ ॥**
**रसैर्वा जाङ्गलैः,**

शतेति । शतशब्दो बहुवारपर्यायः । सङ्ख्यावाचीत्यन्ये । तथा च सङ्ग्रहेऽधीतम्—"सहस्रधौतसर्पिषाऽधोनाभेः सर्वतः प्रदिह्यादिति" । शतधौतेन बहुधा प्रक्षालितेन घृतेनाभ्यक्तां स्त्रीं तदम्भस्यवगाहयेत् । तत्र तां निमज्जनं कारयेत् । तदित्यनेन हि सेव्यादिद्रव्यपरामर्शः । 'स्त्रीमिति वाम्शसोरितीयङ्विकल्पात्पूर्वरूपम्' । तथा क्षीरं घृतं च लिह्यात् । किम्भूतम् ? ससितेत्यादि । सह सितया तथा क्षौद्रेण तथा कुमुदकमलोत्पलानां केसरेण किञ्जल्केन सहितम् । अन्ये तु क्षीराद्घृतं क्षीरोद्भवं घृतं क्षीरघृतमिति मन्यन्ते । तथा खादेच्छृङ्गाटकं कसेरुकं च । तथा पयः क्षीरं पिबेत् । किम्भूतम् ? कान्तेत्यादि । कान्ता गन्धप्रियङ्गुः । अप्सु जातमब्जम्, कमलादि । शालूकमुत्पलमूलम् । बालमुदुम्बरम् (अ) पक्वमुदुम्बरफलम् । कान्ता चाब्जं च शालूकमूलं च बालोदुम्बरं च तानि विद्यन्ते यस्य पयसस्तदेवं, तैः शृतं क्षीरं पिबेदित्यर्थः । यैर्हि तत्पयः शृतं तानि तत्राऽवश्यं विद्यन्ते ।

क्षीरश्रपणविधिश्चातिसारचिकित्सोक्तः 'पयस्युत्क्वाथ्य मुस्तानां विंशति'मित्याद्यनुसारेणाऽत्र कल्प्यः। तन्त्रान्तरे त्वेवमुक्तम्—"द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम्। क्षीरावशेषः कर्तव्यः क्षीरपाके त्वयं विधिरिति"। अन्ये तु कान्तादिद्रव्याणां चूर्णेन युक्तं कल्केन वा युक्तं पयः पिबेदित्याहुः। पयसा रक्तशाल्यन्नं समधुशर्करं सुशीतं भुञ्जीत। किम्भूतेन क्षीरेण? शल्यादिभिः शृतेन सिद्धेन। देशसात्म्याद्यनुरोधाज्जाङ्गलैर्वा रसैः शाल्यन्नमद्यात्।

**शुद्धिवर्ज्यं चाऽस्रोक्तमाचरेत्।**

शुद्धिं वर्जयित्वाऽस्रोक्तं रक्तपित्ताभिहितं यत्साधनं तद्बाह्यान्तराचरेत् सेवेत। अस्रशब्दस्योपलक्षणार्थत्वाद्रक्तपित्तं गम्यते।

**असम्पूर्णत्रिमासायाः प्रत्याख्याय प्रसाधयेत्॥ ६॥**
**आमान्वये च,**

असम्पूर्णास्त्रयो मासा यस्या गर्भिण्याः, सैवं, तस्याः पुष्पदर्शने सति, गर्भः प्रायो न तिष्ठत्यसञ्जातसारत्वात्। तस्मात्प्रत्याख्याय प्रत्याख्यानं कृत्वा प्रसाधयेत् यत्नेन साधयेत्। आमान्वये च। अत्राऽपि प्रत्याख्याय प्रसाधयेदित्यनुवर्तते। आमानुगते रक्तदर्शने सम्पूर्णत्रिचतुरादिमासाया अपि सञ्जातसारेऽपि गर्भे सति, विरुद्धोपक्रमत्वात्प्रत्याख्याय साधनं कारयेत्। तथा हि—रूक्षतीक्ष्णकटुप्रायमामघ्नं गर्भिण्या विरुद्धं शीतस्निग्धप्रायं चामस्य।

एवमप्यामरक्तयोर्द्वयोर्यदविरुद्धं तदुपदेष्टुमाह—

**तत्रेष्टं शीतं रूक्षोपसंहितम्।**
**उपवासो घनोशीरगुडूच्यरलुधान्यकाः॥ ७॥**
**दुरालभापर्पटकचन्दनातिविषाबलाः।**
**क्वथिताः सलिले पानं तृणधान्यादिभोजनम्॥ ८॥**
**मुद्गादियूषैरामे तु जिते स्निग्धादि पूर्ववत्।**

तत्र आमान्वये सामतायां सत्यां शीतं यदन्नपानादि तत्सर्वं बाह्यतोऽन्तश्च हितम्। शीतं रक्तस्य पथ्यमामस्य विरुद्धत्वादपथ्यमित्याशङ्क्याह—'रूक्षोपसंहितम्'। रूक्षेण तिक्तकषायादिना युक्तम्। तथा देशसात्म्याद्यनुरोधादुपवासो हितो न केवलं शीतं रूक्षोपसंहितम्। तथा घनादयो द्रव्यविशेषाः सलिले क्वथिताः पाने हिताः। घनो मुस्तः। अरलुः स्योनाकः। तथा तृणधान्यानि नीवारकोद्रवश्यामाकादीनि भोजनमाहारस्तत्राऽमान्वये हितम्। कैः सह? मुद्गादियूषैः। आदिग्रहणेन मकुष्ठमसूरादयः शिम्बीधान्यविशेषाः पित्तश्लेष्महरा गृह्यन्ते। सामतायामेवोत्पन्नायामयमुपक्रमः। आमे तु जिते स्निग्धादि पूर्ववत्। पूर्वस्मिन्निव पूर्ववत्। 'सप्तम्यन्ताद्वतिः' यथा प्रथमं रक्तदर्शने स्निग्धशीतं हितं तथाऽत्रापि पूर्वनिर्दिष्टं स्निग्धादि हितमित्यर्थः। स्निग्धशीतानि बाह्यान्तरुपयोज्यानि।

गर्भे निपतिते तीक्ष्णं मद्यं सामर्थ्यतः पिबेत् ॥ ९ ॥
गर्भकोष्ठविशुद्ध्यर्थमर्तिविस्मरणाय च।
लघुना पञ्चमूलेन रूक्षां पेयां ततः पिबेत् ॥ १० ॥
पेयाममद्यपा कल्के साधितां पाञ्चकौलिके ॥
बिल्वादिपञ्चकक्वाथे तिलोद्दालकतण्डुलैः ॥ ११ ॥
मासतुल्यदिनान्येवं पेयादिः पतिते क्रमः।
लघुरस्नेहलवणो दीपनीययुतो हितः ॥ १२ ॥

गर्भ इति। गर्भिण्या एवमासेवमानाया अप्यदृष्टवशाद् गर्भे निपतिते निःशेषेण पतिते सति तीक्ष्णं कर्कशं मद्यं सामर्थ्येन पिबेत्। बहु पिबेदित्यर्थः। किमर्थमित्याह। गर्भेत्यादि। गर्भकोष्ठविशुद्ध्यर्थमर्तेः पीडाया विस्मृत्यर्थं च। ततो मद्यपरिपानादनन्तरं रूक्षां पेयां पिबेत्। किम्भूताम्? लघुना पञ्चमूलेन बृहत्यादिना कृताम्। अमद्यपा तु या स्त्री सा गर्भे निपतिते पेयां पिबेन्न तु मद्यम्। क्व साधिताम्? कल्के। किं सम्बन्धिनि? पाञ्चकौलिके। पञ्चकोलस्यायं पाञ्चकौलिकस्तस्मिन्। पञ्चकोलकं कल्कीकृत्य तत्र पेयां साधितामित्यर्थः। तथा बिल्वादिपञ्चकक्वाथे महत्पञ्चमूलकषाये साधितां पेयां पिबेदिति योज्यम्। कैः साधिताम्? तिलोद्दालकतण्डुलैः। उद्दालको व्रीहिविशेषः। मासैस्तुल्यानि दिनानि माससङ्ख्या वासराः। यावन्तो मासा गर्भस्य तावन्त्यहानि गर्भे निपतिते सत्येवं पूर्वोक्तेन प्रकारेण पेयादिक्रमः कार्यः। किम्भूतः? लघुरस्नेहलवणः। न विद्येते स्नेहलवणे यस्य। तथा दीपनीयैरग्निकृद्भिर्मरिचचित्रकादिभिर्द्रव्यैर्युतः। स तथाविधस्तत्र क्रमो हितः।

किमर्थः?

दोषधातुपरिक्लेदशोषार्थं विधिरित्ययम्।

दोषौ पित्तकफावत्र गृह्येते। वातस्य क्लेदसम्भवाभावात्। दोषौ च धातवश्च तेषां परिक्लेदस्तस्य शोषार्थं शोषणायाऽयं विधिरिति।

स्नेहान्नबस्तयश्चोर्ध्वं बल्यजीवनदीपनाः ॥ १३ ॥

ऊर्ध्वमतो दोषधातुपरिक्लेदशोषादनन्तरं स्नेहान्नबस्तयो हिताः। स्नेहश्चतुर्विधः पानादौ हितः। तथाऽन्नं स्निग्धमरूक्षं हितम्। बस्तयोऽपि स्निग्धा एव न रूक्षा हिता वातकोपभयात्। किम्भूताः स्नेहान्नबस्तयः? बल्यदीपनजीवनाः। बल्या बलाय हिताः। दीपना वह्नेः सन्धुक्षणकृतः। तथा जीवना ओजोवृद्धिकराः।

इदानीमुपविष्टकनागोदरयोर्गर्भयोर्हेतुलिङ्गौषधानि वितानयितुमाह—

सञ्जातसारे महति गर्भे योनिपरिस्रवात्।
वृद्धिमप्राप्नुवन् गर्भः कोष्ठे तिष्ठति सस्फुरः ॥ १४ ॥
उपविष्टकमाहुस्तं वर्धते तेन नोदरम्।



सञ्जातः सारो बलं यस्याऽसौ सञ्जातसारो बलवान् गर्भस्तस्मिन् । तथा महति प्रवृद्धे सति । गर्भिण्याः परिहार्याऽपरिहाराद्यो योनेः परिस्रवः परिस्रवणं तस्मात् । परिस्रव इति च सामान्येन निर्देशात्कदाचिद्रक्तरूपः कदाचिदन्यादृशोऽपि गर्भात्स्रवति । परिस्रवाच्च कारणाद् वृद्धिमप्राप्नुवन्नगच्छन् कोष्ठ एव गर्भाधार एव तिष्ठति गर्भः । यतो योनिपरिस्रवात्कारणाद्वायुः कुपितः पित्तश्लेष्माणौ परिगृह्य गर्भस्य रसवहां नाडीं प्रतिपीड्याऽवतिष्ठते । ततो नाड्यां दोषैः कुल्यायामिव तृणपत्रादिभिः प्रतिच्छन्नायां रसस्यासम्यग्वहनान्नाडीरोधाद् वृद्ध्यभावो गर्भस्य । किम्भूतः कोष्ठे तिष्ठति ? सस्फुरः । स्फुरणं स्फुरः । ' अज्विधौ भयादीनामुपसंख्यानमित्यच् । गाङ्कुटादिभ्योऽञ्णिन्ङिदिति ङित्त्वाद् गुणाभावः ' । सह स्फुरेण चलनेन वर्तत इति सस्फुरः । एतावन्मात्रविशेषावस्थः कोष्ठे तिष्ठति । तं तथाविधं गर्भमुपविष्टकसंज्ञमाहुः । मुनय इति शेषः । तेन तथा भूतेन गर्भेण कोष्ठे स्थितेन तस्या उदरं न वर्धते न वृद्धिं याति गर्भस्यैवावृद्धेः । नहि यद्यस्य वृद्धौ वर्धते तदवृद्धौ तस्य वृद्धिः स्यात् । तथा हि चन्द्रवृद्ध्यैव समुद्रवेलाया वृद्धिः । उपविष्टकावस्थश्च गर्भो न वर्धते । अतस्तत्कारणाभावादुदरस्याप्यवृद्धिः ।

एवमुपविष्टकमुक्त्वा नागोदराख्यं वक्तुमाह—

**शोकोपवासरूक्षाद्यैरथवा योन्यतिस्रवात् ॥ १५ ॥**
**वाते क्रुद्धे कृशः शुष्येद्गर्भो नागोदरं तु तत् ।**
**उदरं वृद्धमप्यत्र हीयते स्फुरणं चिरात् ॥ १६ ॥**

शोक इति । शोकोपवासरूक्षाद्यैर्गर्भगर्भिण्यपचयकारिभिः पवनप्रकोपकारिभिर्हेतुभिर्वाते क्रुद्धे कुपितेऽथवा गर्भगर्भिण्योरुपचयप्रदैराहारविहारैरुपचितयोर्गर्भगर्भिण्योरपि कदाचिदत्यर्थं रक्तस्रुतिकारणान्यासेवेत स्त्री । तदानीं तस्या योन्यतिस्रवो जायते । तस्माद्योन्यतिस्रवात्कारणादपि पवने कुपिते कृशो गर्भः सम्पद्यते । शुष्येदित्यत्र चशब्दो लुप्तनिर्दिष्टो द्रष्टव्यः । न केवलं कृशो भवति शुष्येच्चेत्यर्थः । तं तथाभूतं गर्भं नागोदरसंज्ञकं केषाञ्चिन्मते चोपशुष्ककसंज्ञं विद्यात् । अत्र नागोदरसंज्ञके गर्भेऽन्तःस्थित उदरं वृद्धमपि महदपि सद्धीयते हानिं याति । स्फुरणं च चिराच्चिरेण भवति । उपविष्टके तु केवलमवृद्धिर्न तु हानिः ।

**तयोर्बृंहणवातघ्नमधुरद्रव्यसंस्कृतैः ।**
**घृतक्षीररसैस्तृप्तिरामगर्भांश्च खादयेत् ॥ १७ ॥**
**तैरेव च सुतृप्तायाः क्षोभणं यानवाहनैः ।**

तयोरिति । तयोरुपविष्टकनागोदराख्ययोर्गर्भयोर्घृतक्षीररसैस्तृप्तिर्गर्भिण्याः कार्येति शेषः । किम्भूतैस्तैः ? बृंहणवातघ्नमधुरद्रव्यैः संस्कृतैः सिद्धैः । बृंहणानि च तानि वातघ्नानि च मधुराणि चैवम्भूतानि यानि द्रव्याणि द्राक्षाशर्करादीनि न तु व्यस्तानि बृंहणानि वातघ्नानि मधुराणि च । तत्र केवलबृंहणानि प्रि-

यष्ठुप्रभृतीनि नतु वातघ्नानि। वातघ्नानि च बृंहणानि नतु मधुररसानि। यथा नागरादीनि। मधुराणि च न वातघ्नानि नाऽपि बृंहणानि। यथा तण्डुलीयमसूरादीनि। तदेतैर्थस्तगुणैर्द्रव्यैः संस्कृतेन घृतादिना तृप्तिर्न कार्या किं तर्हि समस्तबृंहणादिगुणयुक्तैर्द्रव्यैः संस्कृतैरिति बोध्यम्। तथा सङ्ग्रहेऽधिजगे—" तयोर्जीवनीयबृंहणीयमधुरौषधसिद्धानां सर्पिषामुपयोग इत्यादि"। तथा तद्गर्भपुष्ट्ये तां गर्भिणीमामगर्भांश्च खादयेद्वैद्य इति शेषः। आमगर्भान् खादन्त्याः कदाचिद् गर्भिण्या जुगुप्सा स्यादतो गर्भगर्भिण्योर्द्वयोरपि व्यापदो भवेयुरिति 'यन्तोऽत्र खादिर्निर्दिष्टः'। वैद्यो हि तां तथा युक्त्या खादयेत्। यथाऽसौ न जुगुप्सेत। आमगर्भा अपरिपूर्णगर्भा उच्यन्ते। तथा तैरेव बृंहणादिद्रव्यसंस्कृतैर्घृतक्षीररसैरामगर्भैश्च सुतृप्तायास्तृप्तिं प्राप्तायाः क्षोभणं कार्यम्। कैः? यानै रथादिभिर्वाहनैर्गजतुरगादिभिः। तत्रारोप्य गर्भिणीं वेगेन नयेदित्यर्थः।

अथ लीनाख्यस्य गर्भस्य चिकित्सामाह—

**लीनाख्ये निस्फुरे श्येनगोमत्स्योत्क्रोशबर्हिजाः॥ १८॥**
**रसा बहुघृता देया माषमूलकजा अपि।**
**बालबिल्वं तिलान्माषान्सक्तूंश्च पयसा पिबेत्॥ १९॥**
**समेद्यमांसं मधु वा कट्यभ्यङ्गं च शीलयेत्।**

अस्योपविष्टकनागोदराभ्यामेव हेतुलक्षणयोरुक्तत्वाद्यदेवेह निस्फुरणत्वादि विशेषान्तरं तदेवेह तन्त्रकृतोक्तम्। सङ्ग्रहे तु पपाठ—"यस्याः पुनर्वातोपसृष्टस्रोतसो लीनो गर्भः प्रसुप्तो न स्पन्दते तं लीनमित्याहुरिति। तत्र लीनाख्ये गर्भे सति गर्भिण्याः श्येनादिजा रसा बहुघृता देयाः। आदिशब्देन तित्तिरिकुक्कुटादीनां ग्रहणम्। तथा माषमूलकजा रसा बहुघृता देयाः। तथा सात्म्यादिवशाद् बालबिल्वादीन् समस्तानैकध्यं कृत्वा क्षीरेण पिबेत्। तथा सह मेदुरमांसेन माद्वीकं वा पिबेत्। कट्यां चाभ्यङ्गं शीलयेदभ्यसेत्।

**हर्षयेत्सततं चैनामेवं गर्भः प्रवर्धते॥ २०॥**

सततं मुहुर्मुहुश्चैनां गर्भिणीमुपविष्टकनागोदरलीनाख्यगर्भोदरस्यां हर्षयेन्मुदितां कुर्यात्। एवमनयेतिकर्तव्यतया कृतया गर्भः प्रवर्धते वृद्धिं याति।

**पुष्टोऽन्यथा वर्षगणैः कृच्छ्राज्जायेत नैव वा।**

अन्यथाऽन्यप्रकारेण पूर्वोक्तविपर्ययेण रूक्षात्मना सेवितेन मातुराहाररसेनाल्पेन पुष्टश्चेतनामात्रावशेष एव वत्सरसन्दोहैः कृच्छ्राज्जायेत कष्टेन योनितो निष्क्रामेत्। नैव वेति अथवा यावज्जीवं गर्भिण्याः कुक्षावेवावसीदेन्न ततो निष्क्रामेत् कुक्षावेवावतिष्ठेत।

**उदावर्तं तु गर्भिण्याः स्नेहैराशुतरां जयेत्॥ २१॥**
**योग्यैश्च बस्तिभिर्हन्यात्सगर्भां स हि गर्भिणीम्।**



गर्भिण्या यद्युदावर्ताख्यो व्याधिः स्यात्तं स्नेहैश्चतुर्भिर्यथायोग्यौषधसाधितैः पानादिना सेवितैराशुतरामचिरात्त्वरितं जयेत् । तथा योग्यैस्तत्कालोचितबस्तिभिरनुवासनैर्जयेत्। ननु गर्भिण्या वर्ज्येषु बस्तिमामासतोऽष्टमादिति प्रागुक्तं तत्कथमिह सामान्येनानुवासनं तन्त्रकृदुपादिक्षदित्याह—हन्यादित्यादि । स यस्मादुदावर्तो गर्भेण सह गर्भिणीं हन्यादतस्तमाशुतरां जयेत्।

गर्भेऽतिदोषोपचयादपथ्यैर्दैवतोऽपि वा॥ २२ ॥
मृतेऽन्तरुदरं शीतं स्तब्धं ध्मातं भृशव्यथम्।
गर्भास्पन्दो भ्रमस्तृष्णा कृच्छ्रादुच्छ्वसनं क्लमः ॥२३ ॥
अरतिः स्रस्तनेत्रत्वमावीनामसमुद्भवः ।

गर्भ इति । दोषाणां वातादीनामुपचयः प्रवृद्धत्वम्, अतिशयेन दोषोपचयोऽतिदोषोपचयस्तस्माद्धेतोरथवा अपथ्यैः स्वभावमात्रकालादिविरुद्धस्वभावैरथवा दैवादन्यजन्मार्जितशुभाशुभकर्मवशादन्तरुदरमध्ये गर्भे मृते सति गर्भिण्या उदरं शीतमूष्मरहितं भवति । तथा स्तब्धं निश्चलम् । तथा ध्मातं दृतिवद्वातपूरितम्। तथा भृशव्यथमतिवेदनं भवति। तथा गर्भास्पन्दो गर्भस्यास्फुरणम् । भ्रमस्तृष्णा च भवति । तथा कृच्छ्रात् कृच्छ्रेण गर्भिण्या उच्छ्वसनमूर्ध्वश्वसनम् । तथा क्लमो ग्लानिः । तथा अरतिः स्थानासनशयनादिष्वनवस्थितत्वं चेतसः । तथा स्रस्ते च ते नेत्रे च तयोर्भावः स्रस्तनेत्रत्वम्। स्रस्ते स्थानाच्च्युते इव । तथा आवीनामासन्नप्रसवकालजशूलविशेषाणामसमुद्भवोऽनुत्पादः ।

तस्याः कोष्णाम्बुसिक्तायाः पिष्ट्वा योनिं प्रलेपयेत् ॥ २४ ॥
गुडं किण्वं सलवणं तथान्तः पूरयेन्मुहुः ।
घृतेन कल्कीकृतया शाल्मल्यतसिपिच्छया ॥ २५ ॥
मन्त्रैर्योगैर्जरायूक्तैर्मूढगर्भो न चेत्पतेत्।
अथापृच्छयेश्वरं वैद्यो यत्नेनाशु तमाहरेत् ॥ २६ ॥
हस्तमभ्यज्य योनिं च साज्यशाल्मलिपिच्छया।
हस्तेन शक्यं तेनैव,

तस्या इति। तस्या अन्तर्मृतगर्भाया ईषदुष्णजलसिक्ताया योनिं प्रलेपयेत्प्रदेहयेत्। गुडादिकं पिष्ट्वा सामर्थ्याद्गुडादिकेनैव लेपयेदिति योज्यम् । तथाऽन्तः पूरयेत्। शाल्मल्यतसिपिच्छयेति सम्बन्धनीयम् । योनेः प्रकृतत्वात्तस्या अन्तरभ्यन्तरे बहिश्च। कीदृश्या पिच्छया ? घृतेन कल्कीकृतया पिष्टया। एवं योनेर्मुहुर्मुहुरभ्यन्तरं पूरयित्वाऽनन्तरं मूढगर्भपातनार्थं मन्त्रान् सिद्धान् प्रयोजयेत् । तथा जरायूक्तान् जराय्वपतने कथितांस्तांश्च योगान् योजयेत्। मन्त्रैः सङ्ग्रहोक्तैः 'क्षितिजलमित्यादिभि'रथवाऽथर्ववेदोक्तैश्च मन्त्रैर्जरायोः पातनार्थमुक्तैः। एवमनुष्ठीयमानेऽपि मूढगर्भो यदि न पतत्यथाऽनन्तरमीश्वरं नृपमापृच्छ्य तदाज्ञां गृहीत्वा तं मूढगर्भ-

माशु गर्भिरया आहरेदाकर्षेत्। कथम्? हस्तमभ्यज्य लेपयित्वा तथा योनिमभ्यज्य। केन? साज्येत्यादि शाल्मल्याः पिच्छा निर्यासः। सहाज्येन वर्तत इति साज्या। साज्या चाऽसौ शाल्मलिपिच्छा च तया हस्तं योनिं चाभ्यज्य यत्नेन गर्भमाहरेत्। हस्तेन शक्यमाक्रष्टुं तेनैव हस्तेन साज्यशाल्मलिपिच्छाक्तेन तं गर्भं समाकर्षेत्।

**गात्रं च विषमं स्थितम्॥ २७॥**
**आञ्छनोत्पीडसम्पीडविक्षेपोत्क्षेपणादिभिः।**
**अनुलोम्य समाकर्षेद्योनिं प्रत्यार्जवागतम्॥ २८॥**

गात्रमिति। गात्रं च गर्भस्य विषमं कृत्वा स्थितमयथामार्गेण स्थितमाञ्छनादिभिरनुलोम्य स्पष्टत्वं प्राप्ते सति योन्यभिमुखमार्जवेन ऋजुमार्गेणाऽऽगतं सन्तमाहरेत्। आञ्छनेनायामेन दीर्घतया स्थापनेन तथोत्पीडनेनोर्ध्वपीडनेन। तथा समन्तात्पीडनेन। तथा विक्षेपेण विशेषप्रेरणेन। उत्कर्षेण क्षेपणमुत्क्षेपणं तेन। आदिग्रहणादेवंप्रायैरन्यैरपि स्वबुद्धिपरिकल्पितैः स्पष्टत्वं प्राप्त इति।

इदानीं शस्त्रोपायसाध्यां मूढगर्भचिकित्सामाह—

**हस्तपादशिरोभिर्यो योनिं भुग्नः प्रपद्यते।**
**पादेन योनिमेकेन भुग्नोऽन्येन गुदं च यः॥ २९॥**
**विष्कम्भौ नाम तौ मूढौ शस्त्रदारणमर्हतः।**

हस्तेति। हस्तेन पादेन शिरसा अतुल्यकालं कदाचिद्धस्तेन कदाचित्पादेन कदाचिच्छिरसा योनिं प्रति भुग्नः कुटिलो मूढगर्भः प्रपद्यते आयाति यः स एको विष्कम्भो नाम मूढगर्भः। तथा पादेनैकेन योनिं तथा द्वितीयपादेन गुदं पायुं भुग्नः सन् यो मूढगर्भः प्रपद्यते आयाति सोऽपरो विष्कम्भः। तावेतौ द्वौ विष्कम्भौ नाम मूढौ मूढगर्भौ शस्त्रदारणमर्हतः। हस्तेनाऽऽक्रष्टुमशक्यत्वात्तयोः शस्त्रदारणं कार्यमित्यर्थः।

अत एवाऽऽह—

**मण्डलाङ्गुलिशस्त्राभ्यां तत्र कर्म प्रशस्यते॥ ३०॥**

मण्डलं चाङ्गुलिश्च मण्डलाङ्गुली। मण्डलशब्देन मण्डलाग्रं शस्त्रमुपलक्ष्यते अङ्गुलिशब्देन चाङ्गुलिशस्त्रम्, ते नामनी ययोः शस्त्रयोस्ते मण्डलाङ्गुलिशस्त्रे शस्त्रविध्यध्यायोक्ते ताभ्यां मण्डलाङ्गुलिशस्त्राभ्यां तयोर्विष्कम्भाख्ययोर्मूढगर्भयोः कर्म प्रशस्यते। ताभ्यां शस्त्राभ्यां दारणमेतयोः कार्यमित्यर्थः।

**वृद्धिपत्रं हि तीक्ष्णाग्रं न योनावचारयेत्।**

वृद्धिपत्रसंज्ञं शस्त्रं यस्मात्तीक्ष्णाग्रमतस्तद्योनौ नावचारयेत्तेन तत्र विदारणं न विधेयं प्रत्यपायभयात्।





दारणं यत्र यथा विधेयं तथाऽऽह—

**पूर्वं शिरःकपालानि दारयित्वा विशोधयेत् ॥ ३१ ॥**
**कक्षोरस्तालुचिबुके प्रदेशेऽन्यतमे ततः ।**
**समालम्ब्य दृढं कर्षेत्कुशलो गर्भशङ्कुना ॥ ३२ ॥**
**अभिन्नशिरसं त्वक्षिकूटयोर्गण्डयोरपि ।**

पूर्वमिति । पूर्वं शिरःसम्बन्धीनि कपालानि विशोधयेत् । किं कृत्वा ? शस्त्रेण दारयित्वा छित्त्वा । एवं शिरःकपालानि शोधयित्वा गर्भिणीकोष्ठबाह्यानि कृत्वा ततोऽनन्तरं कक्षोरस्तालुचिबुके प्रदेशेऽन्यतमे तद्विषये समालम्ब्य तं गर्भं गृहीत्वा दृढं कृत्वा आकर्षेत् । केन ? गर्भशङ्कुना । कः ? कुशलोऽभ्यस्तकर्मा वैद्यः । अभिन्नशिरसमविदारितोत्तमाङ्गं पुनर्गर्भमक्षिकूटयोस्तथा गण्डयोस्तद्विषयेऽन्यतमे प्रदेशे कदाचिदक्षिकूटप्रदेशे कदाचिद्गण्डप्रदेशे समालम्ब्य तं गर्भं दृढं गर्भशङ्कुना गृहीत्वाऽऽकर्षेत् ।

**बाहुं छित्त्वांऽससक्तस्य वाताध्मातोदरस्य तु ॥ ३३ ॥**
**विदार्य कोष्ठमन्त्राणि बहिर्वा सं निरस्य च ।**

बाहुमिति । अंसाभ्यां सक्तोंऽससक्तस्तस्य बाहुं छित्त्वाऽऽकर्षणं कुर्यात् । वामेनांसेन सक्तस्य वामं बाहुं दक्षिणेनांसेन सक्तस्य दक्षिणं बाहुं छित्त्वेत्यर्थः । वातेनाध्मातं दृतिवत्पूरितमुदरं यस्य मूढगर्भस्याऽसौ वाताध्मातोदरस्तस्य तु कोष्ठमामपक्वाशयाश्रयं विदार्य पाटयित्वाऽन्त्राणि च बहिः सम्यङ्निरस्य बाह्यतः प्रक्षिप्याकर्षेत् ।

**कटीसक्तस्य तद्वच्च तत्कपालानि दारयेत् ॥ ३४ ॥**

'कटीसक्तस्येति तृतीयासमासः' । कट्या सक्तस्य ककुद्मत्या लीनस्य तद्वच्चेति । तेन वाताध्मातोदरेण तुल्यं कर्म दारणात्मकं कृत्वा तत्कपालानि तस्य कट्याः कपालानि खण्डानि विदारयेत् ।

इति विशेषेण गर्भस्याऽऽकर्षणमुक्त्वा सामान्येन मूढगर्भचिकित्सामाह—

**यद्यद्वायुवशादङ्गं सज्जेद्गर्भस्य खण्डशः ।**
**तत्तच्छित्त्वा हरेत्सम्यग्रक्षेन्नारीं च यत्नतः ॥ ३५ ॥**

यदिति । यद्यदङ्गं मूढगर्भस्य वायुवशात्सज्जेत्संश्लिष्येत्तत्तदङ्गं खण्डशो लवशश्छित्त्वा दारयित्वा सम्यगाहरेत् । किलैकवेलया सकलगर्भशरीरच्छेदनादन्तःस्थितमूढगर्भाया नार्या अपि बलवच्छस्त्रनिपातनाद्विघातः सम्भाव्यत इति खण्डश इत्युक्तम् । अत एवाऽऽह—रक्षेदित्यादि नारीं च यत्नेन तात्पर्यं कृत्वा रक्षेत् । यथा नार्या अङ्गं किञ्चिदपि न छिद्यते तथा विधेयमित्यर्थः ।

**गर्भस्य हि गतिं चित्रां करोति विगुणोऽनिलः ।**
**तत्राऽनल्पमतिस्तस्मादवस्थापेक्षमाचरेत् ॥ ३६ ॥**



गर्भस्येति। यस्माद्गर्भस्य चित्रां नानारूपां गतिमवस्थितिं विगुणः प्रकुपितः प्रभञ्जनः करोति, तस्माद्योऽनल्पमतिर्महाबुद्धिर्वैद्यः स तत्र तस्यां गतौ अवस्थापेक्षमाचरेत्। मूढगर्भे प्रत्यनुक्तमप्यवस्थितं कर्म कुर्यादित्यर्थः।

छिन्द्याद्गर्भं न जीवन्तं मातरं स हि मारयेत्।
सहात्मना, न चोपेक्ष्यः क्षणमप्यस्तजीवितः॥ ३७॥

छिन्द्यादिति। जीवन्तं गर्भिण्यन्तर्मृतगर्भलक्षणानभिज्ञो वैद्याभिमानी यः, स गर्भं न दारयेत्। कुतो हेतोः ? इत्याह। यस्मात्स मातरं मारयेत्। कथम् ? सहात्मना मातरमात्मानं च स च्छिन्नो गर्भो व्यापादयेदित्यर्थः। न चाऽस्तजीवितो गर्भिण्या अन्तर्मृतो गर्भः क्षणमपि मुहूर्तमात्रमप्युपेक्ष्योऽपि तु तस्य द्रागेव प्रतिक्रियां कुर्यात्।

इदानीमुपेक्ष्यां मूढगर्भां स्त्रियमाह—

योनिसंवरणभ्रंशमक्कल्लश्वासपीडिताम्।
पूत्युद्गारां हिमाङ्गीं च मूढगर्भां परित्यजेत्॥ ३८॥
अथाऽपतन्तीमपरां पातयेत्पूर्ववद्भिषक्।
एवं निर्हृतशल्यां तु सिञ्चेदुष्णेन वारिणा॥ ३९॥
दद्यादभ्यक्तदेहायै योनौ स्नेहपिचुं ततः।
योनिर्मृदुर्भवेत्तेन शूलं चास्याः प्रशाम्यति॥ ४०॥

योनेः संवरणं संवृतयोनित्वम्। तथा तस्या एव योनेर्भ्रंशः स्वस्थानाच्च्यवनम्। तथा मक्कल्लः शिरोबस्तिकोष्ठशूललक्षणः प्रागुक्तो व्याधिः। तैर्योनिसंवरणादिभिः पीडिताम्। तथा पूत्युद्गाराम्। तथा हिमाङ्गीम्। एवंविधां मूढगर्भां त्यजेन्नोपक्रमेत्। अथ मूढगर्भाहरणादनन्तरमपरां जरायुसंज्ञामपतन्तीमनिष्क्रामन्तीं पूर्ववत्पातयेत् पूर्वेण तुल्यं पूर्ववत्। पूर्वोक्तेन पातनोक्तविधिना 'हिरण्यपुष्पीमूलं चेत्यादिनेत्यर्थः'। एवमनन्तरोक्तेन विधिना निर्हृतं शल्यं गर्भं जरायुसंज्ञं यस्यास्तां तु स्त्रियमुष्णेन जलेन सिञ्चेत्। ततः स्नानादनन्तरमभ्यक्तशरीरायै स्त्रियै योनौ स्नेहपिचुं दद्यात्। तेन दत्तेन स्नेहपिचुना अस्या योषितो योनिर्मृदुर्भवेत्, शूलं रुजा च प्रशाम्यति।

दीप्यकातिविषारास्नाहिङ्ग्वेलापञ्चकोलकान्।
चूर्णं स्नेहेन कल्कं वा काथं वा पाययेत्ततः॥ ४१॥
कटुकातिविषापाठाशाकत्वङ्ग्घिङ्गुतेजिनीः।
तद्वच्च दोषस्यन्दार्थं वेदनोपशमाय च॥ ४२॥
त्रिरात्रमेवं सप्ताहं स्नेहमेव ततः पिबेत्।
सायं पिबेदरिष्टं वा तथा सुकृतमासवम्॥ ४३॥
शिरीषककुभक्काथपिचून् योनौ विनिक्षिपेत्।



**उपद्रवाश्च येऽन्ये स्युस्तान् यथास्वमुपाचरेत् ॥ ४४ ॥**

दीप्यकेति। ततः स्नानाभ्यङ्गादनन्तरं दीप्यकादेश्चूर्णं स्नेहेन घृतादिना प्रकृत्यादिवशाद् यथायोग्येन तां स्त्रियं पाययेत्। कल्कं वा दीप्यकादेर्जलेन पिष्ट्वा स्नेहेन तां पाययेत्। क्वाथं वा दीप्यकादेस्तां पाययेत्। तथा कटुकादीनि तद्वत् तां स्त्रियं पाययेत्। एतानि द्रव्याणि चूर्णीकृत्य स्नेहेन कल्कीकृत्य क्वाथीकृत्य वा पाययेत्। शाकं खरच्छदम्। त्वक् त्वचम्। तेजिनी तेजोवती। किमर्थं पाययेत्? दोषस्यन्दार्थम्। दोषस्य रक्तादेः स्यन्दः स्रवणं तदर्थं पाययेत्। तथा वेदनायाः पीडाया उपशान्त्यर्थं च। त्रिरात्रमेवं मूढगर्भाऽऽकर्षणदिनात् प्रभृति कार्यम्। ततस्त्रिरात्रादनन्तरं मूढगर्भा सप्ताहं स्नेहमेव पिबेन्न तु रूक्षौषधमित्येवकारोऽवधारणार्थो द्योतयति। सायं दिनान्तेऽरिष्टं पूर्वोक्तलक्षणं पिबेत्। तथा शोभनं कृत्वा कृतं निष्पादितमासवं मद्यविशेषं तथा शिरीषककुभक्वाथकृतान् पिचून्। विकेशिकाप्रायान् कार्पासादिमयान् योनौ विनिक्षिपेत्। उपद्रवा ज्वरादयश्चान्ये ये भवेयुस्तानुपद्रवान् यथास्वमुपाचरेत्। यस्य ज्वरादेर्य आत्मीय उपक्रमस्तेन तेन तमुपक्रमेदित्यर्थः।

एतच्च पूर्वोक्तमासेव्यानन्तरं यत्कर्तव्यं मूढगर्भायाः स्त्रियास्तदाह—

**पयो वातहरैः सिद्धं दशाहं भोजने हितम्।**
**रसो दशाहं च परं लघुपथ्याल्पभोजना ॥ ४५ ॥**
**स्वेदाभ्यङ्गपरा स्नेहान् बलातैलादिकान् भजेत्।**
**ऊर्ध्वं चतुर्भ्यो मासेभ्यः सा क्रमेण सुखानि च ॥ ४६ ॥**

पय इति। पयः क्षीरमनन्तरं तस्यै दशाहं भोजने हितम्। किम्भूतम्? वातहरै रास्नादिभिर्द्रव्यैः सिद्धं शृतम्। दशाहादनन्तरं द्वितीयं च दशाहं रसो भोजने हितः। अतः परं दिनविंशतेरनन्तरं सा स्त्री लघुपथ्याल्पभोजना सती तथा स्वेदाभ्यङ्गपरा तत्प्रधाना सती स्नेहान् बलातैलादिकान् भजेत्। ऊर्ध्वमनन्तरं चतुर्भ्यो मासेभ्यः पञ्चमासात्प्रभृति सा निष्क्रान्तमूढगर्भा स्त्री क्रमेण, नतु सहसा सुखान्यन्नपानाहारविहाररूपाणि भजेत्।

अथ बलातैलं निरूपयति—

**बलामूलकषायस्य भागाः षट् पयसस्तथा।**
**यवकोलकुलत्थानां दशमूलस्य चैकतः ॥ ४७ ॥**
**निःक्वाथभागो भागश्च तैलस्य च चतुर्दशः।**
**द्विमेदादारुमञ्जिष्ठाकाकोलीद्वयचन्दनैः ॥ ४८ ॥**
**सारिवाकुष्ठतगरजीवकर्षभसैन्धवैः।**
**कालानुसार्यशैलेयवचागुरुपुनर्नवैः ॥ ४९ ॥**
**अश्वगन्धावरीक्षीरशुक्लायष्टीवरारसैः।**



शताह्वाशूर्पपर्ण्येलात्वक्पत्रैः श्लक्ष्णकल्कितैः ॥ ५० ॥
पक्वं मृद्वग्निना तैलं सर्ववातविकारजित् ।
सूतिकाबालमर्मास्थिक्षतक्षीणेषु पूजितम् ॥ ५१ ॥
ज्वरगुल्मग्रहोन्मादमूत्राघातान्त्रवृद्धिजित् ।
धन्वन्तरेरभिमतं योनिरोगक्षयापहम् ॥ ५२ ॥

बलेति । बलाया मूलानि तेषां कषायः क्वाथस्तस्य भागाः षट् । तैलैकाभागापेक्षयैतद्बोध्यम् । पयसस्तथा क्षीरस्य षडेव भागाः । यवकोलकुलत्थानां दशमूलस्य चैकत एकत्र क्वथितानां निःक्वाथभागः । यवादीनां तैलसमो निःक्वाथभाग एक इत्यर्थः । एवं त्रयोदश भागा भवन्ति । तैलस्य चतुर्दशो भागः । 'चतुर्दशानां पूरणः । तस्य पूरणे डडिति डट्' । एतदेव स्पष्टीक्रियते शिष्याणां हितार्थम् । तत्र यदा षोडशपलानि तैलस्य श्रपयितव्यानि तदा बलामूलानि चतुर्विंशतिर्भवन्ति । जलस्य पलशतानि त्रीणि चतुरशीत्यधिकानि । ततश्चतुर्थांशेन षण्णवतिः क्वाथपलानि । क्षीरपलानि षण्णवतिः । यवादीनां पलानि चत्वारि । पानीयपलानि चतुःषष्टिः । षोडशपलानि कषायस्य । द्विमेदादीनि द्रव्याणि प्रत्येकमर्धकर्षप्रमाणानि रक्तिकया पञ्चमभागसहितया सभानकयाधिकानीति । कालानुसार्या उत्पलसारिवा । क्षीरशुक्ला क्षीरविदारी । वरा त्रिफला । रसो बोलः । योऽयं यवकोलकुलत्थदशमूलैरेको भागः परिकल्पितस्तत्र यवकोलकुलत्थानां त्रयोंऽशा दशमूलस्य दशांशा इति व्याख्येयम् । "कल्पयेत्सदृशान्भागान् प्रमाणं यत्र नोदितमिति वचनात्" । सङ्ग्रहेऽप्युक्तम्—"यवकोलकुलत्थदशमूलकषायस्य भाग इति" । ये तु यवकोलकुलत्थानां त्रयोंऽशा दशमूलस्य चतुर्थोंऽश इति भागोऽयं कल्प्य इत्याहुस्ते तु पौर्वापर्यं न पर्यालोचयन्त्येव । यतः कल्पयेदित्यादिकया परिभाषया द्रव्याणामेषां समांशत्वं नियमितमेव । पृथक् षष्ठ्याऽत्र यो निर्देशः स च्छन्दोऽनुरोधादेव बोध्यः । तथा चानेनैव तन्त्रकृता सङ्ग्रहे समस्तान्येवैतानि द्रव्याणि निर्दिष्टानि । अपि च । दशमूलस्याऽऽधिक्येन वातरोगहन्तृत्वं यथाऽस्य तैलस्य न तथा यवादिभिरिति सर्वथा पूर्वं व्याख्यानं श्रेयः । मृद्वग्निनेनेति । मृदुशब्दोऽग्निविशेषणाय प्रयुक्तः किल । खरतरदहनसम्पर्कात् क्षीरबाहुल्येनाऽस्य तैलस्य झटिति पाकातिक्रान्तताऽपि किञ्चित्सम्भाव्यते । एतच्च तैलमशेषवातरोगहन्तृ च । तथा सूतिकादिषु प्रशस्तम् । तथा ज्वरादिजित् । तथा भगवतो धन्वन्तरेरभिमतमतिशयगुणवत्वात् । तथा योनिरोगं क्षयं चोपहन्ति ।

बस्तिद्वारे विपन्नायाः कुक्षिः प्रस्पन्दते यदि ।
जन्मकाले ततः शीघ्रं पाटयित्वोद्धरेच्छिशुम् ॥ ५३ ॥

बस्तिद्वार इति । गर्भिण्या मृताया यदि कुक्षिः प्रस्पन्दतेऽत्यन्तं चलति । क्व प्रदेशे ? बस्तिद्वारे तत्समीपे । कदा ? जन्मकाले गर्भप्रसवोन्मुखे काले । तदा

कुशलो वैद्यः शीघ्रं कुक्षिप्रस्पन्दनादनन्तरं पाटयित्वा शिशुं बालमुद्धरेत् ।

मधुकं शाकबीजं च पयस्या सुरदारु च ।
अश्मन्तकः कृष्णतिलास्ताम्रवल्ली शतावरी ॥ ५४ ॥
वृक्षादनी पयस्या च लता चोत्पलसारिवा ।
अनन्ता सारिवा रास्ना पद्मा च मधुयष्टिका ॥ ५५ ॥
बृहतीद्वयकाश्मर्यः क्षीरिशुङ्गत्वचा घृतम् ।
पृश्निपर्णी बला शिग्रुः श्वदंष्ट्रा मधुपर्णिका ॥ ५६ ॥
शृङ्गाटकं बिसं द्राक्षा कसेरु मधुकं सिता ।
सप्तैतान् पयसा योगानर्धश्लोकसमापनान् ॥ ५७ ॥
क्रमात्सप्तसु मासेषु गर्भे स्रवति योजयेत् ।

मधुकमिति । मधुकादिद्रव्योपलक्षितान्सप्त योगान् क्रमाद्यथानिर्दिष्टेन क्रमेण सप्तसु मासेषु गर्भे स्रवति तद्रक्षार्थं तान् योजयेत् । कीदृशान् योगान् ? अर्धश्लोकेन सपापनं समाप्तिर्येषां तानर्धश्लोकसमापनान् । अश्मन्तको यमलपत्रकः । ताम्रवल्ली रामतरुणी मञ्जिष्ठेत्येके । लता गन्धप्रियङ्गुः गौरसारिवेत्यन्ये । उत्पलसारिवा कृष्णसारिवा । क्षीरिणां न्यग्रोधादीनां शुङ्गास्तथा तेषामेव त्वक् चेति द्वन्द्वः । 'द्वन्द्वाच्चुदषहान्तादिति टच्' ।

कपित्थबिल्वबृहतीपटोलेक्षुनिदिग्धिजैः ॥ ५८ ॥
मूलैः शृतं प्रयुञ्जीत क्षीरं मासे तथाऽष्टमे ।
नवमे सारिवाऽनन्तापयस्यामधुयष्टिभिः ॥ ५९ ॥
योजयेद्दशमे मासि सिद्धं क्षीरं पयस्यया ।
अथवा यष्टिमधुकनागराऽमरदारुभिः ॥ ६० ॥

कपित्थेति । कपित्थादीनां समाहारद्वन्द्वः । कपित्थादेर्द्रव्यान्मूलैः शृतं क्षीरमष्टमे मासि प्रयुञ्जीत । नवमे मासि सारिवादिभिः सिद्धं क्षीरं प्रयुञ्जीत । दशमे मासि काकोल्यादिसिद्धं क्षीरमथवा यष्ट्यादिभिः सिद्धं योजयेत् ।

अवस्थितं लोहितमङ्गनाया वातेन गर्भं ब्रुवतेऽनभिज्ञाः ।
गर्भाकृतित्वात्कटुकोष्णतीक्ष्णैः स्रुते पुनः केवल एव रक्ते ॥ ६१ ॥
गर्भं जडा भूतहृतं वदन्ति मूर्तेर्न दृष्टं हरणं यतस्तैः ।
ओजोशनत्वादथवाऽव्यवस्थैर्भूतैरुपेक्ष्येत न गर्भमाता ॥ ६२ ॥

अवस्थितमिति । लोहितं वातेन हेतुनाऽवस्थितं कुक्षौ पवनेन रुद्धं गर्भं ब्रुवतेऽनभिज्ञाः । नञत्र पर्युदासे । अभिज्ञसदृशा इत्यर्थः । कुतस्तेषां भ्रान्तिरिति ? तद्बीजमाह—गर्भाकृतित्वादिति । गर्भस्याऽऽकृतिः संस्थानमुन्नत्यादिकम् । तथा हृल्लासदौर्हृदेत्यादि रक्तगुल्मनिदानोक्तं लक्षणं वातरुद्धलोहितावस्थितौ गर्भस्थितौ चोभयत्र

समानम् । अतोऽल्पबुद्धित्वादवस्थितं लोहितं गर्भं ब्रुवते । कटुकोष्णादिभिरवस्थि-तलोहितस्रुतिहेतुभिः स्रुते, केवल एव रक्ते गर्भराहृते, जडा निर्बुद्धयो भूतहृतमिति गर्भं वदन्ति । पुनःशब्दः, शिरसः कम्पं कृत्वा तेषामसम्भाव्याङ्गीकारेण सर्वजन-प्रथितेन जडत्वं सहेतुकं प्रतिपादयति । अत एवाह—यतो यस्मान्मूर्तेः शरीरस्य हरणं तैर्भूतैर्न दृष्टं न क्वचिदुपलब्धमतोऽसम्भाव्यवस्तुप्रतिज्ञानात्तेषां जडत्वमित्यर्थः । नन्वेतदपि कथमुच्यते ? इत्याह । ओजोऽशनत्वात् । यस्मात्ते भूता ओजोऽशना ओजोभक्षणमर्यादाः । अथवा कदाचित्ते भूता उल्लङ्घितमर्यादाः स्युः । तैस्तथा-भूतैरव्यवस्थैरव्यवस्थावस्थितैर्भूतैर्गर्भस्य माता नोपेक्ष्येत, अपि तु ह्रियेतैव । तथा हि । यथा गर्भमातोपचितशरीरा न तथा गर्भ इति । 'उपजातीन्द्रवज्राख्ये वृत्ते' ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां शारीर-स्थाने द्वितीयोऽध्यायः ॥ २ ॥

# तृतीयोऽध्यायः ।

गर्भव्यापदोऽनन्तरमङ्गविभाग उच्यते । अङ्गप्रत्यङ्गविज्ञाने सति हि सम्यग्गर्भ-स्याऽऽहरणादिकं कर्तुं शक्यते नान्यथेतीदमाह—

**अथाऽतोऽङ्गविभागं शारीरं व्याख्यास्यामः ।**

अङ्गस्य शरीरस्य विभागो विभजनमङ्गप्रत्यङ्गादिना पृथक्करणमङ्गविभागः । अथेत्यादि पूर्ववत् ।

अथ तान्येवाङ्गानि विभक्तुकाम आह—

**शिरोऽन्तराधिर्द्वौ बाहू सक्थिनी च समासतः ।**
**षडङ्गमङ्गं, प्रत्यङ्गं तस्याक्षिहृदयादिकम् ॥ १ ॥**

शिर इति । षडङ्गं षडवयवमङ्गं शरीरम् । तान्येव षडङ्गान्याह । शिरस्त-थाऽन्तराधिस्तथा द्वौ बाहू वामदक्षिणौ तथा सक्थिनी द्वे वामदक्षिणे इत्येवं समासतः संक्षेपेण षडङ्गं विस्तरेण पुनरनेकावयवम् । अन्तराधिशब्देन शिरोबाहु-सक्थिवर्जः सर्वो मध्यमभाग उच्यते । अन्तराधीयन्ते निबाध्यन्ते यथायथं शरीर-स्यान्तः स्थाप्यन्ते प्राक्कृतेन कर्मणा शिरःप्रभृतयः पञ्चावयवा यस्मिन् सोऽन्तराधिः तस्य षडवयवस्याङ्गस्याक्षिहृदयादिकं प्रत्यङ्गम् । आदिशब्देन कर्णनासापाणिपादा-दिपरिग्रहः । अवयवमवयवं प्रति योऽवयवस्तत्प्रत्यङ्गमुच्यते ।

शरीरं व्योमवाय्वादिपञ्चमहाभूतात्मकं चेतनादीनामधिष्ठानमतस्तेमेव प्रत्येकं महाभूतगुणमाह—

**शब्दः स्पर्शश्च रूपं च रसो गन्धः क्रमाद्गुणाः ।**
**खाऽनिलाऽग्न्यब्भुवाम्,**



शब्द इति । शब्दादयः पञ्च गुणाः क्रमात्क्रमेण खादीनां पञ्चानां भवन्ति । खं चाऽनिलश्चाग्निश्चापश्च भूश्च तासाम् । तत्र शब्दः खस्याकाशस्य गुणः । सुषिरेऽतिरिक्तस्पर्शादिगुणचतुष्टयाऽयोगित्वेन शब्दमात्रस्यैवोपलम्भात् । स्पर्शो वायोः । रूपमग्नेः । रसोऽपां पानीयस्य । गन्धो भूमेः । एतेषां गुणानां खाद्याश्रितत्वात्तेषां गुणा इत्युच्यन्ते ।

किमेकैक एवाऽकाशस्येव वाय्वादीनां यथोक्तो गुण उताऽन्येपि सन्तीत्याह—

**एकगुणवृद्ध्यन्वयः परे ॥ २ ॥**

एकेन गुणेन वृद्धिस्तयाऽन्वयः सम्बन्धः । परे वाय्वादौ महाभूते । अथवैकस्य गुणस्य वृद्धिस्तयाऽन्वयोऽनुगमस्तद्भावित्वं पर इति । चतुर्णां महाभूतानां परत्वोक्तिराकाशापेक्षया । तेन वाय्वादौ महाभूते एकगुणवृद्ध्यन्वयः । आकाशस्त्वेकगुण एव, तस्य परत्वासम्भवाद्, न तस्यैकगुणवृद्ध्यन्वयः । आकाशात्परेऽनन्तरे महाभूते वाय्वाख्ये एकगुणवृद्ध्यन्वयेन द्विगुणत्वाच्छब्दस्पर्शगुणत्वम् । ततः परे च महाभूतेऽग्न्याख्ये एकगुणवृद्ध्यन्वयेन त्रिगुणत्वाच्छब्दस्पर्शरूपगुणत्वम् । ततः परे जलाख्ये महाभूते एकगुणवृद्ध्यन्वयेन चतुर्गुणत्वाच्छब्दस्पर्शरूपरसगुणत्वम् । ततः परे पृथिव्याख्ये महाभूते एकगुणवृद्ध्यन्वयेन पञ्चगुणवत्त्वाच्छब्दस्पर्शरूपरसगन्धगुणत्वम् । एवं पञ्चानां खादीनामेकगुणवृद्ध्यैकद्वित्रिचतुःपञ्चगुणत्वं बोध्यम् ।

इदानीं यथाक्रमनिर्दिष्टेभ्यो भूतेभ्यो ये भावा भवन्ति तान् दर्शयति—

**तत्र खात् खानि देहेऽस्मिन् श्रोत्रं शब्दो विविक्तता ।**
**वातात्स्पर्शत्वगुच्छ्वासा वह्नेर्दृग्रूपपक्तयः ॥ ३ ॥**
**आप्या जिह्वा रसक्लेदा घ्राणगन्धास्थि पार्थिवम् ।**

तत्रेति । तेषु पञ्चसु महाभूतेषु मध्येऽस्मिन् देहे मनुष्यादौ स्थूलतया परिणते, नान्यस्मिन्नतीन्द्रिये भूतादौ । खादाकाशात्सत्वबहुलात् खानि छिद्राणि भवन्तीति शेषः । एवं श्रोत्रेन्द्रियाधिष्ठानं श्रोत्रम् । तथा शब्दो घोषः । तथा विविक्तता शून्यता रिक्तता खादेव छिद्रविशेषः । यद्यपि छिद्रादिषु सर्वभूतानामेव व्यापारस्तथाप्याकाशस्यैवाऽत्र विशिष्टं कारणत्वम् । यथा घटादौ मृद्दण्डचक्रसलिलचीवरादिकारणसमुदायनिष्पन्नेऽपि मृद एव विशिष्टकारणत्वम् । अत एवाऽसौ मृन्मय एवोच्यते । एवं सर्वेषु वक्ष्यमाणेषु वातादिजेषु स्पर्शादिषु बोध्यम् । वातादनिलाद्रजोबहुलात्स्पर्शादयो भवन्ति । स्पर्शः स्पर्शनम् । त्वगिह स्पर्शनेन्द्रियाधिष्ठानम् । तथोच्छ्वासः प्राणाख्यः । वह्नेः सत्वरजोबहुलाद् दृगादयो भवन्ति । दृग्दृष्टिश्चक्षुरिन्द्रियाधिष्ठानम् । तथा रूपाख्यो गुणः । पक्तिः पाकः । उपलक्षणं चेदम् । तेजःपित्तोष्ममेधावर्णशौर्यादयोऽपि वह्नेरेव वेद्याः । अद्भ्यः सत्वतमोबहुलाभ्यो जाता आप्या जिह्वादयो भवन्ति । जिह्वाशब्देनाऽत्र जिह्वाया विशिष्ट एकदेशो

रसनेन्द्रियाधिष्ठानं विवक्षितो न सर्वैव जिह्वा। तथा रसाख्यो गुणः। तथा क्लेदाख्यो भावः। उपलक्षणं चेदम्। स्वेदमूत्रादयोऽप्याप्या एव। घ्राणादि पार्थिवं भवति। घ्राणं नासाया विशिष्ट एकदेशो घ्राणेन्द्रियाधिष्ठानम्। गन्धो गुणः। तथाऽस्थिभावः। एतानि सर्वाणि पृथिव्याख्यात्तमोबहुलान्महाभूताज्जातानि।

देहेऽस्मिन् किं मातृजं पितृजम् (आत्मजञ्च)? इत्याह—

**मृद्वत्र मातृजं रक्तमांसमज्जगुदादिकम्॥ ४॥**
**पैतृकं तु स्थिरं शुक्रं धमन्यस्थिकचादिकम्।**
**चैतनं चित्तमक्षाणि नानायोनिषु जन्म च॥ ५॥**

मृद्विति। अत्रास्मिन् देहेऽनेकसामग्रीकेऽपि यन्मृदु वस्तु तन्मातृजम्। मातुराधिक्येन कारणभाव इत्यर्थः। 'मातृजमिति पञ्चम्यामजाताविति जनेर्डः'। किम्पुनस्तन्मृदु? इत्याह। रक्तेत्यादि। आदिशब्देन नाभिहृदययकृत्प्लीहामाशयादीनां ग्रहणम्। ननु गुदस्य मांसप्रायत्वान्मांसग्रहणेनैव सिद्धे ग्रहणे, तत् किं गुदग्रहणेन? ब्रूमः। मांसत्वस्याप्यस्यानिश्चयात् पृथगुपादानं कृतम्। तथा च वक्ष्यति—'मांसमर्मगुदोऽन्येषामिति'। यद्वस्तु स्थिरं तत् पैतृकं पितृजम्। किं तत्? इत्याह शुक्रादिकम्। आदिशब्देन सिरास्नायुरोमादीनां ग्रहणम्। 'पैतृकमिति पितुर्यच्चेति ठक्। इसुसुक्तान्तादिति कादेशः'। चेतना आत्मैव प्राक्कृतशुभाशुभकर्मबीजक्षेत्रमित्यर्थः। ततो जातं चैतनमात्मजम्। किं तद्? इत्याह। चित्तमित्यादि। चित्तमिन्द्रियसारथिः। तथाऽक्षाणि श्रोत्रादीनि। ननु चैतनान्यक्षाणीत्येतत्पूर्वापरव्याहतमिव मन्यामहे। यतः पूर्वमुक्तं 'खात्खानि देहेऽस्मिन्निति'। तत्कथमिह चैतनान्यक्षाणीत्युच्यन्ते? ब्रूमः। नात्र तत्र वाऽवधारणं कृतं यथा चैतनान्येवाक्षाणि खादेव खानीति। तस्मादाकाशं चेतना च द्वयमप्यक्षाणां कारणमित्यवेहि। तथा नानायोनिषु गजाऽजवाजिबस्तशशशम्बरप्रभृतिषु यज्जन्म सम्भवस्तदपि चैतनम्। उपलक्षणं चेदम्। कामक्रोधलोभभयमदहर्षधर्माधर्मशीलतास्मृतिबुद्धीच्छाद्वेषप्रयत्नाऽहङ्कारसुखदुःखायुःस्वरविशेषादयोपि हि चैतना एव। (किञ्च सात्म्यजम्? इत्याह—)

**सात्म्यजं त्वायुरारोग्यमनालस्यं प्रभा बलम्।**

सात्म्यं त्रिविधम्। व्याधिसात्म्यं देशसात्म्यं देहसात्म्यं च। तत्रेह व्याधिसात्म्यं न गृह्यते। यतो देहस्य सम्भवतः सम्भूतमात्रस्य चेयं विचारणा प्रस्तुता कुतः किं सम्भवतीति। अतो व्याधिवर्जदेहप्रस्ताव उपयुज्यतेऽत्र। तस्माद्देशसात्म्यं देहसात्म्यञ्च गृह्यते। देहस्य हि सम्भवतः सम्भूतमात्रस्य मात्राऽऽहारविहारादि यदपथ्यमप्यतिशयेन शीलितं तदप्यस्य देहस्योचिततां गच्छत्सुखानुबन्धत्वेन सात्म्यमुच्यते। तस्माद्देशसात्म्यं देहसात्म्यञ्च गृहीतुं युक्तम्। सात्म्याज्जातं सात्म्यजम्। किं तत्? आयु-

जीवितम् । तथाऽऽरोग्यं धातुसाम्यम् । तथाऽनालस्यं सर्वचेष्टासूद्योग उत्साहः । तथा प्रभा कान्तिः । तथा बलं शक्तिः । उपलक्षणं चेदम् । अलोलुपत्वेन्द्रियप्रसादस्वरवर्णवीर्यतेजःसम्पत्प्रहर्षाद्यपि हि सात्म्यजमेव ।(किञ्च रसजम् ? इत्याह—)

**रसजं वपुषो जन्म वृत्तिर्वृद्धिरलोलता ॥ ६ ॥**

रसादाहाररसात् परिणताज्जातं रसजम् । किं तत् ? जन्म सम्भवः । कस्य ? वपुषः सकलस्य शरीरस्य । तथा वृत्तिर्वर्तनं जीवितानुबन्धः । रसेन हि विना जीवितस्याप्यभावः । तथा वृद्धिरायामविस्तराभ्यां यथासंस्थानस्य शरीरस्याधिक्यम् । तथा । अलोलताऽलौल्यम् । अलोलता रसजेति लिङ्गविपरिणामे सति सम्बन्धः । उदाहरणमात्रं चेदम् । उत्साहपुष्टितृप्तयोऽपि हि रसजा एव ।

**सात्विकं शौचमास्तिक्यं शुक्लधर्मरुचिर्मतिः ।**
**राजसं बहुभाषित्वं मानक्रुद्दम्भमत्सराः ॥ ७ ॥**
**तामसं भयमज्ञानं निद्राऽऽलस्यं विषादिता ।**

सात्विकमिति । सत्वजं शौचादिकम् । शौचं कायवाङ्मनसां शुद्धिः । सत्यवाक्याद्यभिधायित्वं वाक्शुद्धिः । मृज्जलादिना क्षालनादि शास्त्रोदितं कायिकं शौचम् । मानसं तु शौचं जगद्बन्धुता करुणा शुद्धसन्तानत्वम् । शौचमिति । 'इगन्ताच्च लघुपूर्वादित्यण्' आस्तिक्यादि । आस्तिक्यमिति । अस्ति परलोक इति मतिरस्येत्यास्तिकः । "अस्तिनास्तीत्यादिना ठक्" । आस्तिकस्य भाव आस्तिक्यम् । 'ब्राह्मणादित्वात् ष्यञ्' । तथा शुक्ले धर्मे निर्व्याजे रुचिर्भक्तिः । मतिः प्रज्ञा । उपलक्षणं चेदम् । शौचकृतज्ञतादाक्षिण्यव्यवसायशौर्यगाम्भीर्यस्मृतिमेधादयोऽपि हि सात्त्विका एव । राजसानि बहुभाषित्वादीनि । उपलक्षणं चेदम् । शौर्यदुरुपचारतालोलुपत्वहर्षकामादयोऽपि राजसा एव । तामसानि भयादीनि । उपलक्षणं चेदम् । प्रमादशोकादीन्यपि तामसान्येव । तत्र सत्वं मनस्तस्योपप्लवो रजस्तमश्चेति । सुश्रुते चोक्तम् । "वाय्वाकाशधातुभ्यां वायुराग्नेयं पित्तमम्भःपृथिवीभ्यां श्लेष्मेति" । आयुर्वेदावतारे तूक्तम्—"शीतोष्णशमवृद्धयाप्यं न पित्तं द्रुततां गतम् । करकाम्भः कफो भौमो नानिलानलसंहृत" इति ।

अधुना देहाश्रितसर्वभावोपसंहारं कुर्वन्प्रधानो यो भावो देहस्य तस्य प्राधान्यं दर्शयन्निदमाह—

**इति भूतमयो देहः,**

इति भूतमयो देह इति । सर्वेभ्यो देहाश्रितभावेभ्यो महाभूतानामेव प्राधान्यम् । तन्मयत्वाद्देहस्य सर्वभावाधारभूतस्य ।

इत्येवमनेन ग्रन्थेन भूतामयत्वं देहस्याऽभिधायेदानीं देहस्य (प्रत्यङ्गं) प्रतिभागशो निरूपयन्नाह—

**तत्र सप्त त्वचोऽसृजः ॥ ८ ॥**



**पच्यमानात्प्रजायन्ते क्षीरात्सन्तानिका इव।**

तत्र तस्मिन् महाभूतमये देहेऽसृजो रक्तात्सप्तत्वगुत्पादनसमर्थेन धातूष्मणा पच्यमानात् सप्त त्वचः प्रकर्षेण जायन्ते। कुतः का इव ? यथा क्षीरात्पच्यमानाच्छ्रीतीभूतात्तदुपरि घनभागस्वभावाः सन्तानिका जालिका जायन्ते तद्वदसृजः पच्यमानात्सप्त त्वचो भवन्ति। तत्र। "भासिनी लोहिनी श्वेता ताम्रा त्वग्वेदिनी तथा। स्याद्रोहिणी मांसधरा सप्तमी परिकीर्तिता। व्रीहेरष्टादशांशाद्या द्वितीया-षोडशांशका। द्वादशांशा तृतीया तु चतुर्थ्यष्टांशमात्रिका। पञ्चमी पञ्चमांशा तु षष्ठी व्रीहिप्रमाणिका। व्रीहिद्वयप्रमाणा तु सप्तमी भिषजां मता। दीर्घच्छाया-पञ्चकस्य भासिन्याधारतां गता। मन्यन्ते षट् त्वचः केचित्तासां बाह्योदकाश्रया। द्वितीयाऽसृग्धरा सिध्मश्वित्राधारा तृतीयका। चतुर्थी सर्वकुष्ठानामधिष्ठानत्वमागता। विद्रध्यलज्यधिष्ठाना पञ्चमी रोगकारिणी। षष्ठ्यत्र यस्यां छिन्नायां ताम्यत्यन्धं तमो विशेत्। यामधिष्ठाय जायन्ते स्थूलमूलानि पर्वसु। अरूंषि कृष्णरक्तानि दुश्चिकित्स्यतमानि च।

इदानीं कला आह—

**धात्वाशयान्तरक्लेदो विपक्वः स्वंस्वमूष्मणा॥ ६॥**
**श्लेष्मस्नाय्वपराच्छन्नः कलाख्यः काष्ठसारवत्।**

धातूनां रसादीनामाशया आधरा जलाशयवत्तेषामन्तराण्यन्तरालानि तेषु धात्वाशयान्तरेषु क्लेदो धात्वाशयान्तरक्लेदः स विपक्वः कलाख्य उच्यते कलासंज्ञां लभते। केन विपक्वः ? स्वंस्वमूष्मणाऽऽत्मीयेनात्मीयेन वह्निना यथा रसधात्वाशयान्तरस्थः क्लेदो रसधातूष्मणा विपक्वः कलैका भवति। यावच्छुक्रधात्वाशयान्तरस्थः शुक्रधातूष्मणा विपक्वः सप्तमी कला भवति। कीदृशो विपक्वः ? ऊष्मणा स्नाय्वाऽपरया च जराय्वाख्यया छन्नश्छादितः। 'वा दान्तशान्तेत्यादौ छदेरण्यन्तात् छन्नशब्दो निपातितः'। किंवत् ?काष्ठसारवत्। यथा काष्ठस्य सारस्तथाऽयं धातुसारशेषोऽल्पत्वात्कलासंज्ञः। धात्वाशयान्तरमर्यादाः सप्त कलाः। तत्र— "आद्या मांसधरा यस्यां धमन्यः स्नायवः सिराः। स्रोतांसि च प्ररोहन्ति प्रतानैर्व्यापिभिः कला। द्वितीयाऽसृग्धरा यस्यां मांसान्तः शोणितं स्थितम्। विशेषतः सिराप्लीहयकृत्सु क्षतजं क्षतात्। मांसात्प्रवर्तते क्षीरं क्षीरिवृक्षादिव क्षतात्। मेदोधरा तृतीयाऽत्र मेदोस्थ्नामुदरे स्थितम्। भवत्यणुषु मज्जान्तः स्थूलास्थिष्वथ मूर्धनि। मस्तुलुङ्गकपालान्तश्चतुर्थी तु कफाश्रया। तत्स्थः कफो द्रढयति सन्धीनस्थ्नां शरीरजान्। पञ्चमी स्यात्त्विडाधारा सामपक्वाशयाश्रया। उन्दुकस्थं विभजते मलं पित्तधरा पुनः। षष्ठी पक्वाशयान्तःस्था वह्न्यधिष्ठानभावतः। पक्वाशयोन्मुखं कृत्वा बलात्पित्तस्य तेजसा। शोषयन्ती पचत्यन्नं तदेव च विमुञ्चति। दोषदुष्टाऽथ दौर्बल्यादाममेव विमुञ्चति। लभते ग्रहणीसंज्ञामस्याश्चाग्निबलं बलम्। शरीरं धारयत्य-

ग्निबलोपष्टम्भबृंहिता । अन्त्या कला शुक्रधरा मूत्रमार्गमुपाश्रिता । द्व्यङ्गुले दक्षिणे पार्श्वे बस्तिद्वारस्य चाप्यधः । शरीरं व्याप्य सकलं सा शुक्रं वर्तयत्यपि" ।

कलाख्यं भावमाख्यायाधाराख्यान् भावानाह--

**ताः सप्त सप्त चाधारा रक्तस्याद्यः क्रमात् परे ॥ १० ॥**
**कफाऽऽमपित्तपक्वानां वायोर्मूत्रस्य च स्मृताः ।**
**गर्भाशयोऽष्टमः स्त्रीणां पित्तपक्वाशयान्तरे ॥ ११ ॥**
**कोष्ठाङ्गानि स्थितान्येषु हृदयं क्लोम फुस्फुसम् ।**
**यकृत्प्लीहोन्दुकं वृक्कौ नाभिडिम्भान्त्रबस्तयः ॥ १२ ॥**

ता इति । न केवलं कलाः सप्त यावदाधारा अपि सप्त । रक्तादीनामस्मिन् देहे सम्भवन्तीति वाक्यशेषः । रक्तस्याद्यो रसाख्यो धातुः परेऽन्ये ये धातवः षट् ते क्रमाद्यथाक्रमं कफादीनामधाराः स्मृताः कथिताः । आमस्यान्नस्य य आधारः सोऽत्रामशब्देनोक्तः । तथा पक्वस्याऽन्नस्य पुरीषतां प्राप्तस्य य आधारः स पक्वशब्देनोच्यते । गर्भाशयो गर्भाधारो यः सोऽष्टमः स्त्रीणामेव देहे सम्भवति न पुंसाम् । क ? शरीरदेशे स्त्रीणां सम्भवतीत्याह—पित्तेत्यादि । पक्वशब्देनेह पक्वान्नमुच्यते । पित्तं च पक्वं च पित्तपक्वे तयोराशयावाधारौ । पित्तपक्वाशययोरन्तरं मध्यं पित्तपक्वाशयान्तरं तस्मिन् गर्भस्याशयः । एषु रक्ताद्याधारेषु कोष्ठाङ्गान्युदरावयवा हृदयादीनि स्थितान्याश्रितानि भवन्ति । तत्र-"कफरक्तप्रसादात्स्याद् हृदयं स्थानमोजसः । चेतनानुगभावानां परमं चिन्तितस्य च । मांसपेशीचयो रक्तपद्माकारमधोमुखम् । तस्य दक्षिणतः क्लोमयकृत्फुस्फुसमास्थितम् । समानवायुप्रध्मातादूक्ताद्देहोष्मपाचितात् । किञ्चिदुच्छ्रितरूपस्तु जायते क्लोमसंज्ञितः । तत्तुल्यहेतुजे प्लीहयकृती भिषजां मते । रक्तकिट्टादुन्दुकं स्यात्फुस्फुसो रक्तफेनजः । मेदोसृजः पच्यमानात् स्यातां वृक्कौ प्रसादजौ । नाभिः सर्वसिराणां स्यादाधारः शकृतः पुनः । डिम्बं स्याद्रक्तमांसस्य प्रसादादन्त्रसम्भवः । सार्धत्रिव्याममात्राणि पुरुषाणां तु तानि च । स्त्रीणां त्रिव्याममात्राणि बस्तिर्मूत्रस्य चाशय इति" । सङ्ग्रहे चोक्तम्—"कफरक्तवाहिस्रोतसां महाभूतानां च प्रसादादिन्द्रियाणि । तेष्वपि नेत्रे श्लेष्मणः प्रसादाच्छुक्लमण्डलं तत्पितृजम् । असृजः कृष्णमण्डलं तन्मातृजम् । मध्ये दृष्टिमण्डलं तदुभयात्मकम् । पक्ष्मवर्त्मशुक्लकृष्णदृष्ट्याख्यानि पञ्च मण्डलानि । तत्सन्धयश्चत्वारो द्वौ चापाङ्गकनीनयोरिति" । षट् पटलानि द्वे वर्त्मनी । बाह्यं चाश्रितमग्न्यम्भसी द्वितीयं मांसम् । तृतीयं मेदः । चतुर्थमस्थि । तेषां बहलता दृष्टेः पञ्चमांशेन । बन्धनगुणाश्चत्वारः सिराकण्डरामेद.कफात्मकाः । श्लेष्मा तु परं सर्वसन्धिबन्धनमित्युक्तं प्राक् । नेत्राश्रितं तेजो बाह्यतेजसा स्वयोनिना योगाच्छस्त्रमिवाश्मना कर्मण्यं भवति । अतियोगादुपहन्यते । तच्च वैद्युतवद्वडवामुखवच्चाम्भोमध्यगमपि वीर्योत्कर्षात्तेजस्त्वं न जहाति ।



अधुना यानि विशेषेण जीवितस्य स्थानानि देहावयवास्तान्याह—

**दश जीवितधामानि शिरोरसनबन्धनम् ।**
**कण्ठोऽस्रं हृदयं नाभिर्बस्तिः शुक्रौजसी गुदम् ॥ १३ ॥**

दशेति । शिरश्च रसनं च शिरोरसनम् । रसनं जिह्वा । बध्यतेऽनेनेति बन्धनम् । शिरोरसनस्य बन्धनं शिरोरसनबन्धनम् । शिरोरसनबन्धनादीनि दश जीवितस्य स्थानानि । एतेषु स्थानेषु विशेषेण जीवितं शरीरेन्द्रियसत्वात्मसंयोगलक्षणमवतिष्ठते ।

**जालानि कण्डराश्चान्ये पृथक् षोडश निर्दिशेत् ।**
**षट् कूर्चाः सप्त सीवन्यो मेढ्रजिह्वाशिरोगताः ॥ १४ ॥**
**शस्त्रेणैताः परिहरेच्चतस्रो मांसरज्जवः ।**
**चतुर्दशास्थिसङ्घाताः सीमन्ता द्विगुणा नव ॥ १५ ॥**
**अस्थ्नां शतानि षष्टिश्च त्रीणि दन्तनखैः सह ।**

जालानीति । जालानीव जालानि शरीरे षोडश आदिशेत् । कण्डराश्च पृथगेव षोडश ब्रूयादाचार्य इति शेषः । षट् कूर्चा अङ्गे स्युः । तथा सीवन्यः सप्तसङ्ख्या मेढ्रादिस्थिताः । ताः शस्त्रेण परिहरेत्प्रत्यवायभयात् । न तासु शस्त्रं पातयेदित्यर्थः । तत्र—"सिरास्नाय्वस्थिपिशितैश्चत्वारि मणिबन्धने । एकत्रैकत्र गुल्फे च जालान्येवं तु षोडश । हस्तयोर्द्वे पादयोर्द्वे ग्रीवाभागेऽथ पृष्ठतः । प्रत्येकं तु चतस्रः स्युः कण्डरा इति षोडश । करयोर्द्वौ पादयोर्द्वौ ग्रीवायां मेहने तथा । एकैकमिति षट् कूर्चाः सीवन्यः सप्त कीर्तिताः । एका मेढ्रेऽथ जिह्वायां भवेयुः पञ्च मूर्धनि । पृष्ठवंशे ह्युभयतश्चतस्रो मांसरज्जवः । बाह्ये द्वे अन्तरे द्वे च गुल्फे जानुनि वङ्क्षणे । त्रिके शिरसि कक्षायां कूर्परे मणिबन्धने । अस्थ्नां भवेयुः सङ्घाता अमी त्वत्र चतुर्दश । सीमन्ताः पञ्च मूर्ध्नि स्युर्गुल्फादिष्वस्थिसङ्घवत् । अस्थ्नां शतानि षष्टिश्च त्रीणि दन्तनखैः सह । पञ्च पादनखाः सक्थिप्रत्यङ्गुल्यस्थिकत्रयम् । एवं पञ्चदशैतानि शलाकाः पञ्च तु स्मृताः । एकस्तत्प्रतिबन्धश्च जङ्घायां कूर्चगुल्फके । द्वे द्वे इति षडेव स्युः पार्ष्णावूरौ च जानुनि । एकैकमित्येकसक्थि पञ्चविंशत्तथापरे । भुजयोः सक्थितुल्यानि भेदा एषां तु नामतः । पाणिः स्यात्पादवत्तत्र हस्तमूलं च पार्ष्णिवत् । मणिबन्धो गुल्फतुल्यः कूर्चतुल्यो द्वयेऽपि च । प्रकोष्ठौ जङ्घकातुल्यौ जानुवत्कूर्परो भवेत् । ऊरुवद्बाहुपृष्ठः स्यादन्तराधौ तु पार्श्वकः। चतुर्विंशतिरेतेषु फलकान्यर्बुदानि च । तावन्ति पृष्ठे त्रिंशत्स्युरुरस्यष्टौ त्रिभागके । एकैकं स्यादक्षकयोरंसयोस्तत्फलाख्ययोः । नितम्बे द्वे भवेतां तु शतमेतत्सविंशति । गण्डयोः कर्णयोर्द्वे द्वे शङ्खयोश्चाथ तालुनि । तथा जत्रुण्येकमेकं ग्रीवायां तु त्रयोदश । कण्ठनाड्यां तु चत्वारि हनुबन्धे द्वयं भवेत् । द्वात्रिंशदेव दन्ताः स्युस्तत्सङ्ख्योलूखलानि च । त्रीणि घ्राणे षट् शिरसि शतमूर्ध्वमिति स्मृतम् । शाखा-

न्तराध्यूर्ध्वभेदादेवं षष्टिशतत्रयम्। कपालं रुचकं चैव तरुणं वलयं तथा। नलकं पञ्चधेति स्युर्नितम्बे गण्डजानुनि। तालुमध्ये शिरस्यंसे कपालाख्यानि निर्दिशेत्। दशना रुचकाख्याः स्युर्घ्राणे कर्णेऽक्षिकोशके। तरुणानि पृष्ठपार्श्वे चरणे वलयानि तु। शेषाणि नलकाख्यानि समाख्याताकृतीनि च"।

**धन्वन्तरिस्तु त्रीण्याह सन्धीनां च शतद्वयम्॥ १६॥**
**दशोत्तरं,**

धन्वन्तरिसंज्ञः पुनस्तन्त्रकृदस्थ्नां शतानि त्रीण्येवाऽऽह नाधिकानि। तथा सन्धीनां शतद्वयं दशोत्तरं धन्वन्तरिराहेति योज्यम्। "सङ्ख्यायन्ते सन्धयोऽत्र चतस्रोऽङ्गुलयः पदे। चतसृष्वङ्गुलीषु स्युः प्रत्येकं त्रय एव तु। द्वावङ्गुष्ठे वङ्क्षणे स्यादेको गुल्फे तु जानुनि। सक्थ्येकस्मिन् सप्तदश तावन्तोऽपि द्वितीयके। भुजयोः सक्थितुल्यानि चान्तराधौ त्विमे मताः। त्रयः कटीकपालेषु विंशतिश्चतुरुत्तरा। पृष्ठे तद्वत्पार्श्वयोश्च वक्षस्यष्टावथोर्ध्वतः। शिरोधरायामष्ट स्युः कण्ठनाड्यां त्रयः स्मृताः। हृदयक्लोमयकृतां नाडीष्वष्टादश स्मृताः। द्वात्रिंशद्दन्तमूलेषु चैकैके प्राणकाकले। मूर्ध्नि च द्वौ कर्णशङ्खे गण्डनेत्रे च वर्त्मनि। हनुसन्धौ च विज्ञेयौ द्वौ भ्रुवोश्चोपरि स्मृतौ। पञ्च मूर्धकपालेषु चोर्ध्वमेवं त्र्यशीतिकाः। सन्धयस्त्वष्टधा ज्ञेया मणिबन्धोऽथ जानुनि। गुल्फेऽङ्गुलौ कोरसंज्ञा द्विजमूलेषु वङ्क्षणे। कक्षायां चोलूखलाख्या अंसपीठे गुदे भगे। नितम्बे चैव सामुद्रा ग्रीवायां पृष्ठवंशके। प्रतराः स्युर्मूर्धकटीकपालेषु तु सीवनाः। हनूभये काकतुण्डाः कण्ठस्य पन्नगास्तथा। हृदयक्लोमनेत्राणां नाड्यां मण्डलनामकाः। श्रोत्रशृङ्गाटकाख्येषु शङ्खावर्ता इति स्मृताः"।

अथाऽऽत्रेयमतं ब्रूते—

**सहस्रे द्वे निजगादाऽत्रिनन्दनः।**

अत्रिनन्दनो द्वे सहस्रे सन्धीनां निजगाद प्रोवाच। स हि स्नायुपेशीसिराश्रितैः सन्धिभिः सह गणयति। एतच्च बाहुल्येनोक्तम्। तथा हि। नवसु स्नायुशतेषु नवशतानि सन्धीनाम्। पञ्चसु पेशीशतेषु पञ्चशतानि। सप्तसु सिराशतेषु सप्तशतानीत्येकविंशतिशतानि प्रायेण प्राप्नुवन्तीति मन्यामहे।

**स्नावानवशती पञ्च पुंसां पेशीशतानि च॥ १७॥**
**अधिका विंशतिः स्त्रीणां योनिस्तनसमाश्रिताः।**

स्नायूनामस्मिन् देहे नवशती। नवानां शतानां समाहारो नवशती। 'द्विगोरिति ङीप्'। नवशतानीत्यर्थः। तत्र। "पदे पञ्च स्युरङ्गुल्यः प्रत्यङ्गुलि तु तानि षट्। त्रिंशदेव दश दश कूर्चे पादतले तथा। गुल्फे चेति त्रिंशदेवं जङ्घायां दश जानुनि। चत्वारिंशत्स्युरूरौ च वङ्क्षणे दश सक्थिनि। एवं सार्धं द्वितीयेऽपि शतं बाह्वोश्च सक्थिवत्। शाखास्वेवं षट्शतानि कट्यां द्वे विंशती स्मृते। विंशति-

मुष्कयोर्मेढ्रबस्त्यन्त्रेषु च कीर्तिताः। अशीतिः पृष्ठभागे स्युः पार्श्वयोः षष्टिरक्षयोः। चत्वार्युरस्यष्टदश त्वष्टावंसयुगे स्मृताः। नघ्ये शतद्वयं त्रिंशद् द्वे द्वे मन्यावटौ स्मृते। नेत्रोष्ठे तालुनि तथा ग्रीवायां त्रिंशदीरिताः। जत्रुणि त्रीणि चत्वारि हन्वोः पञ्च तु कीर्तिताः। जिह्वायां दन्तमांसेषु द्वादशैवाऽथ मूर्ध्नि षट्। एवं शतानि स्नायूनां नवैतेषु विनिर्दिशेत्। आमपक्वाशयान्त्रेषु बस्तौ च सुषिराणि तु। प्रतानवन्ति शाखासु महास्नावानि कण्डराः। वृत्तानि पार्श्वपृष्ठोरःशिरसि स्युः पृथूनि च। सिरादिभ्योऽप्यस्थितोऽपि रक्षेत्स्नावानि यत्नतः"। तथाचोक्तम्—"न ह्यस्थीनि तथा हिंस्युर्न पेश्यो न च सन्धयः। व्यापादिता अपि सिरा यथा स्नायूनि देहिनाम्। स्नायूनि वेत्ति यः सम्यग्बाह्यान्याभ्यन्तराणि च। स गूढं शल्यमाहर्तुं देहाच्छक्नोति देहिन" इति। "पेश्यः सम्प्रति भज्यन्ते पञ्चाङ्गुल्योऽथ तासु ताः। प्रत्येकं तिस्र इत्येवं ताः पञ्चदश कीर्तिताः। दश पादतले गुल्फे तथा पादस्य चोपरि। कूर्चे तु विंशतिः स्यात्तु जङ्घायां पञ्च जानुनि। ऊरौ विंशतिरित्येवं शतं सक्थ्येकतो भवेत्। शतं द्वितीयेऽपि तथा सक्थिवद् भुजयोर्मताः। चत्वार्येवं शतानि स्युः शाखास्वेकैव मेहने। सीवन्यां च वृषणयोर्द्वे स्फिजोस्तु दश स्मृताः। तिस्रो गुदे बस्तिमूर्ध्नि द्वे चतस्रस्तु कोष्ठगाः। नाभ्यामेकाऽथ हृद्येका स्यादेकामाशयेऽपि षट्। यकृत्प्लीहोन्दुकेषु स्युश्चतस्रः पृष्ठतो दश। पार्श्वयोर्वक्षसि दश चतस्रश्चाक्षकांसयोः। इत्यन्तराधौ षष्टिः स्युर्ग्रीवायां दश गण्डयोः। अष्टौ हनुप्रदेशेऽष्टावेकैका काकले तथा। जिह्वायां मूर्ध्नि गलके द्वे ललाटेऽथ तालुनि। द्वे ओष्ठयोः कर्णयोर्द्वे नासायां द्वे च कीर्तिते। पुरुषाणां भवेदेतत्पेशीनां शतपञ्चकम्। दशाधिकाः स्युः स्तनयोर्दश योनौ च योषिताम्। प्रत्येकं स्तनयोः पञ्च तासां वृद्धिस्तु यौवने। योन्यन्तराश्रिते द्वे तु द्वे च वृत्ते मुखाश्रिते। गर्भमार्गाश्रयास्तिस्रो यत्र गर्भोऽवतिष्ठते। शङ्खनाभ्याकृतिर्योनिस्त्र्यावर्ता जायते स्त्रियाः। तस्यास्तृतीय आवर्ते रोहितस्याकृतिर्भवेत्। गर्भशय्याऽथ तिस्रश्च भवेयुः सम्प्रवेशिकाः। शुक्रस्य चार्तवस्यैवं पेशीस्तन्त्रविदो विदुः"। एताभिर्हि शरीरे तनुबहुलस्थूलाणुवक्रवृत्तह्रस्वदीर्घस्थिरमृदुश्लक्ष्णकर्कशाभिः सन्ध्यस्थिसिरास्नावानि प्रच्छादितानि। सिराधमनीनां चानेकशो विभज्यमानानामेकोनत्रिंशच्छतसहस्राणि नवशतानि षट्पञ्चाशदधिकानि भवन्ति। ताभिरिदं शरीरं गवाक्षितं पिनद्धमाततं च। तावन्ति च केशश्मश्रुलोमानि। तासां हि मुखानि तत्प्रतिबद्धानि। अतस्तानि ताभिराप्याय्यन्ते तैश्च ताः स्वेदमभिवहन्ति। तथाऽभ्यङ्गाऽऽलेपादिवीर्यं त्वचि विपक्वमन्तर्नयन्ति। स्पर्शं च गृह्णन्ति। स्रोतांसि पुनरसङ्ख्येयान्येवेति। अन्ये त्वाहुः। शरीररोम्णां द्वासप्ततिः कोट्यो भवन्ति।

इदानीं सिराः सङ्ख्यातुमाह—

**दश मूलसिरा हृत्स्थास्ताः सर्वं सर्वतो वपुः॥ १८॥**



**रसात्मकं वहन्त्योजस्तस्मिन्नद्धं हि चेष्टितम् ।**

हृदि तिष्ठन्तीति हृत्स्था दश मूलसिराः । यतोऽन्यासां सिराणां सर्वासां मूलभूतत्वेनैव ताः स्थितास्ततः प्रधानभूता इत्यर्थः । हृत्स्था हृदयसम्बद्धाः । ताः सर्वं वपुः सकलं देहमोजो वहन्ति प्रापयन्ति । कथम् ? सर्वतः सर्वदा । वपुरोजो वहन्तीति 'वहेर्द्विकर्मकत्वाद्वपुरोजश्च कर्म' । किम्भूतमोजः ? रसात्मकं रसस्वभावमाहारात्सारकिट्टतया परिणतात् सारम् । तन्निबद्धं हि चेष्टितम् । तासु दशसु सिरासु निबद्धं निश्चयेन स्थितं चेष्टितं वाक्कायमनोव्यापारः । हिशब्दो यस्मादर्थे - यस्मात्तन्निबद्धं चेष्टितमतस्ता मूलसिराः ।

इदानीं संस्थानमासां निर्दिशति-

**स्थूलमूलाः सुसूक्ष्माग्राः पत्त्ररेखाप्रतानवत् ॥ १९ ॥**
**भिद्यन्ते तास्ततः सप्तशतान्यासां भवन्ति तु ।**

स्थूलेति । स्थूलं मूलं यासां ता एवम् । सुष्ठु सूक्ष्ममग्रं प्रान्तो यासां ता एवम् । स्थूलमूलत्वेन तासां व्यानवायुक्षिप्तो रसः शीघ्रमेव चान्तः प्रविशति । सूक्ष्मप्रान्तत्वेन रोमराज्यामप्यन्तः प्रविश्य तेषां रोम्णां वृद्धिहेतुः सम्पद्यते । ततश्चास्मिन् देहे स्थूलमूलाः सुसूक्ष्माग्राः पत्त्ररेखाप्रतानवद्भिद्यन्तेऽनेकधा सम्पद्यन्ते । यथा वृक्षस्य पलाशरेखाना प्रतानाः सूत्रसदृशाः स्थूलमूलाः सुसूक्ष्माग्रा अनेकधा जायन्ते तथैवेताः सिराः स्थूलमूलाः सूक्ष्माग्रा अनेकधा सम्पद्यन्ते नानारूपतः । ततस्तस्माद्धेतोः पलाशरेखाप्रतानवदनेकधा गमनादासां सिराणां सप्त- भवन्ति । तुशब्दोऽवधारणे भिन्नक्रमः । सप्तैव शतानि ।

**तत्रैकैकं च शाखायां शतं तस्मिन्न वेधयेत् ॥ २० ॥**
**सिरां जालन्धरां नाम तिस्रश्चाभ्यन्तराश्रिताः ।**

तासामेकैकस्मिन्सक्थ्नि शतम् । तस्मिन् सिराशते सिरां जालन्धरां नाम या जालानि धारयति तां न वेधयेत् । तिस्रश्चेति । याश्चान्यास्तिस्रः सिरा अभ्यन्तराश्रिता अन्तर्मुखास्ता अपि न वेध्या इति चशब्दार्थः । एवं सक्थ्याश्रिते सिराशते चतस्रः सिरा न वेध्याः । द्वितीयेऽपि सक्थ्नि चतस्र एव । सक्थिवद्बाह्वोरपि । एवं चतुर्षु सिराशतेषु शाखास्वाश्रितेषु षोडश सिरा न वेध्याः ।

**षोडशद्विगुणाः श्रोण्यां तासां द्वे द्वे तु वङ्क्षणे ॥ २१ ॥**
**द्वे द्वे कटीकतरुणे शस्त्रेणाष्टौ स्पृशेन्न ताः ।**

षट्त्रिंशच्छतमन्तराधौ । तत्र षोडशद्विगुणाः श्रोण्यां द्वात्रिंशच्छ्रोण्यवयवाश्रिताः सिराः । तासां मध्ये द्वे द्वे वङ्क्षणे द्वयोर्वङ्क्षणयोः प्रत्येकं द्वे सिरे । द्वे द्वे कटीकतरुणे द्वयोः कटीकतरुणयोः प्रत्येकं द्वे सिरे । एवं श्रोण्याश्रिता अष्टौ सिराः शस्त्रेण न स्पृशेत् ।

**पार्श्वयोः षोडशैकैकामूर्ध्वगां वर्जयेत्सिराम् ॥ २२ ॥**



पार्श्वयोः षोडश सिरास्तासामेकैकामूर्ध्वगां पार्श्वसन्धिसंज्ञां प्रत्येकं वर्जयेत् ।

**द्वादशद्विगुणाः पृष्ठे पृष्ठवंशस्य पार्श्वगे ।**
**द्वे द्वे तत्रोर्ध्वगामिन्यौ न शस्त्रेण परामृशेत् ॥ २३ ॥**

द्वादशेति । द्वादशद्विगुणाः पृष्ठे चतुर्विंशतिः सिराः पृष्ठमाश्रिताः । तासां पृष्ठवंशस्य पार्श्वयोः पृष्ठवंशमुभयतो द्वे द्वे तत्रोर्ध्वगामिन्यौ । एवं चतस्रः शस्त्रेण न परामृशेत् ।

**पृष्ठवज्जठरे तासां मेहनस्योपरि स्थिते ।**
**रोमराजीमुभयतो द्वे द्वे शस्त्रेण न स्पृशेत् ॥ २४ ॥**

पृष्ठेति । पृष्ठवज्जठरे पृष्ठेन तुल्याः सिरा उदरे तत्सङ्ख्याश्चतुर्विंशतिरित्यर्थः । तासमुदरश्रितानां सिराणां मध्यान्मेहनस्य मेढ्रस्योपरि स्थिते रोमराजीमुभयत उभयपार्श्वयोर्द्वे द्वे सिरे । एवं चतस्रः शस्त्रेण न परामृशेत् ।

**चत्वारिंशदुरस्यासां चतुर्दश न वेधयेत् ।**
**स्तनरोहिततन्मूलहृदये तु पृथग्द्वयम् ॥ २५ ॥**
**अपस्तम्भाख्ययोरेकां तथाऽपालापयोरपि ।**

चत्वारिंशदिति । चत्वारिंशदुरसि सिरास्तासां मध्ये चतुर्दश सिरा न वेधयेत् । ता एव दर्शयति । स्तनरोहितेत्यादि । तयोः स्तनयोर्मूले स्तनमूले । तत्र स्तनरोहितयोस्तथा स्तनमूलयोस्तथा हृदये पृथक् प्रत्येकं द्वयं द्वे द्वे सिरे न विध्येत् । अपास्तम्भाख्ययोः प्रत्येकमेकां सिराम् । तथाऽपालापयोः प्रत्येकमेकां सिरां न विध्येत् ।

**ग्रीवायां पृष्ठवत्तासां नीले मन्ये कृकाटिके ॥ २६ ॥**
**विधुरे मातृकाश्चाष्टौ षोडशेति परित्यजेत् ।**

ग्रीवायामिति । ग्रीवायां पृष्ठवत् सिराणां सङ्ख्या चतुर्विंशतिः सिराः । तासां सिराणां मध्यान्नीले द्वे मन्ये द्वे कृकाटिके द्वे विधुरे द्वे अष्टौ च मातृका मातृकाख्यानि मर्माणीत्येवं षोडश परित्यजेन्न शस्त्रं तासु पातयेत् ।

**हन्वोः षोडश तासां द्वे सन्धिबन्धनकर्मणी ॥ २७ ॥**

हन्वोर्द्वयोः षोडश सिराः संश्रिताः । तासां सिराणां मध्याद् द्वे सिरे परित्यजेत् । किंकर्मणी ते ? आह । सन्धिबन्धनकर्मणी । बध्यतेऽनेनेति बन्धनम् । सन्धेर्बन्धनं सन्धिबन्धनम् । अर्थाद्धनुसम्बन्धिनः सन्धेर्बन्धनं कर्म क्रिया ययोः सिरयोस्ते सन्धिबन्धनकर्मणी सिरे ।

**जिह्वायां हनुवत्तासामधो द्वे रसबोधने ।**
**द्वे च वाचःप्रवर्तिन्यौ,**

जिह्वायां हनुवत् सिरासङ्ख्या षोडशैव सिराः । तासां मध्ये जिह्वाया





अधो ये द्वे स्थिते रसबोधने याभ्यां रसो ज्ञायते मधुरादिः, रसबोधिन्यौ। द्वे वाचःप्रवर्तिन्यौ ये सिरे। एवं चतस्रो जिह्वाश्रिता सिरा परित्यजेत्।

**नासायां चतुरुत्तरा ॥ २८ ॥**
**विंशतिर्गन्धवेदिन्यौ तासामेकां च तालुगाम्।**

नासायां चतुरुत्तरा विंशतिः सिराणामेवं चतुर्विंशतिः सिरा नासाश्रितास्तासां मध्याद् द्वे गन्धवेदिन्यौ सिरे। तथैकां तालुगां सिरामेवं नासाश्रिताः सिरास्तिस्रः परित्यजेत्।

**षट्पंचाशन्नयनयोर्निमेषोन्मेषकर्मणी ॥ २९ ॥**
**द्वे द्वे अपाङ्गयोर्द्वे च तासां षडिति वर्जयेत्।**

षडिति। षट्पञ्चाशन्नयनयोः सिरास्तासां मध्यान्निमेषोन्मेषकर्मणी। निमेषोन्मेषौ निमीलनोन्मीलने कर्मणी ययोस्ते निमेषोन्मेषकर्मणी सिरे द्वे द्वे प्रत्येकम्। तथा अपाङ्गयोर्द्वे सिरे। एवं षट् सिरा वर्जयेत्तत्र शस्त्रं न पातयेत्।

**नासानेत्राश्रिताः षष्टिर्ललाटे स्थपनीश्रिताम् ॥ ३० ॥**
**तत्रैकां द्वौ तथाऽऽवर्तौ चतस्रश्च कचान्तगाः।**
**सप्तैवं वर्जयेत्तासाम्,**

नासानेत्रगता याः सिराः षष्टिरुक्तास्तासां मध्याल्ललाटे, तासां मध्यात्स्थपनीश्रितां, स्थपनीनाम मर्मविशेषस्तत्रस्थामेकां सिरां न विध्येत्। द्वौ तथाऽऽवर्तौ मर्मणी तयोरावर्तयोः स्थिते द्वे सिरे न विध्येत्। चतस्रश्च कचान्तगाः केशान्तस्थाः सिरा न विध्येत्। एवं सप्त सिरा ललाटे वर्जयेत्।

**कर्णयोः षोडशाऽत्र तु ॥ ३१ ॥**
**द्वे शब्दबोधने शङ्खौ सिरास्ता एव चाश्रिताः।**
**द्वे शङ्खसन्धिगे तासाम्,**

कर्णयोर्द्वयोः षोडश सिराः। अत्र त्वस्मिन् षोडशसङ्ख्ये सिरोद्देशे कर्णयोरास्थिते द्वे सिरे शब्दबोधने याभ्यां शब्दो बुध्यते ज्ञायते ते वर्जयेत्। शङ्खौ सिरास्ता एव—कर्णाश्रितास्तासां मध्याद् द्वे सिरे शङ्खसन्ध्याश्रिते वर्जयेत्।

**मूर्ध्नि द्वादश तत्र तु ॥ ३२ ॥**
**एकैकां पृथगुत्क्षेपसीमन्ताधिपतिस्थिताम्।**

मूर्ध्नि विषये द्वादश सिराः। तत्र तु तासु द्वादशासु सिरासु मध्येऽष्टौ सिराः शस्त्रेण वर्जयेत्। ता एवाऽऽह—'एकैकां पृथगुत्क्षेपसीमन्ताधिपतिस्थिताम्' एवं प्रत्येकमुत्क्षेपयोर्द्वयोरेकैकां सीमन्तेषु पञ्चस्वेकैकाम् अधिपतावेकामित्यष्टौ।

**इत्यवेध्यविभागार्थं प्रत्यङ्गं वर्णिताः सिराः ॥ ३३ ॥**

इतीति। इतिः समाप्तौ प्रकारे वा। अवेध्यसिराविभागविज्ञानार्थं तन्निमित्तं प्रत्यङ्गं शिरस्यन्तराधौ बाह्वादिषु याः सिरास्ता वर्णिता उक्तास्ता वर्णयितुं समाप्ता इति।

अथवाऽनेन प्रकारेण पूर्वोक्तेन वर्णिताः ॥ ३३ ॥

**अवेध्यास्तत्र कार्त्स्न्येन देहेऽष्टानवतिस्तथा ।**
**सङ्कीर्णा ग्रथिताः क्षुद्रा वक्राः सन्धिषु चाश्रिताः ॥ ३४ ॥**

अवेध्या इति । तत्र सिरासु मध्ये कार्त्स्न्येन साकल्येनाऽष्टानवतिः सिरा अवेध्या वर्णिताः - देहे शरीरे । न केवलमेता एवाऽवेध्याः । यावत्सङ्कीर्णादयश्चेति तथाशब्दस्यार्थः । सङ्कीर्णाः परस्परं निबद्धाः । ग्रथिता इव ग्रथिताः । क्षुद्रा अल्पाः सूक्ष्मा न महत्यः । वक्राः कुटिलाः । तथा सन्धिष्वस्थिरसन्धिषु या आश्रितास्ता अपि न वेध्याः ।

**तासां शतानां सप्तानां पादोऽस्रं वहते पृथक् ।**
**वातपित्तकफैर्जुष्टं शुद्धं चैवं स्थिता मलाः ॥ ३५ ॥**
**शरीरमनुगृह्णन्ति पीडयन्त्यन्यथा पुनः ।**

तासामिति । तासां सिराणां सम्बन्धीनि यानि सप्तशतानि तेषां पादः पञ्चसप्तत्यधिकं शतमस्रं वहते । किम्भूतं रक्तम् ? वातपित्तकफैर्जुष्टं युक्तं शुद्धं च तैरनाक्रान्तमदुष्टम् । पृथक् प्रत्येकं कृत्वा पादोऽस्रं वहते । एवं वातजुष्टं रक्तं सिराशतं पञ्च सप्तत्यधिकं वहति । पित्तजुष्टं रक्तं पञ्चसप्तत्यधिकं शतम् । तथा कफजुष्टं पञ्चसप्तत्यधिकं शतम् । तथा शुद्धं रक्तं पञ्चसप्तत्यधिकं शतं वहति । एवं पूर्वोक्तेनाऽनेन प्रकारेण मलाः स्थिताः शरीरमनुगृह्णन्ति वर्तयन्ति । अन्यथा पुनर्व्यत्ययेन स्थिताः पीडयन्ति विकारेण योजयन्ति ।

किं लक्षणाः सिरा वातादिजुष्टमस्रं वहन्तीत्याह—

**तत्र श्यावारुणाः सूक्ष्माः पूर्णरिक्ताः क्षणात्सिराः ॥ ३६ ॥**
**प्रस्पन्दिन्यश्च वातास्रं वहन्ते,**

तत्रेति । तत्र तासु सिरासु मध्ये याः श्यावारुणा वर्णेन सूक्ष्मास्तथा क्षणात्पूर्णरिक्तास्तथा प्रस्पन्दिन्यः सिरास्ता वातास्रं वातरक्तं वहन्ते । पूर्णरिक्ता इति वायोश्चलत्वात्क्षणात्पूर्णाः क्षणाद्रिक्ताः शून्या इव । किल स्पन्दनं सर्वासां विद्यते प्रकर्षेण तु वातरक्तवाहिनीनामिति प्रशब्देन द्योत्यते ।

**पित्तशोणितम् ।**
**स्पर्शोष्णाः शीघ्रवाहिन्यो नीलपीताः कफं पुनः ॥ ३७ ॥**
**गौर्यः स्निग्धाः स्थिराः शीताः संसृष्टं लिङ्गसङ्करे ।**

पित्तेति । सिराः पित्तशोणितं वहन्ते । किंविधाः ? स्पर्शोष्णाः स्पर्शेनोष्णा न शीताः । तथा शीघ्रवाहिन्यस्तथा नीलपीता वर्णेन । कफं पुनर्गौर्यो वहन्ति । कफमिति कफशोणितं शोणितशब्दलोपात् । किंविधाः ? स्निग्धाः स्निग्धच्छायाः तथा स्थिरा न तु चलाः । तथा शीताः स्पर्शेन । लिङ्गसङ्करे यथा निर्दिष्टस्य लक्षणस्य सङ्कीर्णत्वे संसृष्टं कफवातजुष्टं वातपित्तजुष्टं कफपित्तजुष्टं त्रिभिरपि दोषै-

र्जुष्टं रक्तं सिरा वहन्ति सकलं शरीरं प्रापयन्ति ।

**गूढाः समस्थिताः स्निग्धा रोहिण्यः शुद्धशोणितम् ।**

गूढा अन्तर्गतास्तथा समं कृत्वा स्थिताः समाः स्थितास्तथा स्निग्धाः स्निग्धच्छाया रोहिण्यः सिरापरसंज्ञा लोहिताभासा वा प्रसरणशीला वा शुद्धं शोणितं देहेऽस्मिन्वहन्ति ।

**धमन्यो नाभिसम्बद्धा विंशतिश्चतुत्तराः ।**
**ताभिः परिवृतो नाभिश्चक्रनाभिरिवारकैः ॥ ३६ ॥**
**ताभिश्चोर्ध्वमधस्तिर्यग्देहोऽयमनुगृह्यते ।**

धमन्य इति । धमन्यो नाभिसम्बद्धा विंशतिश्चतुरुत्तराश्चतुर्विंशतिरित्यर्थः । ताभिर्धमनीभिर्नाभिः परिवृता परिवेष्टिता । कथम् ? चक्रनाभिरिवारकैः । यथा रथाङ्गस्य मध्यमभागो नाभिशब्दवाच्योऽरकैः परिव्रियते, तद्वन्नाभिः शरीरमध्यभागो धमनीभिः । 'ध्मानाद्धमन्यः' स्रोतोविशेषा उच्यन्ते । ताभिर्धमनीभिरयं देह ऊर्ध्वमधस्तिर्यक् चानुगृह्यते । रसादिप्रापणकर्मणा ताः कायस्यानुग्रहं कुर्वन्ति ताभिरयं देह आप्याय्यते । आराम इव जलहारिणीभिः । केदार इव कुल्याभिः । सङ्ग्रहे चोक्तम्—'तासां खलु धमनीनां मध्याद्दश धमन्य ऊर्ध्वं प्रसृता दशाऽधः प्रसृतास्तिर्यक् चतस्रः । ताभिर्यथास्वमङ्गावयवा ऊर्ध्वाधस्तिर्यक् समाश्रिता धार्यन्त आप्यायन्ते च । तासामूर्ध्वगा हृदयमभिप्रपन्नाः प्रत्येकं त्रिधा जायन्ते । एवं तास्त्रिंशत् । ततस्त्रिंशतो मध्याद् द्वे द्वे वातपित्तकफरक्तरसान्वहतः । एवं दश । द्वे द्वे शब्दरूपरसगन्धान् गृह्णीतः । एवमष्टाभिः शब्दरूपरसगन्धा गृह्यन्ते । द्वाभ्यां द्वाभ्यां भाषते घोषं करोति स्वपिति प्रतिबुध्यते च । एवमष्टौ । द्वे चाश्रु वहतः । तथैव द्वे स्तनाश्रिते नार्याः स्तन्यं नरस्य शुक्रं वहतः । अधोगमाः पक्वाशयस्था दश त्रिधा जायन्ते । एवं ता अपि त्रिंशत् । तत्राद्याः पूर्ववद्दश द्वे द्वे वातपित्तकफरक्तरसान्वहतः । द्वे वहतोऽन्नमन्नाश्रयेण द्वे मूत्रं द्वे तोयं द्वे शुक्रं वहतः । द्वे च मुञ्चतः । ते एव नारीणामार्तवं वहतः । द्वे वर्चोनिरसने स्थूलान्त्रप्रतिबद्धे । एवं द्वादश । शेषास्त्वष्टौ धमन्यस्तिरश्चीनाः स्वेदमभिवहन्ति । तिर्यग्गामिन्यस्तु चतस्रो भिद्यमानाः सुबहुधा भवन्तीति ।

इदानीं स्त्रीपुरुषाणां दृश्यानि स्रोतांसि निरूपयितुमाह—

**स्रोतांसि नासिके कर्णौ नेत्रे पाय्वास्यमेहनम् ॥ ४० ॥**
**स्तनौ रक्तपथश्चेति नारीणामधिकं त्रयम् ।**

स्रोतांसीति । स्रोतांसि पुंसां नव । द्वौ नासापुटौ । द्वौ कर्णौ । द्वे नेत्रे । पायुर्गुदम् । आस्यं मुखम् । मेहनं मूत्रनिष्क्रमणद्वारम् । स्त्रीणामेतानि तथाऽन्यानि त्रीणि । द्वौ स्तनौ । तथैको रक्तपथो रक्तमार्गः । प्रतिमासं यतो योनौ रक्तं प्रवर्तते । तदेवं स्त्रीणां त्रीणि स्रोतांसि पुंभ्योऽधिकानि ।



एवं स्रोतांसि दृश्यान्यभिधाय शरीरे यान्यदृश्यानि स्रोतांसि तान्याह—

**जीवितायतनान्यन्तः स्रोतांस्याहुस्त्रयोदश ॥ ४१ ॥**
**प्राणधातुमलाम्भोऽन्नवाहीनि,**

अन्तः शरीरस्याभ्यन्तरे त्रयोदश स्रोतांसि वदन्त्याचार्या इति शेषः। तानि स्रोतांसि जीवितायतनानि विशेषेण जीवितस्याधिष्ठानानि। किम्भूतानि ? प्राणधातुमलाम्भोऽन्नवाहीनि। प्राणाख्यं वातं वहन्ति यानि तानि प्राणवाहीनि। धातुवाहीनि रसादिधातून् यानि वहन्ति। मलवाहीनि मूत्रशकृत्स्वेदान् यानि वहन्ति। तथाम्भोवाहीन्युदकवाहीनि। तथाऽन्नवाहीन्यन्नमभ्यवहृतं यानि वहन्ति। एवं त्रयोदश। सङ्ग्रहे चोक्तम्—" तत्र प्राणवाहिनां हृदयं मूलं महास्रोतश्च। तानि क्षयरौक्ष्यपिपासाक्षुद्व्यायामवेगविधारणादिभिर्दुष्यन्ति। ततोऽतिसृष्टं प्रतिबद्धं कुपितमल्पाल्पमभीक्ष्णं वा सशब्दमूलमुच्छ्वसनं तत्र श्वासवत्साधनम्। उदकवाहिनां तालुमूलं क्लोम च। तान्यामयाऽतिपानशुष्कान्नविड्विग्रहादिभिर्दुष्यन्ति। ततोऽतितृष्णा मुखशोषः कर्णक्ष्वेडनं तमोदर्शनं च। तत्र तृष्णोक्तमौषधम्। अन्नवाहिनामामाशयो मूलं वामपार्श्वं च। तेषां सर्वं मात्राशितीयोक्तमनुगच्छेत्। रसवाहिनां हृदयं मूलं दश धमन्यश्च। रक्तवाहिनां यकृत् प्लीहा च। मांसवाहिनां स्नावानि त्वक्च। मेदोवाहिनां वृक्कौ मांसं च। अस्थिवाहिनां जघनं मेदश्च। मज्जवाहिनां पर्वाण्यस्थीनि च। शुक्रवाहिनां स्तनौ मुष्कौ मज्जा च। मूत्रवाहिनां बस्तिर्वङ्क्षणौ च। शकृद्वाहिनां पक्वाशयः स्थूलान्त्रं च। स्वेदवाहिनां मेदोमूलं रोमकूपाश्चेति। स्रोतसामेव विशेषाः सिरा धमन्यः। अपरे त्वन्यत्वमिच्छन्ति सिराधमनीस्रोतसाम्। सरणात् सिराः। ध्मानाद्धमन्यः। स्रवणात्स्रोतांसि। केवलं परस्परसन्निकर्षात्सदृशकर्मत्वाच्च विभक्तकर्मणामप्यविभाग इव लक्ष्यते। अन्ये पुनरेवमाचक्षते—" स्रोतांसि सिरा धमन्यो रसायन्यो वाहिन्यो नाड्यः पन्थानोऽयनानि मार्गाः शरीरच्छिद्राणि संवृतानि स्थानान्याशया निकेताश्चेति शरीरे धात्ववकाशानां लक्ष्यालक्ष्याणां पर्यायेण नामानीति "।

**अहितसेवनात्।**
**तानि दुष्टानि रोगाय विशुद्धानि सुखाय च ॥ ४२ ॥**

अहितेति। अहितानामाहारविहारादीनां सेवनाच्छीलनात्तानि स्रोतांसि दुष्टानि रोगाय सम्पद्यन्ते। तत्साधनार्थं दोषादिविज्ञानीयोक्तमवगच्छेत्। विशुद्धान्यदुष्टानि स्रोतांसि सुखायारोग्याय सम्पद्यन्ते।

**स्वधातुसमवर्णानि वृत्तस्थूलान्यणूनि च।**
**स्रोतांसि दीर्घाण्याकृत्या प्रतानसदृशानि च ॥ ४३ ॥**

स्वेति। स्वधातुर्यो यो यस्य स्रोतस आधारस्याधेयत्वेन स्थितो धातुस्तेन तेन स्वधातुना समः समानो वर्णो येषां स्रोतसां तानि स्वधातुसमवर्णानि। यथा रस-



धातुतुल्यवर्णानि रसवाहिस्रोतांसि यावच्छुक्रधातुसदृशवर्णानि शुक्रवाहिस्रोतांसि । तथा स्रोतसां मध्ये स्रोतांसि कानिचिद्वृत्तानि वर्तुलानि कानिचित्स्थूलानि कानिचिदणूनि सूक्ष्माणि तथा आकृत्या संस्थानेन दीर्घाणि सर्वाण्येव । तथा प्रतानसदृशानि पत्त्ररेखातुल्यानि । पत्त्ररेखातुल्यरूपत्वेन शाखाप्रशाखाभिरनेकधा दूरं प्रसृतानीति गमयति ।

यतश्चाहिताहारविहारसेवनं स्रोतोदुष्टिकारणमतस्तानि तद्दुष्टिकारणानि वक्ति—

**आहारश्च विहारश्च यः स्याद्दोषगुणैः समः ।**
**धातुभिर्विगुणो यश्च स्रोतसां स प्रदूषकः ॥ ४४ ॥**

आहार इति । आहारः पानाशनादिलक्षणो दोषगुणैर्वातपित्तश्लेष्मगुणैरौक्ष्यादिभिर्यः समस्तुल्यः समानगुणः स स्रोतसां प्रदूषकः । विहारोऽपि यो वाग्देहमनश्चेष्टालक्षणः सोऽपि दोषगुणैः समानगुणो यथायथं स्रोतसां प्रदूषकः । यश्चाऽऽहारस्तथा विहारो धातुभी रसादिभिर्विगुणोऽसमानगुणो विपरीतगुणो यथायथमेव स्रोतसां प्रदूषकः ।

स्रोतसां दुष्टिः कथं ज्ञायत इत्याह—

**अतिप्रवृत्तिः सङ्गो वा सिराणां ग्रन्थयोऽपि वा ।**
**विमार्गतो वा गमनं स्रोतसां दुष्टिलक्षणम् ॥ ४५ ॥**

अतीति । अतिशयेन प्रवृत्तिर्यथा मूत्रवाहिस्रोतसां प्रमेहवद्बहुमूत्रता । सङ्गोऽप्रवृत्तिः । किञ्चिद्वा प्रवृत्तिर्मूत्रकृच्छ्रवत् । शकृद्वाहिनां स्रोतसामतीसारवत्पुरीषातिसरणमतिप्रवृत्तिः । सङ्गः स्तोकं कृत्वा पुरीषस्य प्रवृत्तिः । अथवा सर्वथोदावर्तवत्पुरीषस्याप्रवृत्तिः । एवं मूत्रवाहिस्रोतसां मूत्रातिप्रवृत्त्यप्रवृत्ती । तत्स्रोतोदुष्टेर्लक्षणम् । तथैव पुरीषवाहिनां पुरीषातिप्रवृत्त्यप्रवृत्ती पुरीषवाहिस्रोतोदुष्टेर्लक्षणम् । एवमन्येषामपि स्रोतसां यथायथं वस्तुवाहिनां यथास्वं वस्त्वतिप्रवृत्त्यप्रवृत्ती तेषां दुष्टेर्लक्षणम् । अथवा सिराणां स्रोतसां ग्रन्थयः कुटिलभावो दुष्टेर्लक्षणम् । विमार्गतो वेति । अथवा स्वं मार्गमुज्झित्वा मार्गान्तरासादनं स्रोतसां दुष्टेर्लक्षणम् ।

**बिसानामिव सूक्ष्माणि दूरं प्रविसृतानि च ।**
**द्वाराणि स्रोतसां देहे रसो यैरुपचीयते ॥ ४६ ॥**

बिसानामिवेति । बिसानां मृणालानां यथा सूक्ष्माणि द्वाराणि च्छिद्राणि दूरं प्रविसृतानि सकलबिसं गतानि तथैव स्रोतसां द्वाराणि मुखानि सूक्ष्माणि देहे दूरं प्रविसृतानि कृत्स्नं देहं प्रकर्षेण गतानि । यैर्द्वारैश्छिद्रैर्देहे शरीरेऽभ्यवहृतस्याऽऽहारस्य कायाग्निना पच्यमानस्य प्रसादभावो यः समुद्भवति स रसः प्रसादाख्य उपचीयते वृद्धिं नीयते ।

**व्यधे तु स्रोतसां मोहकम्पाध्मानवमिज्वराः ।**
**प्रलापशूलविण्मूत्ररोधा मरणमेव वा ॥ ४७ ॥**



**स्रोतोविद्धमतो वैद्यः प्रत्याख्याय प्रसाधयेत्।**
**उद्धृत्य शल्यं यत्नेन सद्यःक्षतविधानतः॥ ४८॥**

व्यध इति। स्रोतसां तु व्यधे ताडने सति मोहादयो भवन्ति। मोहादीनामितरेतरद्वन्द्वः प्रलापादीनां च। विण्मूत्रयो रोधेन सम्बन्धः। अथवा मरणमेव भवति। अतोऽस्माज्जीवितसंशयाद्धेतोर्वैद्यः प्रत्याख्याय 'अक्रियायां ध्रुवो मृत्यु'-रित्याद्युक्त्वा शल्यमुद्धृत्य बहिर्निष्कास्य प्रसाधयेत्। कथम्? यत्नेन नावहेलया। केन प्रसाधयेत्? सद्यःक्षतविधानतः सद्योव्रणप्रतिषेधोक्तविधिना।

**अन्नस्य पक्ता पित्तं तु पाचकाख्यं पुरेरितम्।**
**दोषधातुमलादीनामूष्मेत्यात्रेयशासनम्॥ ४९॥**

अन्नस्येति। तुरवधारणे। अनेकविधस्याहारस्याभ्यवहृतस्य पित्तमेव पक्ता। किम्भूतं पित्तम्? पाचकाख्यं पुरेरितं पूर्वं दोषभेदीयेऽध्याय उक्तम्। यथा 'पक्वामाशयमध्यगमित्यारभ्य यावत्पाचकं नाम तत्स्मृतमिति'। तदीदृशं पित्तमाहारं पाचयतीति धन्वन्तरिमतम्। एवं दोषादीनामूष्माऽग्निरित्यत्रिपुत्रस्य शासनमाज्ञा। दोषा वातादयः। धातवो रसादयः। मला मूत्रपुरीषस्वेदाः। आदिशब्देन दूषिकादयः। तेषां दोषादीनां सम्बन्धी य ऊष्मा स एवान्नस्य पक्ता नतु पित्तं पाचकाख्यमिति।

**तदधिष्ठानमन्नस्य ग्रहणाद् ग्रहणी मता।**
**सैव धन्वतन्तरिमते कला पित्तधराह्वया॥ ५०॥**
**आयुरारोग्यवीर्यौजोभूतधात्वग्निपुष्टये।**
**स्थिता पक्वाशयद्वारि भुक्तमार्गाऽर्गलेव सा॥ ५१॥***

तदिति। तस्याग्नेर्जाठरस्याधिष्ठानमाधारो यत्रासौ शारीरोऽग्निस्तिष्ठति साऽन्नस्य ग्रहणात्तत्संज्ञा ग्रहणीति मता। आमाशयस्थो विशिष्टो धमनीविशेष इत्यर्थः। सैव ग्रहणी धन्वन्तरिमते कला पित्तधरा नाम कथ्यते। यत एवं ग्रहण्यग्नेराधारभूता तथाऽन्नग्रहणात्तत्संज्ञाऽत आयुरादिपुष्टये सम्पद्यत इति वाक्यशेषः। भूतधात्वोरग्निना सम्बन्धः। आयुरादीनां द्वन्द्वः। आयुः शरीरेन्द्रियसत्वात्मसंयोगविशेषः। आरोग्यं धातुसाम्यम्। वीर्यं शक्तिः कर्मणि सामर्थ्यम्। ओज आहारस्य परं प्रसादजं सर्वधात्वाप्यायकं यद्वस्तुजातं तदुच्यते। पुष्टिशब्द एषां प्रत्येकं योज्यः। आयुःपुष्टये, आरोग्यपुष्टये, वीर्यपुष्टये, ओजःपुष्टये, पञ्चमहाभूताग्निपुष्टये, धात्वग्निपुष्टये चेति पिण्डार्थः। पक्वाशयस्य द्वास्तस्यां स्थिता सा हि ग्रहणी भुक्तस्य

---

* क्षेपकः॥ वामपार्श्वाश्रितं नाभेः किञ्चित्सूर्यस्य मण्डलम्।
**सार्धश्लोकः॥** तन्मध्ये मण्डलं सौम्यं तन्मध्येऽग्निर्व्यवस्थितः।
जरायुमात्रप्रच्छन्नः काचकोशस्थदीपवत्॥



सहसा पक्वाशयान्तःप्रवेशरोधिन्यर्गलेव । यथा द्वारि कपाटमार्गरोधेऽर्गला स्थिता तथा भुक्तं ह्यभ्यवहृतं कण्ठनाडीलुठितं कायस्य महानिम्नदेशं कोष्ठाख्यमवतीर्णं ग्रहणी गृहीत्वाऽवतिष्ठते । अनन्तरं जाठरेणाऽग्निना विपक्वं शनैः पक्वाशये मुञ्चति । अत एवोच्यते—'स्थिता पक्वाशयद्वारि भुक्तमार्गार्गलेव सेति' ।

पक्वादन्नादायुरादयः पुष्यन्ति नापक्वादित्याह ( ? )—( बलवत्या अबलायाश्च ग्रहण्याः कर्माऽऽह- )

**भुक्तमामाशये रुध्वा सा विपाच्य नयत्यधः ।**
**बलवत्यबला त्वन्नमाममेव विमुञ्चति ॥ ५२ ॥**

भुक्तमिति । भुक्तमभ्यवहृतमन्नमामाशये आमान्नस्थाने यत्राऽऽममन्नं तत्र सा ग्रहणी रुद्ध्वाऽवष्टभ्याधो नयति। किं कृत्वा ? विपाच्य विविधैः प्रकारैः पाचयित्वा। (कीदृशी सती ?) बलवतीति । बलवती भुक्तं विपाच्याधो नयति। अबला पुनः सती सा आममेवापक्वमेव विमुञ्चति । ननु जाठराग्निरन्नं ग्रहणीस्थं पचति न ग्रहणी, ततश्च कथमुक्तं सा विपाच्य नयत्यध इति ? अत्रोच्यते—अग्निग्रहण्योराधाराधेयभावेन स्थितत्वाद्युज्यत एवैतद्वक्तुम् । ग्रहणी ह्यग्नेराधारः । तथा च प्रागुक्तम्—'कला पित्तधराह्वयेति' । पित्तं च वह्निः । तथा चाधुनैव वक्ष्यति । 'पित्तं वह्नि-रित्यादि' । तदेवं वह्नयाधारा या कला साऽन्नग्रहणाद्ग्रहणीत्युते । ततश्चाधारतया ग्रहणीमाश्रित्याग्निः पाककरणसमर्थो भवति नाधारमन्तरेण केवल एव । तदेवमग्न्याधारस्य ग्रहण्याख्यस्य पाकनिर्वर्तनं प्रति कर्तृत्वं युक्तमेवेति । अतः सा विपाच्य नयत्यध इत्येतदुपपन्नमेव । अग्निग्रहण्योराधाराधेयभावतयाऽवस्थानात्परस्परबलाधानेनोपकार्योपकारकभावः सम्भाव्यत इत्याह ॥

**ग्रहण्या बलमग्निर्हि स चापि ग्रहणीबलः ।**
**दूषितेऽग्नावतो दुष्टा ग्रहणी रोगकारिणी ॥ ५३ ॥**

हि यस्मादर्थे । यस्माद् ग्रहण्या यद्बलं सामर्थ्यं तस्य हेतुरग्निः । अग्नितो ग्रहण्या बलमुत्पद्यते । स चाऽप्यग्निर्ग्रहणीबलः । ग्रहणी बलं यस्याग्नेः स एवम् । अपिशब्दान्न केवलमग्निर्ग्रहण्या बलं ग्रहण्यप्यग्नेर्बलम् । अतो दूषितेऽग्नौ दुष्टा ग्रहणी रोगकारिणी सम्पद्यते । एवं चार्थाद् ग्रहण्यामपि दुष्टायामग्निर्दुष्यति । दुष्टश्च सोऽपि रोगकारी सम्पद्यते । एवं या पित्तधरा कला साऽदुष्टा सत्यायुरादीनां पुष्टये भवतीत्युक्तम् । अन्नग्रहणाद् ग्रहण्या एवंरूपता । तथान्नं विपक्वमेव देहधात्वादिपोषणं नापक्वम् -

तस्य चाऽन्नपाकस्य हेतुरग्निरत आह—

**यदन्नं देहधात्वोजोबलवर्णादिपोषणम् ।**
**तत्राऽग्निर्हेतुराहारान्न ह्यपक्वाद्रसादयः ॥ ५४ ॥**

यदिति । यदन्नमाहारो देहधात्वादिपोषणं भवति तत्राग्निर्हेतुः । कुत इत्याह-

'नहीत्यादि'। हि यस्मादपक्वादाहाराद्रसरुधिरादयो न सम्भवन्त्यतो देहधात्वादिपोषणे सर्वत्राग्निः कारणम् । पाकक्रियानिर्वर्तनात् तदेवमन्वयव्यतिरेकाभ्यामवगम्यते । अन्नं देहधात्वादिहेतुरग्निप्रभावादेव । तस्मादग्निः पाककारणम् । पक्वमन्नं देहादिपोषणम् । इति परस्परकारणत्वमनयोः ।

न ह्यपक्वाद्रसादय इत्युक्तमतः पाकस्यैवेतिकर्तव्यतां निरूपयन्नाह—

**अन्नं कालेऽभ्यवहृतं कोष्ठं प्राणानिलाहृतम् ।**
**द्रवैर्विभिन्नसङ्घातं नीतं स्नेहेन मार्दवम् ॥ ५५ ॥**
**सन्धुक्षितः समानेन पचत्यामाशयस्थितम् ।**
**उदर्योऽग्निर्यथा बाह्यः स्थालीस्थं तोयतण्डुलम् ॥ ५६ ॥**

'अन्नमिति । काले प्रसृष्टे विण्मूत्र इत्यादिना ग्रन्थेन प्राङ्निरूपिते । अन्नमभ्यवहृतं कोष्ठं हृदयाद्यङ्गनिबन्धनस्थानं प्राणाख्येन वायुनाऽऽहृतमानीतम् । तथा द्रवैर्द्रवगुणोपलक्षितैस्तोयव्यञ्जनमद्यक्षीरादिभिर्विभिन्नसङ्घातमपनीतपिण्डितभावम् । तथा स्नेहेन घृतादिना मृदुत्वं प्रापितम् । तथा आमाशयस्थितमग्निः पचति । "नाभिस्तनान्तरं जन्तोरामाशय इति स्मृत" इति व्याख्यात आमाशयस्तन्त्रान्तरे । किम्भूतोऽग्निः ? उदर्यो जठरभवः । तथा समानाख्येन वायुना सन्धुक्षित उद्दीपितः । ष्ठीवनक्षवथूद्गारेत्यादिनैव प्राणानिलाहृतत्वे लब्धे पुनरुक्तं स्पष्टार्थम् । कालग्रहणस्योपलक्षणार्थत्वान्मात्रादिसहायेन जाठराग्निना समानोद्दीपितेन पक्वमन्नं देहधात्वादिपोषणम् । ननूदर्योऽग्निरदृश्यत्वान्न ज्ञायते कथं पचत्यतस्तदर्थं बाह्यं दृष्टान्तं निरूपयितुं ग्रन्थकृदाह–यथेत्यादि । यथा बाह्योऽग्निः स्थालीस्थं तोयतण्डुलं पचति । तोयं च तण्डुलाश्च तोयतण्डुलम् । 'द्वन्द्वैकवद्भावः' । तथैवाऽसावुदर्योऽग्निः सन्धुक्षितः समानेनाऽऽमाशयस्थितं चतुर्विधमन्नमशितपीतलीढखादितभेदभिन्नं प्राणानिलाहृतं पचति । ननु दोषभेदीयेऽध्याये पूर्वमुक्तम्—'प्राणोऽत्र मूर्धग इत्यारभ्य यावन्निश्वासान्नप्रवेशकृदिति' । अन्नस्य प्रवेशमाहरणं करोतीत्यन्नप्रवेशकृत् । प्राणानिलाहृतमित्यनेनाप्ययमर्थः प्रत्यपादि तत्किमेतत् ? अत्रोच्यते । अन्नप्रवेशकृदित्यनेनान्नप्रवेशकरणमात्रमुक्तं, नतु कोष्ठप्रापणमिति । प्राणस्य हि वायोर्मूर्धाश्रितस्योरो यावत्सञ्चार उक्तो न ततोऽधः । एवमस्य प्रवेशकरणं तावत्प्राप्तं यावदुरो नतु कोष्ठमिति । कोष्ठं प्राणानिलाहृतमित्यनेन तु कोष्ठप्रापणाख्योऽर्थविशेष उक्तः । अतो द्वयमप्येतद्वक्तुं युक्तम् । सन्धुक्षितः समानेनेति च न वाच्यम् । यतः प्रागुक्तं—'समानोऽग्निसमीपस्थः कोष्ठे चरति सर्वतः,' इति । एवं जाठरेणाग्निना सहचरः समानो वायुः सन्धुक्षयतीत्यर्थोऽवतिष्ठते । तस्मात्सन्धुक्षितः समानेनेत्यनेन

मौ. टि.—१ "शरीवयवाद् यद्" इति पाणिनिसूत्राद् यत्प्रत्यये 'उदर्य' शब्दनिष्पत्तिः ।





नार्थः। उच्यते। अर्थविशेषसम्प्रत्ययार्थमेतदुक्तम्। तथाहि—'समानोऽग्निसमीपस्थः कोष्ठे चरति सर्वतः। अन्नं गृह्णाति पचतीति' समानस्यैव पाकक्रियां प्रति वह्निसन्धुक्षणद्वारेण कर्तृत्वमुक्तं नाग्नेः। इह पुनः सन्धुक्षितः समानेनाग्निः पचति न समानो वायुरित्यपौनरुक्त्यमेव। यद्यपि चैकप्रत्ययजनितं न किञ्चिदस्ति तथाप्यन्नपाकक्रियां प्रत्यग्नेरेव कर्तृत्वं न समानादेः। समानादयो ह्युपकारका एव। अतो युक्तमिदमग्निः पचतीति।

तस्यान्नस्येदानीमग्निसमीपस्थस्य या अवस्थास्ताः कथयन् पुनस्तमेव पाकं निर्दिशति—

**आदौ षड्रसमप्यन्नं मधुरीभूतमीरयेत्।**
**फेनीभूतं कफं यातं विदाहादम्लतां ततः ॥ ५७ ॥**
**पित्तमामाशयात्कुर्याच्च्यवमानं च्युतं पुनः।**
**अग्निना शोषितं पक्वं पिण्डितं कटु मारुतम् ॥ ५८ ॥**

आदाविति। आदौ प्रथमं षड्रसमपि। अपिशब्दाद्द्वित्रादिरसमप्यन्नमभ्यवहृतमशितपीतादिकं तत्पच्यमानं मधुरीभूतं मधुरं, मधुररससम्पन्नं सत्कफमीरयेत्। किम्भूतं कफम्? फेनीभूतम्। पानीयादेरपि पच्यमानस्य प्रथमं फेनोत्पत्तिदर्शनादेवमुक्तम्। विदाहादम्लतां ततः पित्तमामाशयात्कुर्याच्च्यवमानम्। ततः प्रथमावस्थाया माधुर्यप्रायाया अनन्तरं मध्यमावस्थां प्राप्य जाठरेण वह्निना पक्वं षड्रसमप्यन्नमभ्यवहृतमम्लतां यातमनम्लमम्लं सम्पन्नं पित्तं विदध्यात्। कस्मात्पुनरम्लतां यातीत्याह—विदाहात्। विरुद्धो विषमो वा दाहो विदाहस्ततो विदाहाद्धेतोरम्लतां यातम्। किम्भूतमन्नम्? आमाशयाच्च्यवमानं नामाशयस्थितमेव। च्युतं पुनस्तद् आमाशयात्पक्वाशयं प्राप्तं जाठराग्निना पक्वं शोषितं तथा पिण्डितं तदानीं पिण्डसञ्जातं संहतं सम्पन्नं तथा कटुकं जातमन्नमन्यां तृतीयामवस्थां प्राप्य मारुतं कुर्यादिति योज्यम्। एतच्च सर्वं स्वभावसिद्धं स्वसंवेद्यप्रायं कार्यानुमेयं च। अत एव रसषट्केऽपि यद्द्रव्याणां विपाकत्रैविध्यं मधुराम्लकटुलक्षणमुक्तं तदनया रीत्योपपन्नतरं भवति। तथाहि। षड्रसस्याप्यन्नस्य जाठराग्निना पच्यमानस्य रसत्रयोपलक्षितेन मधुराम्लकटुकस्वभावेनावस्थात्रयेण परिणामो भवति। 'अथान्नमित्यत्र कस्माददो जग्धिर्ल्यप्तिकितीति जग्ध्यादेशो न' ब्रूमः। 'अन्न इति निपातनाद्बहुलं छन्दसीति बहुलवचनाद्वा जग्धादेशाभावः'। ननु विदाहादम्लतां गतमिति सामान्येनोक्तमयुक्तमिवाभाति। यतो द्राक्षेक्षुशर्करादीनामविदाहित्वं श्रूयते। अपि च—'विदाहादीनि च वर्जयेदिति' तन्त्रकारः पठति। अनया च रीत्या अविदाहिद्रव्याभाव एव स्यात्। तस्मात्सामान्येनाविदाहित्वमभ्युपगम्यमानमन्यार्थमेव मन्यामहे? उच्यते। विदाहस्य द्वैविध्याददोषः। इह हि द्विविधो विदाहः प्रथितो दोषस्थानकृतो द्रव्यकृतश्च। तत्र हि

पृष्ठवंशमिधाधृकसंज्ञं मर्म । तत्र विद्धे सति कुणित्वं बाहुपाण्यङ्गुलिकुब्जता नान्तस्तो सुकुन

हानिः । गस्वासु मर्माणि चतुश्चत्वारिंशद्दुक्त्वाऽन्तराधौ कथयति—

**शानं स्पस्थूलान्त्रबद्धः सद्योघ्नो विड्वातवमनो गुदः ।**

स्थूलान्त्रसूक्ष्मान्त्रभेदाद्द्विधांऽत्रम् तत्र । स्थूलान्त्रबद्धो गुदो नाम मर्मविशेषः । सच विड्वातौ वातवर्चसी वमत्युद्गिरतीति विड्वातवमनः—"बाहुलकात्कर्तरि ल्युट्" । स गुदः सद्यस्तत्क्षणादेव हन्ति । सद्योघ्न इति "अमनुष्यकर्तृके चेति ठक्" । "गुदशब्दस्याऽत्र पुंस्त्वं चिन्त्यं न चार्धर्चादिष्वयमस्ति" ।

अधुना बस्त्याख्यमाह—

**मूत्राशयो धनुर्वक्रो बस्तिरल्पास्रमांसगः ॥ १० ॥**
**एकाधोवदनो मध्ये कट्याः सद्यो निहन्त्यसून् ।**
**ऋतेऽश्मरीव्रणाद्विद्धस्तत्राप्युभयतश्च सः ॥ ११ ॥**
**मूत्रस्राव्येकतो भिन्नो व्रणो रोहेच्च यत्नतः ।**
**देहामपक्वस्थानानां मध्ये सर्वसिराश्रयः ॥ १२ ॥**
**नाभिः सोऽपि हि सद्योघ्नो,**

मूत्राशय इति । मूत्रस्याशय आधारो मूत्राशयो यत्र मूत्रं तिष्ठति स धनुर्वक्रश्चापवत् कुटिलः । तेनास्य संस्थानमुक्तम् । स च बस्तिर्नाम मर्मविशेषः । अस्रं च मांसं चाऽस्रमांसे अल्पे अस्रमांसे गच्छति । "अन्येभ्योऽपि दृश्यत इति डः" । तत्रस्थो न बहुरक्तमांसप्रदेशस्थ इत्यर्थः । तथैकमधोवदनं यस्यासावेकाधोवदनः । कट्यामध्य इति स्थाननिर्देशः । कट्या मध्यप्रदेशेऽसाववतिष्ठते । ऋतेऽश्मरीव्रणात्तं व्रणं वर्जयित्वा । तत्राप्यश्मरीव्रण उभयत उभयपार्श्वतश्च स विद्धस्तदाऽसौ सद्योसून्निहन्ति । तस्मिन् बस्तावेकपार्श्वतो भिन्ने विद्धे सति मूत्रस्रावी व्रणः स्यात् । स च यत्नत आदरेणोपक्रान्तो रोहति नान्यथा । देहेत्यादि । आमं च पक्वं चाऽमपक्वे । स्थानं च स्थानं च स्थाने । आमपक्वयोः स्थाने आमपक्वस्थाने । देयश्चामपक्वस्थाने च देहामपक्वस्थानानि तेषां मध्ये । तत्रैकत्वाद्देहस्य देहमध्यप्रदेशे तयोभयोरामपक्वयोर्मध्येऽन्तराले नाभिर्नाम मर्म सर्वासां सिराणां सकलशरीरगानामाश्रय आधारः । सोऽपि हि सद्योघ्नः । अपिः समुच्चये । हिर्यस्मादर्थे । न केवलं गुदबस्ती सद्योघ्नौ यावन्नाभिरपि विद्धः सद्योघ्नः । "नाभिशब्दस्य पुंस्त्वं चिन्त्यम्" ।

**द्वारमामाशयस्य च ।**
**सत्वादिधाम हृदयं स्तनोरःकोष्ठमध्यगम् ॥ १३ ॥**

द्वारमिति । हृदयं नाम यन्मर्म तदपि सद्योघ्नम् । तच्चामाशयस्य द्वारं मुखम् । तेन हि द्वारेणान्नपानमामाशये प्रविशति । तच्च सत्वादानीं सत्वरजस्तमसां तथा





विज्ञानस्येन्द्रियाणां चार्थपञ्चकस्य तथाऽऽत्मनश्चेतसो धाम स्थानम् उपरिष्टाद् कोष्ठमध्यगम्। स्तनौ चोरश्च कोष्ठश्च स्तनोरःकोष्ठं तस्य मध्यं तत्र बध्नाति। कोष्ठवक्षसो स्तनयोश्च मध्ये स्थितमित्यर्थः। ण व करोति।

**स्तनरोहितमूलाख्ये द्व्यङ्गुले स्तनयोर्वदेत्।**
**ऊर्ध्वाधोऽस्रकफापूर्णकोष्ठो नश्येत्तयोः क्रमात्॥ १४॥**

स्तनरोहितेति। स्तनरोहितं च मूलं च प्रकृतत्वात्स्तनस्यैव ते स्तनरोहितस्तनमूले आख्ये संज्ञे ययोस्ते स्तनरोहितमूलाख्ये द्वे मर्मणी वदेत्। क्व प्रदेशे ते? स्तनयोः। क्रमादिति वक्ष्यमाणमिहापि सम्बध्यते। तेन स्तनयोरूर्ध्वं द्व्यङ्गुले स्तनरोहिते। स्तनयोरधो द्व्यङ्गुले स्तनमूले। तयोः स्तनरोहितस्तनमूलाख्ययोर्मर्मणोर्विद्धयोः पुरुषोऽस्रकफापूर्णकोष्ठः क्रमाद्यथाक्रमं नश्येत्। तेन स्तनरोहिते विद्धे सत्यसृजा पूर्णकोष्ठो नरो नश्येत्। स्तनमूले विद्धे कफेन पूर्णकोष्ठो नश्येत्।

**अपस्तम्भावुरः पार्श्वे नाड्यावनिलवाहिनी।**
**रक्तेन पूर्णकोष्ठोऽत्र श्वासात्कासाच्च नश्यति॥ १५॥**

अपस्तम्भाविति। उरसः पार्श्वे द्वे नाड्यावपस्तम्भाख्ये मर्मणी अनिलवाहिनी वातवहे। अत्र मर्मद्वये विद्धे रक्तेन पूर्णकोष्ठः श्वासकासाभ्यां विपद्यते।

**पृष्ठवंशोरसोर्मध्ये तयोरेव च पार्श्वयोः।**
**अधोंऽसकूटयोर्विद्यादपालापाख्यमर्मणी॥ १६॥**
**तयोः कोष्ठेऽसृजा पूर्णे नश्येद्यातेन पूयताम्।**

पृष्ठेति। पृष्ठवंशस्य तथोरसोऽनयोर्मध्येऽन्तराले तयोरेव च पृष्ठवंशोरसोर्ये पार्श्वे तयोरुपरिभागयोरंसकूटयोरधोऽपालापाख्ये द्वे मर्मणी विद्यात्। तयोर्विद्धयो रक्तेन कोष्ठे पूर्णे तेन पूयतां यातेन गतेन लोहितेन नश्येत्। यावद्रक्तं पूयतां न यातं तावज्जीवति न तु रक्तकोष्ठपूरणमात्रादेव म्रियत इति भावः।

इदानीं पृष्ठे वक्ति—

**पार्श्वयोः पृष्ठवंशस्य श्रोणीकर्णौ प्रतिष्ठिते॥ १७॥**
**वंशाश्रिते स्फिजोरूर्ध्वं कटीकतरुणे स्मृते।**
**तत्र रक्तक्षयात्पाण्डुर्हीनरूपो विनश्यति॥ १८॥**

पार्श्वयोरिति। पृष्ठवंशस्य पार्श्वयोरुभयतः श्रोणीकर्णौ प्रतिष्ठिते। वंशाश्रिते वंशप्रतिबद्धे स्फिजोरूर्ध्वमुपरिष्टाद्द्वे अस्थिनी कटीकतरुणे एव संज्ञे द्वे मर्मणी स्मृते उक्ते। तत्र तस्मिन्मर्मद्वये विद्धे रक्तक्षयात्पाण्डुर्हीनरूपो विगतकान्तिः सन्नरो विनश्यति।

**पृष्ठवंशं ह्युभयतो यौ सन्धी कटिपार्श्वयोः।**
**जघनस्य बहिर्भागे मर्मणी तौ कुकुन्दरौ॥ १९॥**
**चेष्टाहानिरधःकाये स्पर्शाज्ञानं च तद्व्यधात्।**



पृष्ठवंशमिति । पृष्ठवंशस्योभयोः कटिपार्श्वयोर्यौ सन्धी जघनस्य बहिर्भागे नान्तस्तौ कुकुन्दरौ निम्नाकारौ सन्धिमर्मणी । तद्व्यधात्तयोर्व्यधादधःशरीरे चेष्टाहानिः । गमनकुञ्चनप्रसारणादावधःकायोऽशक्तः सम्पद्यत इत्यर्थः । तथा स्पर्शज्ञानं स्पर्शासंवित्तिर्भवति । पृष्ठवंशमुभयत इति 'उभसर्वतसोरित्यादिना' द्वितीया ।

**पार्श्वान्तरनिबद्धौ यावुपरि श्रोणिकर्णयोः ॥ २० ॥**
**आशयच्छादनौ तौ तु नितम्बौ तरुणास्थिगौ ।**
**अधःशरीरे शोफोऽत्र दौर्बल्यं मरणं ततः ॥ २१ ॥**

पार्श्वेति । पार्श्वान्तरे पार्श्वमध्ये निबद्धौ प्रतिबद्धौ लग्नौ पार्श्वान्तरनिबद्धौ यौ तथा श्रोणिकर्णयोरुपर्युपरिष्टान्मूत्रादीनां ये आशया आधारा बस्त्यादयस्तेषां छादनौ नितम्बौ नितम्बसंज्ञौ मर्मविशेषौ । तौ च तरुणास्थिनौ तरुणसंज्ञेऽस्थ्नि स्थितावित्यर्थः । अत्राऽस्मिन्मर्मद्वये विद्धे सत्यधःकाये शोफो भवति । तथा दौर्बल्यं प्रकृतत्वादधःशरीर एव । दौर्बल्यमल्पबलत्वं स्वव्यापाराऽक्षमत्वम् । ततो दौर्बल्यादनन्तरं मरणं भवति ।

**पार्श्वान्तरनिबद्धौ च मध्ये जघनपार्श्वयोः ।**
**तिर्यगूर्ध्वं च निर्दिष्टौ पार्श्वसन्धी तयोर्व्यधात् ॥ २२ ॥**
**रक्तपूरितकोष्ठस्य शरीरान्तरसम्भवः ।**

पार्श्वेति । पार्श्वयोरन्तरं मध्यं तत्र निबद्धौ संश्लिष्टौ सन्धी मर्मविशेषौ पार्श्वसन्धी इति निर्दिष्टौ । ततश्चैकस्मिन् पार्श्वान्तर एकः सन्धिर्द्वितीयस्मिन् पार्श्वान्तरे द्वितीयः सन्धिः । क स्थितौ कथम् ? जघनस्य पार्श्वे जघनपार्श्वे । जघनपार्श्वयोर्मध्ये तिर्यगूर्ध्वं च । एवमेकस्मिन् जघनपार्श्वमध्य एकः सन्धिर्द्वितीयस्मिन् द्वितीयः स्थित इति । तयोर्व्यधात्पुंसो रक्तपूरितकोष्ठस्य शरीरान्तरसम्भवोऽपरशरीरोत्पत्तिर्मरणमित्यर्थः ।

**स्तनमूलार्जवे भागे पृष्ठवंशाश्रये सिरे ॥ २३ ॥**
**बृहत्यौ तत्र विद्धस्य मरणं रक्तसंक्षयात् ।**

स्तनेति । स्तनयोर्मूलं स्तनमूलं तस्यार्जवे भागे पृष्ठवंशाश्रये सिरे पृष्ठवंशस्योभयपार्श्वप्रतिबद्धे सिरे बृहत्यावेतत्संज्ञे मर्मणी । तत्र मर्मद्वये विद्धस्य मरणं भवति रक्तसंक्षयान्नान्यथा ।

**बाहुमूलाभिसम्बद्धे पृष्ठवंशस्य पार्श्वयोः ॥ २४ ॥**
**अंसयोः फलके बाहुस्वापशोषौ तयोर्व्यधात् ।**

बाहुमूलेति । बाह्वोर्मूले यत्र बाहू प्रतिष्ठितौ । मूले हि प्रतिष्ठा वृक्षमूलवत् । पृष्ठवंशस्य पार्श्वद्वये बाहुमूलयोराभिमुख्येन सम्बन्धे संश्लिष्टे । के ते ? अंसयोः फलके । असमासनिर्देशश्छन्दोऽनुरोधात् । फलकस्य च नपुंसकत्वं " लोकाश्रयत्वाल्लिङ्गस्येति " । अंसफलकाख्ये द्वे मर्मणी । तयोर्व्यधाद्बाहुस्वापशोषौ भवतः ।

स्वाप इव स्वापो यथा सुप्तस्य निश्चेतनमङ्गं भवति तथा बाहू अंसफलके विद्धे भवतः।

**ग्रीवामुभयतः स्नाव्नी ग्रीवाबाहुशिरोन्तरे ॥ २५ ॥**
**स्कन्धांसपीठसम्बन्धावंसौ बाहुक्रियाहरौ।**

ग्रीवामिति। ग्रीवाया उभयोः पार्श्वयोः स्नावी द्वे अंसावुच्येते। क्व स्थितौ ? ग्रीवाबाहुशिरोऽन्तरे। ग्रीवायाः तथा बाह्वोः शिरसश्च मध्ये तेषामन्तराले स्थितौ। प्रयोजनमाह। स्कन्धेत्यादि। अंसयोः पीठे इव पीठे प्रतिष्ठाने यत्रांसौ तिष्ठतः। स्कन्धौ चांसपीठे च तेषां सम्बन्धः योजनं ययोस्तावेवांसौ विद्धौ बाह्वोः क्रिया आकुञ्चनप्रसारणादिका तां हरतस्तौ बाहुक्रियाहरौ।

**कण्ठनाडीमुभयतः सिरा हनुसमाश्रिताः ॥ २६ ॥**
**चतस्रस्तासु नीले द्वे मन्ये द्वे मर्मणी स्मृते।**
**स्वरप्रणाशवैकृत्यं रसाज्ञानं च तद्व्यधे ॥ २७ ॥**

कण्ठेति। कण्ठनाड्या उभयपार्श्वयोः सिरा याश्चतस्रो हन्वोः समाश्रितास्तासु मध्ये द्वे सिरे नीले नाम द्वे मर्मणी मध्ये नाम द्वे मर्मणी स्मृते। तन्त्रकृद्भिरिति शेषः। तासां व्यधस्तद्व्यधस्तस्मिन् स्वरप्रणाशादयो जायन्ते। स्वरस्य प्रणाशः स्वरप्राणशः स्वरहानिः। अथवा वैकृत्यम्। तच्च प्रकृतत्वात्स्वरस्यैव। स्वरभावान्यथात्वमित्यर्थः। रसाज्ञानं रसानवबोधः।

**कण्ठनाडीमुभयतो जिह्वानासागताः सिराः।**
**पृथक् चतस्रस्ताः सद्यो घ्नन्त्यसून्मातृकाह्वयाः ॥ २८ ॥**

कण्ठेति। कण्ठनाड्या उभयपार्श्वयोः सिराः जिह्वागतास्तथा नासागताः पृथक् प्रत्येकमेकस्मिन् पार्श्वे चतस्रः द्वितीये पार्श्वे चतस्रस्ता मातृकाह्वया मातृकासंज्ञा विद्धाः सद्योऽसून् घ्नन्ति। एतानि मातृकाख्यानि सिरामर्माणि।

**कृकाटिके शिरोग्रीवासन्धी तत्र चलं शिरः।**

शिरश्च ग्रीवा च तयोः सन्धाने यौ सन्धी पार्श्वद्वये कृकाटिकाख्ये ते द्वे मर्मणी। तत्र तस्मिन्मर्मद्वये विद्धे चलं सकम्पं शिरो भवति।

**अधस्तात्कर्णयोर्निम्ने विधुरे श्रुतिहारिणी ॥ २९ ॥**

अधस्तात्कर्णयोः कर्णपृष्ठयोरधो निम्ने नोन्नते विधुराख्ये द्वे मर्मणी। ते च विद्धे सती श्रुतिं शब्दश्रवणं हरतः श्रुतिहारिणी।

**फणावुभयतो घ्राणमार्गं श्रोत्रपथानुगौ।**
**अन्तर्गलस्थितौ वेधाद्गन्धविज्ञानहारिणौ ॥ ३० ॥**

फणाविति। फणौ नाम मर्मविशेषौ घ्राणमार्गस्योभयोः श्रोत्रपथानुगौ श्रोत्रमार्गप्राप्तौ। अन्तर्गलस्थितौ गलाभ्यन्तरे स्थितौ। फणाविव संस्थानं रूपमनयोः फणाविति नाम। तौ वेधाद्गन्धविज्ञानं गन्धोपलब्धिस्तद्धरतस्तौ गन्ध-

विज्ञानहारिणौ ।

नेत्रयोर्बाह्यतोऽपाङ्गौ भ्रुवोः पुच्छान्तयोरधः ।
तथोपरि भ्रुवोर्निम्नावावर्तावान्ध्यमेषु तु ॥ ३१ ॥

नेत्रयोरिति । अपाङ्गौ नाम मर्मविशेषौ प्रसिद्धावेव । तथा तेनैवापाङ्गोद्दिष्टेन न्यायेन भ्रुवोः पुच्छान्तयोरुपरि निम्नावावर्तसंज्ञौ । एषु त्वपाङ्गावर्ताख्येषु चतुर्षु विद्धस्य नरस्यान्ध्यं भवति ।

अनुकर्णं ललाटान्ते शङ्खौ सद्योविनाशनौ ।

अत्राऽपि भ्रुवोः पुच्छान्तयोरुपरि ललाटावसानेऽनुकर्णं कर्णसमीपे शङ्खौ मर्मविशेषौ । तौ विद्धौ पुरुषस्य सद्योविनाशनौ भवतः ।

केशान्ते शङ्खयोरूर्ध्वमुत्क्षेपौ स्थपनी पुनः ॥ ३२ ॥
भ्रुवोर्मध्ये त्रयेऽप्यत्र शल्ये जीवेदनुद्धृते ।
स्वयं वा पतिते पाकात्सद्यो नश्यति तूद्धृते ॥ ३३ ॥

केशान्त इति । केशावसाने शङ्खयोरूर्ध्वमुत्क्षेपौ मर्मणी । स्थपनी पुनर्मर्म भ्रुवोर्मध्ये । त्रयेऽप्यत्राऽस्मिन्मर्मत्रये द्वावुत्क्षेपावेका स्थपनी । एवम्भूते विद्धे पुरुषोऽनुद्धृते शल्ये जीवेत् । कालान्तरेण पाकात् पाकेन हेतुना स्वयं वा पतिते शल्ये सति न तूद्धरणहेतुना जीवेत् पुरुषः । सद्य इत्यादि । उद्धृते तु शल्ये सद्य एव नरो नश्यति वायुकोपादिति भावः ।

जिह्वाक्षिनासिकाश्रोत्रखचतुष्टयसङ्गमे ।
तालुन्यास्यानि चत्वारि स्रोतसां तेषु मर्मसु ॥ ३४ ॥
विद्धः शृङ्गाटकाख्येषु सद्यस्त्यजति जीवितम् ।

जिह्वेति । जिह्वा चाक्षिणी च नासिका च श्रोत्रे च तदेवं तत्सम्बन्धीनि खानि तेषां चतुष्टयं चत्वारि स्रोतांसि तेषां सङ्गमः सन्निपातस्तस्मिंस्तालुनि यत्र जिह्वादीनां तर्पणानि स्रोतांसि सन्निपत्यावतिष्ठन्ति जिह्वादिस्रोतसां चत्वार्यास्यानि शृङ्गाटकाख्यानि तेषु मर्मसु विद्धः पुरुषः सद्यस्त्यजति जीवितम् । विद्धमात्र एव प्राणैर्वियुज्यते ।

कपाले सन्धयः पञ्च सीमन्तास्तिर्यगूर्ध्वगाः ॥ ३५ ॥
भ्रमोन्मादमनोनाशैस्तेषु विद्धेषु नश्यति ।

कपाल इति । शिरःसम्बन्धिनः पञ्च सन्धयः पञ्चानां कपालखण्डानां संश्लेषा ये शिरस्यवतिष्ठन्ते तिर्यगूर्ध्वगास्त एव सीमन्ताख्या मर्मविशेषास्तेषु सीमन्ताख्येषु विद्धेषु भ्रमेण तथोन्मादेन तथा मनोनाशेन विस्मृत्या च नश्यति ।

आन्तरो मस्तकस्योर्ध्वं सिरासन्धिसमागमः ॥ ३६ ॥
रोमावर्तोऽधिपो नाम मर्म सद्यो हरत्यसून् ।



आन्तर इति। मस्तकस्याभ्यन्तरतो यः स्थितस्तथोर्ध्वं प्रकृतत्वान्मस्तकस्यैवोपरि सिरासन्धिसमागमः सिरासन्धीनां सन्निपातो रोमावर्त्तलक्षणः सोऽधिपो नाम मर्मविशेषः। मर्मणामधिपो यथार्थनामा। तदायत्तानि हि सर्वाणि मर्माणीत्यर्थः। सोऽधिपो विद्धो नरस्य सद्योऽसून् हरति। पुरुषं मारयतीत्यर्थः।

इति सप्तोत्तरस्य मर्मशतस्य लक्षणान्युक्त्वा सामान्येन यन्मर्मलक्षणं तदाख्यातुमाह—

**विषमं स्पन्दनं यत्र पीडिते रुक् च मर्म तत्॥ ३७॥**

यत्र यस्मिन् देहदेशे विषमं स्पन्दनं स्फुरणं तन्मर्म। यत्र च देहदेशे पीडिते सति रुक् च विषमा भवति तच्च मर्म। अत्राऽपि विषममिति सम्बध्यते। विषमं च विषमा च विषमम्। 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' नपुंसकशेषः'। तदेवं मर्मलक्षणं द्विधा मन्तव्यम्। कस्यचिन्मर्मणः सिराधमन्यादिकस्य विषमं स्पन्दनं प्रायो लक्षणम्। मांसास्थिजातीयस्य मर्मणः पीडनात्प्रायेः पीडोत्पत्तिर्लक्षणमिति। सङ्ग्रहे च मर्मविद्धस्य लक्षणमुक्तम्। यथा—'देहप्रसुप्तिर्गुरुता सम्मोहः शीतगात्रता। स्वेदो मूर्छा वमिः श्वासो मर्मविद्धस्य लक्षणमिति'। मरणकारित्वान्मर्म। मरणसदृशदुःखदायित्वाद्वा।

इदानीं मर्मणां मांसादिप्रभेदं लक्षणं षट्प्रकारमाह—

**मांसास्थिस्नायुधमनीसिरासन्धिसमागमः।**
**स्यान्मर्मेति च तेनाऽत्र सुतरां जीवितं स्थितम्॥ ३८॥**

मांसेति। मांसादीनां सन्ध्यन्तानां सजात्यपेक्षो यः समागमः सन्निपातः स मर्माख्यो मर्मेति तस्यैव नाम। तदेवम्—'मांसपेशीसमागमो मांसमर्म। अस्थ्नां समागमोऽस्थिमर्म। स्नायूनां समागमः स्नायुमर्म। धमनीनां समागमो धमनीमर्म। सिराणां समागमः सिरामर्म। सन्धीनां समागमः सन्धिमर्मेति'। एष मांसादीनां यः समागमः स एव मर्मेत्युच्यते तेन हेतुनाऽत्र सुतरां जीवितं स्थितं प्राणा व्यवस्थिताः।

ननु यदि मांसादीनां समागमो मर्मेत्यभिधीयते तदानीमनेकसङ्ख्याकानि मर्माणि शरीरे सम्भाव्येरन्। मांसपेश्यादिभावानामनेकसङ्ख्याश्रयत्वात्। तथा च। मांसपेशीशतानि पञ्च पुंसामुक्तानि स्त्रीणां तु विंशत्यधिकानि। एवमस्थ्यादीन्यनेकान्युक्तानि। ततश्च मर्मणामसङ्ख्येयत्वं प्राप्नोति। एवं च सप्तोत्तरं मर्मशतमिति विरुध्यत इत्याह—

**बाहुल्येन तु निर्देशः षोढैवं मर्मकल्पना।**
**प्राणायतनसामान्यादैक्यं वा मर्मणां मतम्॥ ३९॥**

सप्तोत्तरमेव मर्मणां शतमित्यनेकान्तिकम्। किं तर्हि पूर्वोक्तेन न्यायेन बहूनि मर्माणि? सप्तोत्तरं मर्मशतमित्ययं तु यो निर्देशः स बाहुल्येन भूयसा येषां मर्मणां

मर्मत्वेन प्रसिद्धिस्तद्विषय एव। एवमनेन प्रकारेण मांसास्थ्यादीनां समागमो मर्मेति मर्मणां षोढा षड्विधा कल्पना भवति । कल्पनाशब्देनैतत्प्रतिपादयति । तदेवं मनुष्यस्य प्रसिद्धितो जीवितधामत्वेन मर्मणां कल्पना निरूपणा । प्राणेत्यादि । अथवा मर्मणां षोढा कल्पना किं तर्हि प्राणायतनसामान्याज्जीवितस्याधिष्ठानमित्येवंलक्षणादैक्यमेकत्वं मर्मणां मतं न षट्त्वम् । एवमेकैव मर्मकल्पना । एवं संक्षेपविस्तारकौशलं मर्मसु दर्शितम् ।

मांसादीनां सन्ध्यन्तानां यथास्वं प्रतिनियतानि मर्माणि सङ्ख्ययाऽभिधातुमाह–

**मांसजानि दशेन्द्राख्यतलहृत्स्तनरोहिताः ।**

मांसेति । जङ्घयोरिन्द्राख्ये द्वे मर्मणी । बाह्वोर्द्वे । एवं तलहृदाख्यानि चत्वारि । तानि पादयोर्द्वे हस्तयोर्द्वे इति । स्तनरोहिते द्वे प्रत्येकं एकैकम् । एवं दश मांसजानि ।

**शङ्खौ कटीकतरुणे नितम्बावंसयोः फले ॥ ४० ॥**
**अस्थ्न्यष्टौ,**

अस्थ्न्यष्टौ मर्माणि । शङ्खौ द्वे मर्मणी । कटीकतरुणे द्वे । नितम्बौ द्वे । अंसयोः फलके द्वे । इत्येवमष्टौ मर्माणि ।

**स्नावमर्माणि त्रयोविंशतिराणयः ।**
**कूर्चकूर्चशिरोऽपाङ्गक्षिप्रोत्क्षेपांसबस्तयः ॥ ४१ ॥**

स्नावेति । स्नावममर्माणि त्रयोविंशतिः । कथम् ? आणयश्चत्वारि । प्रत्येकमूरुमध्ये एकैकम् । बाह्वोः प्रत्येकमेकैकम् । एवं चत्वार्याणयः । कूर्चाख्यानि चत्वारि । हस्तयोर्द्वे पादयोर्द्वे । कूर्चशिरः संज्ञानि चत्वारि । पादयोर्द्वे हस्तयोर्द्वे इति चत्वारि । अपाङ्गाख्ये द्वे नेत्रयोर्बाह्यत इत्यादिना निर्दिष्टे । क्षिप्राख्यानि चत्वारि । अङ्गुष्ठाङ्गुलिमध्यस्थं क्षिप्रमिति । तत्र पादद्वये द्विविधं हस्तद्वये च । उत्क्षेपौ द्वौ । केशान्ते शङ्खयोरूर्ध्वमुत्क्षेपाविति । अंसाख्ये द्वे स्कन्धांसपीठसम्बन्धावंसाविति । बस्तिरेको मूत्राशय इत्यादिनोक्तः । एवं स्नाव मर्माणि त्रयोविंशतिः ।

**गुदोपस्तम्भविधुरशृङ्गाटानि नवादिशेत् ।**
**मर्माणि धमनीस्थानि**

गुद इति । गुदः स्थूलान्त्रबद्ध एकः । अपस्तम्भाख्ये द्वे । अपस्तम्भावुरःपार्श्वे नाड्यावनिलवाहिनी इति । विधुराख्ये द्वे अधस्तात्कर्णयोर्निम्ने विधुरे इति । शृङ्गाटकाख्यानि चत्वारि जिह्वाक्षिनासिकेत्यादिनोक्तानि । एवं धमनीस्थानि धमन्याश्रितानि नव मर्माणि ।

**सप्तत्रिंशत्सिराश्रयाः ॥ ४२ ॥**
**बृहत्यौ मातृका नीले मन्ये कक्षाधरौ फणौ ।**
**विटपे हृदये नाभिः पार्श्वसन्धी स्तनाधरे ॥ ४३ ॥**



**अपालापौ स्थपन्यूर्व्यश्चतस्रो लोहितानि च।**

सप्तेति । सिराश्रया मर्मविशेषाः सप्तत्रिंशत् । कथम् ? इत्याह । बृहत्यौ द्वे स्तनमूलार्जव भाग इत्यादिनोक्ते । मातृकाख्यानि कण्ठनाडीमुभयतो जिह्वानासागता इत्यादिनोक्तान्यष्टौ । नीलाख्ये द्वे सिरे । मन्याख्ये द्वे । तानि कण्ठनाडीमुभयतः सिराहनुसमाश्रितानि चतस्र इत्यादिनोक्तानि । कक्षाधरौ द्वौ । यथोक्तम् । कक्षाक्षमध्ये कक्षाधृगित्यादि । फणौ द्वौ फणावुभयत इत्यादिना कृतलक्षणौ । विटपे द्वे । मुष्कवंक्षणयोर्मध्ये एकम् । द्वितीयेऽप्येवं । हृदयमेकम् । तस्य लक्षणम्—'द्वारमामाशयस्य चेत्यादि' । नाभिरेक एव । तल्लक्षणं—'देहामपक्वेत्यादि' । पार्श्वसन्धी द्वौ पार्श्वान्तरनिबद्धौ चेत्यादिनोक्तौ । स्तनाधरे स्तनयोरधोऽपालापौ द्वाविव पृष्ठवंशोरसोरित्यादिनोक्तौ । स्थपनी एकैव । तल्लक्षणं–'भ्रुवोर्मध्य' इति । ऊर्व्यश्चतस्रः । ऊर्वोर्द्वयोर्द्वे बाह्वोश्च । 'ऊर्व्यूरुमध्य' इति तस्या लक्षणम् । इति सक्थ्नोस्तथा बाह्वोरिति चातिदेशः । लोहितानि लोहिताक्षनामानि चत्वारि । ऊरुमूले लोहिताख्यम् । 'सक्थिवद्बाह्वोरिति' तल्लक्षणम् ।

सम्प्रति सन्धिमर्माण्याह—

**सन्धौ विंशतिरावर्तौ मणिबन्धौ कुकुन्दरौ ॥ ४४ ॥**
**सीमन्ताः कूर्परौ गुल्फौ कृकाट्यौ जानुनी पतिः ।**

सन्धाविति । सन्धौ विंशतिर्मर्माणि । आवर्ताख्ये द्वे तयोर्लक्षणं तथोपरि भ्रुवोर्निम्नावावर्ताविति । मणिबन्धौ द्वौ । तल्लक्षणं–'मणिबन्धोऽत्र गुल्फवदिति'। कुकुन्दरौ द्वौ । तल्लक्षणं—'जघनस्य बहिर्भागे मर्मणी तौ कुकुन्दराविति'। सीमन्ताख्यानि पञ्च । तल्लक्षणं—'कपालसन्धयः पञ्च सीमन्ता' इति। कूर्परौ द्वौ । तल्लक्षणं–'कूर्परं जानुवदिति' । कूर्परशब्द उभयलिङ्गः । गुल्फौ द्वे मर्मणी । तयोर्लक्षणं–'जङ्घाचरणयोः सन्धौ गुल्फ' इति । कृकाट्यौ द्वे । तल्लक्षणं—'कृकाटिके शिरोग्रीवासन्धी' इति । जानुनि द्वे । तयोर्लक्षणं—'जङ्घोर्वोः सङ्गमे जान्विति' । पतिरधिपतिर्मर्मणां तच्चैकम् । तल्लक्षणमान्तरो मस्तकस्योर्ध्वमित्यादिनोक्तम् । एवं सप्तोत्तरं मर्मशतं मांसादिपरिकल्पनया कल्पितम् ।

**मांसमर्म गुदोऽन्येषां स्नाव्नी कक्षाधरौ तथा ॥ ४५ ॥**
**विटपो विधुराख्ये च शृङ्गाटानि सिरासु तु ।**
**अपतम्भावपाङ्गौ च धमनीस्थं न तैः स्मृतम् ॥ ४६ ॥**

मांसेति । अन्येषामाचार्याणां मतेन गुदो मांसमर्म न धमनीमर्म । स्नाव्नीत्यादि । तेषामेव मतेन कक्षाधरौ स्नावाश्रितौ न तु सिराश्रयौ । विटपौ विधुराख्ये च स्नावाश्रितौ । पूर्वमतेन तु विटपौ सिराश्रितौ । विधुरे च धमन्याश्रिते । शृङ्गाटकानि चत्वार्यपि सिरास्वेव । तुरवधारणे न तु धमनीस्थानि ।

अपस्तम्भौ तथाऽपाङ्गौ च । एतद्धमन्नीस्थमन्यैराचार्यैर्न स्मृतमपि तु स्नावाश्रितमभिहितम् ।

इदानीं मांसादिजानानां मर्मणां व्यधलक्षणमाह—

**विद्धेऽजस्रमसृक्स्रावो मांसधावनवत्तनुः ।**
**पाण्डुत्वमिन्द्रियाऽज्ञानं मरणं चाशु मांसजे ॥ ४७ ॥**

विद्ध इति । मांसजे मर्मणि विद्धे सत्यनवरतमसृक्स्रावो भवति । मांसधावनोदकेन तुल्यस्तस्था तनुरच्छो भवति न कलुषः । पाण्डुत्वं पीताभता शरीरस्य । इन्द्रियैश्चक्षुरादिभिश्च विषयाऽज्ञानमनवबोधः । मरणं चाऽऽशु शीघ्रं भवति । तदेवमिन्द्रबस्त्यादिजमांसमर्मव्यधे निरन्तरस्रावादिसर्वलिङ्गदर्शनानुमानेन मरणमनुमीयमानं बुद्ध्वा वैद्यः प्रत्याख्याय चिकित्सां प्रयोजयेत् । नियतायुषां क्वचिन्मरणस्य व्यभिचारादिति ।

**मज्जान्वितोऽच्छो विच्छिन्नस्रावो रुक् चास्थिमर्मणि ।**

अस्थिमर्मणि शङ्खादिके विद्धे मज्जान्वितः स्रावस्तथाऽच्छो न घनो विच्छिन्नो न मांसमर्मव्यध इव निरन्तरो भवति । रुक्चेत्यनेनात्यन्तं पीडा भवतीति प्रतिपादयति । रुङ्मात्रस्य सर्वमर्मस्वपि सद्भावात् ।

**आयामाऽऽक्षेपकस्तम्भाः स्नावजेऽभ्यधिकं रुजा ॥ ४८ ॥**
**यानस्थानासनाशक्तिर्वैकल्यमथवान्तकः ।**

स्नावजे ऊर्वादिके मर्मणि विद्धे आयामादयो भवन्ति । आक्षेपकः स्तम्भो यथास्वमङ्गानामतिरुजा च । तथा यानस्थानासनाशक्तिः यातुं स्थातुमासितुं चाऽसामर्थ्यम् । वैकल्यं चाङ्गानाम् । अथवाऽन्तको मरणं भवति ।

**रक्तं सशब्दफेनोष्णं धमनीस्थे विचेतसः ॥ ४९ ॥**

धमनीस्थेऽपस्तम्भादौ मर्मणि विद्धे सति विचेतसो मूर्छितस्य सतो रक्तं स्रवेत् । कीदृशम् ? सशब्दफेनोष्णम् । सशब्दस्याऽत्र प्रत्येकं सम्बन्धः ।

**सिरामर्मव्यधे सान्द्रमजस्रं बह्वसृक्स्रवेत् ।**
**तत्क्षयात्तृड्भ्रमश्वासमोहहिध्माभिरन्तकः ॥ ५० ॥**

सिरेति । सिरामर्मणो बृहत्यादेर्व्यधे सत्यसृक् सान्द्रं घनमजस्रं निरन्तरं बहु प्रभूतं स्रवति । तत्क्षयात्तस्यासृजः क्षयात् तृड्भ्रमादिभिरन्तको जीवितनाशः ।

**वस्तु शूकैरिवकीर्णं रूढे च कुणिखञ्जता ।**
**बलचेष्टाक्षयः शोषः पर्वशोफश्च सन्धिजे ॥ ५१ ॥**

वस्त्विति । सन्धिजे मर्मण्यावर्तादौ विद्धे वस्तु शूकैरिवाकीर्णं भवति । वस्तुशब्देनाधिष्ठानं विद्धदेश उच्यते । तच्छूकैः शालियवादिसम्बन्धिभिः किंशारुभिर्व्याप्तमिव भवति । रूढे च सति तस्मिन्मर्मव्यधे कुणिता खञ्जता वा भवति ।





तथा बलचेष्टयोः क्षयस्तथा शोषोऽङ्गस्य, पर्वसु शोफः श्वयथुश्च सन्धिजे भवति ।

इदानीमेषामेव मर्मणां व्यधे जीवितनाशे कालं नियमयति—

**नाभिशङ्खाधिपापानहृच्छृङ्गाटकबस्तयः ।**
**अष्टौ च मातृकाः सद्यो निघ्नन्त्येकान्नविंशतिः ॥ ५२ ॥**
**सप्ताहः परमस्तेषां कालः कालस्य कर्षणे ।**

नाभीति । नाभिशङ्खादीनि मर्माण्येकान्नविंशतिः सद्यो घ्नन्ति । नाभिरेकः । शङ्खौ द्वौ । अधिप एकः । अपानोऽप्येकः । हृदेकम् । शृङ्गाटकानि चत्वारि । बस्तिरेकः । अष्टौ मातृकाः । एकान्नविंशतिरेतानि सद्यः प्राणहराणि । तेषां मर्मणां कालस्य मृत्योः कर्षणे आकर्षणे सप्ताहः परमः कालः प्रकृष्टोऽवधिः न 'नविंशतीति सुप्सुपेति समासः । तत एकेन नविंशतिरिति तृतीयेति योगविभागात्समासः । तत एकादिश्चैकस्येत्यादिना नञःप्रकृतिभाव एकस्यादुगागमश्च ऊनार्थेऽत्र नञ् । एकोनविंशतिरित्यर्थः' ।

**त्रयस्त्रिंशदपस्तम्भतलहृत्पार्श्वसन्धयः ॥ ५३ ॥**
**कटीतरुणसीमन्तस्तनमूलेन्द्रबस्तयः ।**
**क्षिप्रापालापबृहतीनितम्बस्तनरोहिताः ॥ ५४ ॥**
**कालान्तरप्राणहरा मासमासार्धजीविताः ।**
**उत्क्षेपौ स्थपनी त्रीणि विशल्यघ्नानि,**

त्रय इति । त्रयस्त्रिंशदपस्तम्भादयः कालान्तरप्राणहराः । मासं मासार्धं जीवितं येषु विद्धेष्विति मासमासार्धजीविताः । मासेन प्राणान् हरन्ति मासार्धेन वेत्यर्थः । सङ्ग्रहे चोक्तम्—"सौम्याग्नेयत्वात्तेषां पक्षाभ्यन्तरं काल" इति । त्रयस्त्रिंशदिति । 'त्रेस्त्रयसिति त्रयसादेशः' । तत्रापस्तम्भौ द्वौ । तलहृन्ति चत्वारि । पार्श्वसन्धी द्वौ । कटीकतरुणे द्वे । सीमन्ताः पञ्च । स्तनमूले द्वे । इन्द्रबस्तयश्चत्वारो जङ्घामध्ययोर्द्वे बाहुमध्ययोर्द्वे । क्षिप्राणि चत्वारि हस्तयोर्द्वे पादयोर्द्वे । अपालापबृहतीनितम्बस्तनरोहिताः प्रत्येकं द्वौ द्वाविति । उत्क्षेपौ द्वौ स्थपन्येकेत्येतानि त्रीणि विशल्यघ्नानि ।

कोऽत्र हेतुः ? इत्याह—

**तत्र हि ॥ ५५ ॥**
**वायुर्मांसवसामज्जमस्तुलुङ्गानि शोषयन् ।**
**शल्यापाये विनिर्गच्छन् श्वासात्कासाच्च हन्त्यसून् ॥ ५६ ॥**

तत्र हीत्यादि । हि यस्मात्तत्र व्यधे शल्यापाये वायुर्विनिर्गच्छन्निर्यान् मांसादीन् शोषयन् श्वासकासाभ्यां प्राणान् हन्ति । 'तत्र च हेतौ शतृप्रत्ययः' । निर्गमेन हि हेतुना मांसादीनां शोषणं भवति ।

**फणावपाङ्गौ विधुरौ नीले मन्ये कृकाटिके ।**



अंसांसफलकावर्तविटपोर्वीकुकुन्दराः ॥ ५७ ॥
सजानुलोहिताख्याऽऽणि कक्षाधृक्कूर्चकूर्पराः।
वैकल्यमिति चत्वारि चत्वारिंशच्च कुर्वते ॥ ५८ ॥
हरन्ति तान्यपि प्राणान् कदाचिदभिघाततः।

फणाविति। फणादीनि विटपान्तानि प्रत्येकं द्वौ द्वौ। ऊर्व्यश्चतस्रः। कुकुन्दरौ द्वौ। जानुनी द्वे। लोहिताख्यानि चत्वारि। आणयश्चत्वारः। कक्षाधरौ द्वौ। कूर्चाश्चत्वारो हस्तयोर्द्वौ। पादयोर्द्वौ कूर्परौ द्वौ। इत्येवं चत्वारि चत्वारिंशच्चेति चतुश्चत्वारिंशन्मर्माणि वैकल्यमङ्गस्य कुर्वते। कदाचित्त्वभिघाततस्तान्यपि चतुश्चत्वारिंशत्प्राणान् हरन्ति।

अष्टौ कूर्चशिरोगुल्फमणिबन्धा रुजाकराः ॥ ५६ ॥

अष्टाविति। अष्टौ कूर्चादयो मर्मविशेषा रुजाकराः। अग्निवायुसोमगुणबाहुल्यात्। अग्निवायू हि विशेषेण शूलकरौ सोमस्तु प्राणावलम्बकः। इति नैतानि प्राणहन्तॄणि। तत्र कूर्चशिरांसि हस्तपादेषु चत्वारि, गुल्फौ द्वौ, मणिबन्धौ द्वावित्यष्टौ।

इदानीं मर्मणां यथायथं प्रमाणमभिधातुमाह—

तेषां विटपकक्षाधृगूर्व्यः कूर्चशिरांसि च।
द्वादशाङ्गुलमानानि द्व्यङ्गुले मणिबन्धने ॥ ६० ॥
गुल्फौ च स्तनमूले च त्र्यङ्गुलौ जानुकूर्परौ।

तेषामिति। तेषां मर्मणां मध्ये विटपादीनि द्वादश मर्माण्यङ्गुलमानान्यङ्गुलप्रमाणानि। मणिबन्धने मणिबन्धौ। द्व्यङ्गुलप्रमाणौ। गुल्फौ स्तनमूले च द्व्यङ्गुले प्रत्येकम्। एकश्चशब्दः समुच्चयार्थो द्वितीयः पादपूरणे। त्र्यङ्गुलप्रमाणौ जानू कूर्परौ च।

अपानबस्तिहृन्नाभिनीलाः सीमन्तमातृकाः ॥ ६१ ॥
कूर्चश्रृङ्गाटमन्याश्च त्रिंशदेकेन वर्जिताः।
आत्मपाणितलोन्मानाः,

अपानेति। अपानवस्त्यादयस्त्रिंशदेकेन वर्जिता एकोनत्रिंशदात्मपाणितलोन्मानाः स्वहस्ततलपरिमाणाः।

शेषाण्यर्धाङ्गुलं वदेत् ॥ ६२ ॥
पञ्चाशत्षट् च मर्माणि तिलव्रीहिसमान्यपि।
इष्टानि मर्माण्यन्येषाम्,

शेषाणीति। शेषाणि षट्पञ्चाशन्मर्माणि स्वेनाङ्गुलपरिमाणेनार्धाङ्गुलप्रमाणान्यादिशेत्। अन्येषां तन्त्रकृतां तिलप्रमाणानि व्रीहिप्रमाणानि वा मर्माणीष्टान्यभिमतानि। परमतमप्रतिषिद्धमनुमतमेवेति, अस्याऽपि ग्रन्थकृत एतदेव मत-

मिति बोध्यम् ।

इदानीं यथा मर्माभिघातमरणं सम्पद्यते तथा दर्शयति—

**चतुर्धोक्ताः सिरास्तु याः ॥ ६३ ॥**
**तर्पयन्ति वपुः कृत्स्नं ता मर्माण्याश्रितास्ततः ।**
**तत्क्षतात्क्षतजात्यर्थप्रवृत्तेर्धातुसङ्क्षये ॥ ६४ ॥**
**वृद्धश्चलो रुजस्तीव्राः प्रतनोति समीरयन् ।**
**तेजस्तदुद्धूतं धत्ते तृष्णाशोषमदभ्रमान् ॥ ६५ ॥**
**स्विन्नस्रस्तश्लथतनुं हरत्येनं ततोऽन्तकः ।**

चतुर्धेति । याः सिराश्चतुर्धा उक्ताः प्राङ्निर्दिष्टा वातपित्तकफदुष्टशुद्धरक्तवाहिन्यः सप्तशतसंख्याः कृत्स्नमशेषं शरीरं तर्पयन्ति प्रीणयन्ति ता मर्माण्याश्रिता गताः प्राप्ताः । तत्क्षतादित्यादि । यत एवं सर्वाः सिरा मर्माणि प्राप्तास्ततः कारणान्मर्माश्रयलक्षणात्तत्क्षतात्तेषां मर्मणां क्षतं तत्क्षतं, तस्मान्मर्मक्षतात्कारणात्क्षतजस्य रक्तस्याऽतिप्रवृत्तिकारणाद्धातुसङ्क्षयः परम्पराक्रमायातो मांसादिधात्वपचयस्तस्मिन् धातुक्षये सति यो वृद्धश्चलो वायुः स तीव्रा अत्यन्तं दुःखदायिनी रुजः शूलविशेषान् प्रतनोति करोति । किं कुर्वन् ? तेजः पित्तं समीरयन्नुदीरयन् वृद्धिं नयन् । तत्तेज उद्धूतं वृद्धिसम्पन्नं तृष्णादीन् धत्ते करोति । ततोऽनन्तरं तृष्णादिभिरेनं पुरुषं मर्मविक्षतमन्तको हरति । किम्भूतम् ? स्विन्ना स्रस्ता श्लथा तनुर्यस्य तम् । तदयमर्थः—मर्माभिघातेन रक्तवाहिनीनां सिराणां मुखविकासो जायते । तद्विकासाज्जीविताधिष्ठानस्याऽसृजोऽत्यर्थं या निःसृतिर्यावत्तस्य क्षयस्तत्क्षयाद् जीवितनाश आश्रयाभावात् ।

अधुना मर्माभिघाते चिकित्सामाह—

**वर्धयेत्सन्धितो गात्रं मर्मण्यभिहिते द्रुतम् ॥ ६६ ॥**
**छेदनात्सन्धिदेशस्य सङ्कुचन्ति सिरा ह्यतः ।**
**जीवितं प्राणिनां तत्र रक्ते तिष्ठति तिष्ठति ॥ ६७ ॥**

वर्धयेदिति । मर्मण्यभिहते सति गात्रं शरीरमाशु छेदयेत् । कुतः ? सन्धितः सन्धिप्रदेशात् । हि यस्मात्सन्धिदेशस्य छेदनात्सिराः सङ्कुचन्ति संवृतमुखा भवन्ति । वर्धयेदिति 'वर्धच्छेदनादाविति चौरादिकः' । अतः सिरासङ्कोचात्कारणाद्रक्तं न बहिर्निःसरति=तिष्ठति । तस्मिंस्तिष्ठति बहिरवहति सति जीवितं तिष्ठति ।

तदनेन प्रकारेण मर्माभिघातक्षतान्मरणं नत्वमर्माभिघातक्षतादत इदमाह—

**सुविक्षतोऽप्यतो जीवेदमर्मणि न मर्मणि ।**
**प्राणघातिनि जीवेत्तु कश्चिद्वैद्यगुणेन चेत् ॥ ६८ ॥**
**असमग्राभिघाताच्च सोऽपि वैकल्यमश्नुते ।**



**तस्मात्क्षारविषाग्न्यादीन् यत्नान्मर्मसु वर्जयेत् ॥ ६९ ॥**

सुविक्षत इति । यतो मर्माभिघातक्षतात्प्राणी म्रियते नान्यथा क्षतमात्रादतोऽस्मात्कारणात्सु कृत्वा विशेषेण क्षतोऽपि शरशतैर्विद्धोऽप्यमर्मणि विद्धो जीवेन्न तु मर्मणि विद्धो जीवेत् । किम्भूते ? प्राणघातिनि । द्विविधं मर्म । प्राणघात्येकमपरं वैकल्यकरम् । तत्र प्राणघातिनि मर्मणि कुशाग्रेणाऽपि विद्धो न जीवति । अथ पुण्यवान्नियतायुश्च प्राणघातिन्यपि मर्मणि विद्धो वैद्यगुणेनाऽसमग्रस्याऽसकलस्य मर्मणोऽभिघाताच्च कश्चिद्यदि विद्धो जीवेदपि वैकल्यमश्नुते । विकलतां प्राप्य जीवतीत्यर्थः । वैद्यशब्दः प्राधान्याद् द्रव्यादिपादत्रयमुपलक्षयति । वैद्यगुणेन पादत्रयसम्पत्त्येत्यर्थः । यतश्चैवं मर्माभिघातः सापायः प्राणोपरोधकृत्तस्मात्कारणान्मर्मसु क्षारादीन् यत्नात्तात्पर्येण वर्जयेत् परिहरेत् । अग्न्यादीनित्यादिशब्देन भल्लातकरसकपिकच्छुशूकादीनां ग्रहणम् ।

**मर्माभिघातः स्वल्पोऽपि प्रायशो बाधतेतराम् ।**
**रोगा मर्माश्रितास्तद्वत्प्रक्रान्ता यत्नतोऽपि च ॥ ७० ॥**

मर्मेति । तस्मान्मर्माभिघातो रक्ष्यो यस्मान्मर्माभिघातः सुष्ठ्वतिशयेनाल्पोऽपि प्रायशो बाधतेतरामतिशयेन पीडयति । न केवलं मर्माभिघातः, यावद्रोगा अपि मर्माश्रयास्तद्वद्बाधन्ते यत्नतोऽप्यादरेणाऽपि प्रक्रान्ता उपक्रान्ता इति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तकृतायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां शारीरस्थाने चतुर्थोऽध्यायः ॥ ४ ॥

---

# पञ्चमोऽध्यायः ।

मर्मविभागानन्तरं विकृतिविज्ञानीयं शारीरमारभ्यते । यतो मर्मविभागे मर्मोपात्तं मरणकारित्वान्मर्मेत्युच्यते । विकृतेरनन्तरं मरणं दृश्यत इत्ययमुच्यते ।

**अथातो विकृतिविज्ञानीयं शारीरं व्याख्यास्यामः ।**

प्रकृतेरन्यथात्वं स्वभावप्रच्युतिर्विकृतिस्तस्या विज्ञानमवबोधः स विद्यते यस्मिन्निति 'मतौ छः सूक्तसाम्नोरिति छः । अध्यायानुवाकयोर्लुगिति तस्य पाक्षिकत्वान्न लुक्' । विकृतिविज्ञानीयस्तं शारीरं व्याख्यास्यामः । शेषं पूर्ववत् । विकृतिः पुनरत्र रिष्टमेव विज्ञेयम् ।

अत एवाह—

**पुष्पं फलस्य धूमोऽग्नेर्वर्षस्य जलदोदयः ।**
**यथा भविष्यतो लिङ्गं रिष्टं मृत्योस्तथा ध्रुवम् ॥ १ ॥**

पुष्पमिति । यथा फलस्य भाविनो भविष्यतः पुष्पमग्नेर्भाविनो धूमो वर्षस्य भाविनो जलदोदयस्तथा तेनैव दृष्टान्तेन मृत्योर्भविष्यतो रिष्टं लिङ्गं गमकम् ध्रुवं निश्चितम् । ध्रुवशब्दनिर्देशादिदं द्योतयति—रिष्टच्छायानुकारि तदाभासरूपं

मृत्योर्न लिङ्गमिति।

अत एवाह—

**अरिष्टं नास्ति मरणं दृष्टरिष्टं च जीवितम्।**

अरिष्टमिति। न विद्यते पूर्वं रिष्टं यस्य मरणस्य तदरिष्टं तथाविधं मरणं नास्ति। तथा दृष्टं रिष्टं यस्य जीवितस्य तदेवम्भूतं जीवितमपि नास्ति। यत्तु पुष्पादर्शनेऽपि वटवृक्षादौ फलसद्भावो दृश्यते तत्तु क्वचिदेव न सर्वत्रेति नायं दोषोऽत्र चिन्त्यः।

ननु दृष्टरिष्टं जीवितं नास्तीत्ययुक्तमेतद्व्यभिचारात्। तथा च वक्ष्यति—'यं नरं सहसा रोगो दुर्बलं परिमुञ्चति। संशयं प्राप्तमात्रेयो जीवितं तस्य मन्यत' इत्याह—

**अरिष्टे रिष्टविज्ञानं न च रिष्टेऽप्यनैपुणात्॥ २॥**

अरिष्ट इति। परमार्थेन यद्रिष्टत्वेन च निश्चयीकृतं तस्मिन्नरिष्टे, रिष्टविज्ञानं रिष्टत्वावगमः। नच रिष्टेऽपि रिष्टविज्ञानं केषाञ्चिद्भवति। कुतो हेतोः? इत्याह। अनैपुणात्। निपुणस्य भावो नैपुणम्। 'हायनान्तयुवादिभ्योऽणित्यण्'। न नैपुणमनैपुणं तस्मान्मिथ्याज्ञानादित्यर्थः। तदेवं यदभ्रान्तं रिष्टं तदव्यभिचारित्वान्मरणं निश्चितं सूचयति। यदन्यद्रिष्टच्छायानुकारि 'यं नरं सहसा रोग' इत्यादि, लक्षणं तद्भ्रान्तमेव। यथाऽधूमे वाष्पादौ धूम इति ज्ञानम्। न च तस्मान्मिथ्याज्ञानादग्न्युपलब्धिर्निश्चिता भवति। तस्माद्युक्तमुक्तम्–'अरिष्टं नास्ति मरणमित्यादि'। मुनिरप्याह—"अरिष्टं नास्ति मरणं दृष्टरिष्टं च जीवितम्। अरिष्टे रिष्टविज्ञानं न च रिष्टेऽप्यनैपुणादिति"। सुश्रुतस्तु पठति–"ध्रुवं हि रिष्टे मरणं ब्राह्मणैस्तत्किलामलैः। रसायनतपोदानतत्परैर्वा निवार्यत इति"।

कृष्णात्रेयस्तु द्विधा रिष्टमिच्छतीति तन्मतमाविष्कुर्वन्नाह—

**केचित्तु तद् द्विधेत्याहुः स्थाय्यस्थायिविभेदतः।**

केचिदिति। केचिदाचार्यास्तद्रिष्टं द्विधा विदन्ति। कथम्? इत्याह। स्थायीत्यादि। 'तृतीयार्थे तसिः'। स्थाय्यस्थायिभेदेन द्विप्रकारम्।

तत्राऽस्थायिरिष्टभेदं दर्शयन्नाह—

**दोषाणामपि बाहुल्याद्रिष्टाभासः समुद्भवेत्॥ ३॥**
**स दोषाणां शमे शाम्येत्स्थाय्यवश्यं तु मृत्यवे।**

दोषाणामिति। अपिशब्दः समुच्चये भिन्नक्रमः। रिष्टाभासश्च दोषाणां बाहुल्यात्समुद्भवेत्। दोषाणां शमे दोषाणां शान्तौ सत्यां स रिष्टाभासः शाम्येन्न तु मरणाय सम्पद्यते। स्थायि तु रिष्टमवश्यं मरणाय जायते। नन्वरिष्टं नास्ति मरणमित्ययुक्तमिवाभाति? रिष्टमन्तरेणाप्यकालमृत्योरग्न्युदकादिभिर्दर्शनात्। अत्र सञ्चक्ष्महे—कालमृत्योरेव रिष्टपूर्वकत्वात्। तथा च वक्ष्यति—'सर्वे ते कालचोदिताः। तथा च। वशगाः समवर्तिन' इति। समवर्ती हि कालमृत्युरेव।

किं तद्रिष्टमित्याह—

**रूपेन्द्रियस्वरच्छायाप्रतिच्छायाक्रियादिषु ॥ ४ ॥**
**अन्येष्वपि च भावेषु प्राकृतेष्वनिमित्ततः ।**
**विकृतिर्या समासेन रिष्टं तदिति लक्षयेत् ॥ ५ ॥**

रूपेति । रूपं गौरादिवर्णविशेषो गौरो गौरः श्यामः कृष्ण इति (?) । तद्भेदास्तु यमगौरादयः । देहप्रकृतिवर्णास्तु नीलश्यामताम्रहारिद्रशुक्लादयः । तथा चक्षुषा यद्ग्राह्यं वस्तुजातं संस्थानादि तदपि रूपं विकृतिः । इन्द्रियाणि चक्षुरादीनि । स्वरः शब्दः प्रतिमनुष्यं विशिष्टो रवः । छाया वर्णप्रभाश्रया वक्ष्यमाणलक्षणा । प्रतिच्छाया प्रतिबिम्बम् । क्रिया देहवाङ्मनोव्यापारः । तत्र धावनप्लवनाद्यनेकरूपो व्यायामो नृत्यस्थानकादिः कायिको व्यापारः । गीताध्ययनादिर्वाचिको व्यापारः । रागद्वेषभयेर्ष्यादिर्मानसः । आदिशब्दोऽन्येषामपि शरीरजानां भावानां ग्रहणार्थम् । रूपं चेन्द्रियाणि च स्वरश्च च्छाया च प्रतिच्छाया च क्रियादयश्च, तेषु रूपादिषु भावेषु । तथाऽन्येष्वपि प्राकृतेषु भावेष्वनिमित्ततोऽकस्मान्निमित्तमन्तरेणैव या विकृतिः सा समासेन रिष्टमिति लक्षयेज्जानीयात् । प्रकृतौ भवाः प्राकृताः । तथा वातादिप्रकृतौ चलधृतिस्मृत्यादयः । तदेवं रूपादिषु भावेषु क्रियादिपर्यन्तेष्वन्येषु च प्राकृतेषु भावेषु या विकृतिः सा संक्षेपेण रिष्टम् । विस्तरतस्त्वनेकधा वक्ष्यमाणम् ।

**केशरोम निरभ्यङ्गं यस्याऽभ्यक्तमिवेक्ष्यते ।**

केशेति । केशाश्च रोमाणि च तत्केशरोम यस्य निरभ्यङ्गमभ्यङ्गरहितमभ्यक्तमिवेक्ष्यते दृश्यते, स कालचोदित इति वचनविपरिणामेन सम्बन्धः । एवमुत्तरत्राऽपि । एतद्रूपविकृतेरुदाहरणम् ।

इन्द्रियाणामधिष्ठानस्य विकृतिरिन्द्रियविकृतिरित्याह—

**यस्यात्यर्थं चले नेत्रे स्तब्धान्तर्गतनिर्गते ॥ ६ ॥**
**जिह्मे विस्तृतसंक्षिप्ते संक्षिप्तविनतभ्रुणी ।**
**उद्भ्रान्तदर्शने हीनदर्शने नकुलोपमे ॥ ७ ॥**
**कपोताभे अलाताभे स्रुते लुलितपक्ष्मणी ।**
**नासिकाऽत्यर्थविवृता संवृता पिटिकाचिता ॥ ८ ॥**
**उच्छूना स्फुटिता म्लाना,**

यस्येति । नेत्रशब्देन नेत्राधिष्ठानमिष्टं नेन्द्रियम् । यस्य नेत्रे चले अत्यर्थमतिशयेनेतश्चेतश्च परिभ्रमतः । तथा यस्य नेत्रे स्तब्धे निश्चले । तथा यस्यान्तर्गते अन्तःप्रविष्टे । तथा यस्य निर्गते बहिर्याते । तथा यस्य जिह्मे कुटिले । तथा यस्य विस्तृते विस्तरं गते । तथा यस्य नेत्रे संक्षिप्ते सङ्कुचिते । तथा संक्षिप्ते विशेषेण नते भ्रुवौ ययोस्ते संक्षिप्तविनतभ्रुणी । तथोद्भ्रान्तदर्शने विभ्रान्तदृष्टिनी । तथा

हीनदर्शने अल्पदर्शने नष्टदृष्टिनी वा, तथा नकुलोपमे नकुललोचनाभे । समुदायेषु हि प्रवृत्ताः शब्दा अवयवेष्वपि वर्तन्त इति नकुलशब्दोऽत्र नकुललोचनविषयो वेद्यः । यथा च नागानन्दनाटके—"चक्षुस्तामरसानुकारि हरिणा वक्षःस्थलं स्पर्धत इति" । अत्र हि हरिवक्षसा यस्य स्पर्धते वक्षस्थलमित्ययमर्थो वेद्यः । अथवा नकुललोचनयोरुपमा ययोस्ते नकुलोपमे इत्यत्र मध्यमपदलोपी समासः । एवं कपोताभे तथा अलाताभे उल्मुकसदृशे । तथा स्रुते निर्निमित्तमश्रु परिस्रवतः । तथा लुलिते वातोद्धते इव पक्ष्मणी ययोस्ते लुलितपक्ष्मणी । तथा यस्य नासिका निर्निमित्तमत्यर्थमतिशयेन विवृता अथवा संवृता सङ्कुचिता । तथा पिटिकाचिता पिटिकाभिर्व्याप्ता । तथा उच्छूना ऊर्ध्वं श्वयथुनाऽऽक्रान्ता । तथा स्फुटिता म्लाना च ।

यस्यौष्ठो यात्यधोऽधरः ।
ऊर्ध्वं द्वितीयः स्यातां वा पक्वजम्बूनिभावुभौ ॥ ९ ॥
दन्ताः सशर्कराः श्यावास्ताम्राः पुष्पितपङ्किताः ।
सहसैव पतेयुर्वा जिह्वा जिह्मा विसर्पिणी ॥ १० ॥
श्वेता शुष्का गुरुः श्यावा लिप्ता सुप्ता सकण्टका ।

यस्येति । यस्यौष्ठो दन्तच्छदोऽधरोऽनुत्तरोऽधो याति । द्वितीय उपरिष्टाद्भवो यो दन्तच्छदः स ऊर्ध्वं याति । यस्य च पक्वजम्बूफलनिभौ द्वावोष्ठौ भवतः । तथा यस्य दन्ताः सशर्कराः शर्कराभिराचितास्तथा श्यावास्तथा ताम्राश्च वर्णतस्तथा पुष्पिताः सञ्जातपुष्पास्तथा पङ्किताः सञ्जातपङ्काः कर्दमोपलिप्ता इव । तथा सहसैव कारणं विनैव यस्य वा द्विजाः पतेयुर्भ्रंशेयुः । तथा यस्य जिह्वा जिह्वेन्द्रियाधिष्ठानं जिह्मा कुटिला तथा श्यावा तथा लिप्ता तथा सुप्ता सुप्तवत्सुप्ता रसाज्ञानाद्विचेतनेत्यर्थः । तथा सकण्टका कण्टकैराचितेव ।

शिरः शिरोधरा वोढुं, पृष्ठं वा भारमात्मनः, ॥ ११ ॥
हनू वा पिण्डमास्यस्थं, शक्नुवन्ति न यस्य च ।
यस्यानिमित्तमङ्गानि गुरूण्यतिलघूनि वा ॥ १२ ॥
विषदोषाद्विना यस्य खेभ्यो रक्तं प्रवर्तते ।
उत्सिक्तं मेहनं यस्य वृषणावतिनिःसृतौ ॥ १३ ॥
अतोऽन्यथा वा यस्य स्यात्सर्वे ते कालचोदिताः ।

शिर इति । यस्य पुंसः शिरोधरा ग्रीवा शिरो वोढुं न शक्नोति । तथा यस्य पृष्ठं वा आत्मनो भारं, पृष्ठस्य वोढृत्वेनोपर्यारूढं ग्रीवादिकं, वोढुं धारयितुं न शक्नोति । यस्य वा पुंसो हनू भक्तपिण्डं कवलमास्यस्थं वोढुं न शक्नुतः । एवं शिरोधरादीनि त्रीण्यङ्गानि स्वमात्मीयं कार्यं यस्य सोढुं न शक्नुवन्ति स कालचोदित इति योज्यम् । यस्यानिमित्तं कारणं विनाङ्गान्यतिगुरूणि कदाचिदतिल-

घूनि वा भवन्ति । तथा यस्य विषदोषमन्तरेण खेभ्यश्छिद्रेभ्यो रक्तं प्रवर्तत आयाति । यस्य मेहनं लिङ्गमुत्सिक्तमूर्ध्वं गतम् । तथा वृषणावतिनिःसृतौ प्रलम्बौ । अतोऽन्यथा वा उक्तप्रकाराद्विपरीतः प्रकारो यः सोऽन्यथा । यथा वृषणावुत्सिक्ताव-तिनिःसृतं मेहनमिति । 'केशरोमनिरभ्यङ्गमित्यारभ्य यावदतोऽन्यथा वा'-इत्येतत्प-र्यन्तग्रन्थोक्तं लक्षणं येषां जातं ते पुरुषाः सर्वे कालेन मृत्युना चोदिताः= अन्तकेन स्वीकृता इत्यर्थः । नन्वत्र कालनियमो न कृतः कियता कालेन मृत्युर्भवति मासे-नार्धमासेन वेति सन्देहान्न युक्तमेतत् ? अत्र ब्रमः । अनिर्दिष्टकालानां संवत्सरो-ऽवधिरिति व्यवस्था वेद्या । तथा चाह—'वर्षान्तं तस्य जीवितं' तथा 'सोऽपि वर्षं न जीवति'-इत्यादिवचनान्नास्ति वर्षादूर्ध्वं जातरिष्टस्य जीवितमिति निश्चयः ।

**यस्याऽपूर्वाः सिरालेखा बालेन्द्वाकृतयोऽपि वा ॥ १४ ॥**
**ललाटे बस्तिशीर्षे वा षण्मासान्न स जीवति ।**
**पद्मिनीपत्रवत्तोयं शरीरे यस्य देहिनः ॥ १५ ॥**
**प्लवेत प्लवमानस्य षण्मासं तस्य जीवितम् ।**

यस्येति । यस्य पुंसः स्वस्थस्य निर्निमित्तमेव ललाटे बस्तेर्वा शिरस्यपूर्वा अभि-नवा नतु प्रागवस्थिताः सिरालेखाः सिराराजयो दृश्यन्ते । अथवा बालेन्द्वाकृतयो वक्राः स पुमान् षण्मासान्न जीवति । तथा यस्य पुंसः प्लवमानस्य जले स्नानं कुर्वतः शरीरे पद्मिनीपत्रवत्पद्मिनीपत्रस्थिततोयवत्तोयं प्लवतेऽनवस्थितस्थिति भवति तस्याऽपि षण्मासान्न जीवितम् । 'पद्मिनीपत्रवदिति सप्तम्यर्थे वतिर्न षष्ठ्यर्थे । शरीर इति सप्तम्या निर्दिष्टत्वात् । तथा चोक्तं भाष्यकृता—उपमाने यः संशयः स उपमेयाद्व्यावर्तत इति' ।

**हरिताभाः सिरा यस्य रोमकूपाश्च संवृताः ॥ १६ ॥**
**सोऽम्लाभिलाषी पुरुषः पित्तान्मरणमश्नुते ।**

हरिताभा इति । यस्य सिरा हरिताभा रोमकूपाश्च संवृताः स्युः स नरोऽम्ला-भिलाषी सन् पित्तेन मृत्युं प्राप्नोति ।

**यस्य गोमयचूर्णाभं चूर्णं मूर्ध्नि मुखेऽपि वा ॥ १७ ॥**
**सस्नेहं, मूर्ध्नि धूमो वा मासान्तं तस्य जीवितम् ॥**

यस्येति । यस्य पुरुषस्य गोमयस्य सदृशं चूर्णं सस्नेहं मूर्ध्नि मुखे वा भवेत् । तथा मूर्ध्नि धूमो यस्य वा भवति तस्य मासान्तं जीवितं स्यात् ।

**मूर्ध्नि भ्रुवोर्वा कुर्वन्ति सीमन्तावर्तका नवाः ॥ १८ ॥**
**मृत्युं स्वस्थस्य षड्रात्रात्त्रिरात्रादातुरस्य तु ।**
**जिह्वा श्यावा मुखं पूति सव्यमक्षि निमज्जति ॥ १९ ॥**
**खगा वा मूर्ध्नि लीयन्ते यस्य तं परिवर्जयेत् ।**





मूर्ध्नीति । सीमन्तानामावर्तका मण्डलानि सीमन्तावर्तकाः शिरसि भ्रवोर्वा नवा अपूर्वाः स्वस्थस्य षड्रात्रान्मृत्युं कुर्वन्ति । आतुरस्य पुनस्त्रिरात्रात् कुर्वन्ति । अनेकार्थत्वाद्धातूनां सूचयन्तीत्यर्थः । ननु विषवन्मारणे तेषां कर्तृत्वम् । तर्हि सूचयन्तीत्येतदेव कस्मान्न कृतम् ? ब्रूमः । यदोत्पद्यन्ते सीमन्तावर्तकास्तदा निश्चितं स्थायि रिष्टं समुत्पन्नमित्यवगन्तव्यमिति प्रतिपादनार्थं कुर्वन्तीत्युक्तम् ॥ तथा यस्य जिह्वा श्यावा भवति । तथा मुखं पूति दुर्गन्धि । तथा सव्यं वाममक्षि निमज्जत्यन्तः प्रविशति । तथा यस्य खगाः पक्षिणश्च मूर्ध्नि लीयन्ते श्लिष्यन्ति तं परिवर्जयेद्वैद्य इति शेषः ।

**यस्य स्नातानुलिप्तस्य पूर्वं शुष्यत्युरो भृशम् ॥ २० ॥**
**आर्द्रेषु सर्वगात्रेषु सोऽर्धमासं न जीवति ।**

यस्येति । यस्य स्नातानुलिप्तस्य पूर्वं स्नातः पश्चादनुलिप्तस्तस्यार्द्रेषु सर्वगात्रेषु पूर्वमादौ भृशमुरः शुष्यत्यतिशयेन वक्षः शोषमायाति सोऽर्धमासं न जीवति । नन्वार्द्रेषु सर्वगात्रेष्विति न वक्तव्यं पुनरुक्तत्वात् ? तथा हि । 'पूर्वं शुष्यत्युरो भृशमित्युक्ते' आर्द्रेषु सर्वगात्रेष्वित्यर्थाद्गम्यत एव । अन्यथा पूर्वग्रहणमनर्थकं स्यात् ? नैवम् । अत्र हि भृशग्रहणात्पूर्वमुरो भृशं शुष्यति न पुनरन्यान्यपि गात्राणि शुष्यन्तीत्यायाति । न चैतद्रिष्टं शास्त्रकृतः । अत एवार्द्रेष्वित्याह । तदयमर्थोऽत्राभिप्रेतः । यथैवोरसो भृशं शोषस्तथैव शेषाणामङ्गानां भृशार्द्रता स्यादित्येतत् प्रतिपादयितुमार्द्रेष्वित्युक्तम् । सर्वगात्रेष्वार्द्रेषु सत्सु पूर्वमुरो भृशं शुष्यतीत्यैतदाश्चर्यमाश्चर्यत्वाद्रिष्टम् ।

**अकस्माद्युगपद्गात्रे वर्णौ प्राकृतवैकृतौ ॥ २१ ॥**
**तथैवोपचयग्लानिरौक्ष्यस्नेहादि मृत्यवे ।**
**यस्य स्फुटेयुरङ्गुल्यो नाकृष्टा न स जीवति ॥ २२ ॥**
**क्षवकासादिषु तथा यस्याऽपूर्वो ध्वनिर्भवेत् ।**
**ह्रस्वो दीर्घोऽति वोच्छ्वासः पूतिः सुरभिरेव वा ॥ २३ ॥**
**आप्लुतानाप्लुते काये यस्य गन्धोऽतिमानुषः ।**
**मलवस्त्रव्रणादौ वा वर्षान्तं तस्य जीवितम् ॥ २४ ॥**

अकस्मादिति । तत्र प्राकृतो वर्णो गौरादिः प्रागुक्तः । वैकृतस्तु वर्णो नीलादिः । ततो प्राकृतवैकृतौ वर्णौ यस्य निमित्तमन्तरेणाऽपि तुल्यकालं देहे भवन्तौ मृत्यवे । तथैवोपचयग्लान्यादयः परस्परं प्रतिपक्षभूता युगपद्यस्य जायन्ते ते तस्य मृत्यवे । आदिशब्देन शैत्यौष्ण्यादीनि गृह्यन्ते । यस्य आकृष्टा अङ्गुल्यो न स्फुटेयुर्न त्रुटेयुः स न जीवति । यस्य क्षवादिष्वपूर्वो ध्वनिरलौकिकः शब्दः स्यात् स न जीवति । यस्योच्छ्वासोऽतिह्रस्वोऽतिदीर्घो वा भवेदथवोच्छ्वासः पूतिगन्धिः सुरभिर्वा यस्य स न जीवति । तथा आप्लुताऽनाप्लुते स्नाताऽस्नाते काये

यस्य मानुषमतिक्रान्तोऽतिमानुषो गन्धः सुरभिरसुरभिर्वा भवति । यस्य मलवस्त्रव्रणादौ वाऽतिमानुषो गन्धः स्याद् वर्षान्तं तस्य जीवितम् । तत्क्षणादारभ्य तावदसाववस्थितजीवितो यावद्वर्षं, तदन्ते वत्सरान्ते मृत्युर्भवेद् जायेतेत्यर्थः ।

भजन्तेऽत्यङ्गसौरस्याद्यं यूकामक्षिकादयः ।
त्यजन्ति वाऽतिवैरस्यात्सोऽपि वर्षं न जीवति ॥ २५ ॥
सततोष्मसु गात्रेषु शैत्यं यस्योपलक्ष्यते ।
शीतेषु भृशमौष्ण्यं वा स्वेदः स्तम्भोऽप्यहेतुकः ॥ २६ ॥

भजन्त इति । शोभनरसस्य भावः सौरस्यम् । अङ्गस्य सौरस्यमङ्गसौरस्यम् । अतिशयेनाङ्गसौरस्यमत्यङ्गसौरस्यं तस्माद्धेतोर्यूकामक्षिकादयो यं भजन्तेऽथवा यमतिवैरस्यात्त्यजन्ति सोऽपि वर्षं न जीवति । तथा यस्य सततोष्मसु सदोष्णेषु गात्रेष्ववयवेषु भृशं शैत्यमुपलक्ष्यत उपलभ्यते । शीतेषु वा गात्रेषु भृशमौष्ण्यं यस्योपलभ्यते । भृशशब्दस्याऽत्र हि विषयद्वयेऽपि सम्बन्धः । यस्याऽहेतुको निर्निमित्तोऽङ्गेष्वतिस्वेदस्तथा स्वेदविषयो यः स्तम्भः सोऽपि यस्य स्यात् सोऽपि वर्षं न जीवतीति योज्यम् ।

यो जातशीतपिटिकः शीताङ्गो वा विदह्यते ।
उष्णद्वेषी च शीतार्तः स प्रेताधिपगोचरः ॥ २७ ॥
उरस्यूष्मा भवेद्यस्य जठरे चाऽतिशीतता ।
भिन्नं पुरीषं तृष्णा च यथा प्रेतस्तथैव सः ॥ २८ ॥
मूत्रं पुरीषं निष्ठ्यूतं शुक्रं वाप्सु निमज्जति ।
निष्ठ्यूतं बहुवर्णं वा यस्य मासात्स नश्यति ॥ २९ ॥

य इति । जाताः शीताः पिटिका यस्य स जातशीतपिटिकः कफोद्भूतपिटिकाक्रान्तदेहो यो विदह्यते विदाहमनुभवति । शीताङ्गः सन् वा यो विदह्यते । तथोष्णां द्वेष्टि यः पुरुषः शीतार्तः सन् स प्रेताधिपगोचरः स मृत्युनाऽऽत्मसात्क्रियत इत्यर्थः । उरसि यस्योष्मा औष्ण्यं भवेत् । जठरे उदरे चातिशैत्यम् । पुरीषं भिन्नं तृष्णा च भवति स प्रेततुल्यः प्राप्तमरणत्वादिति भावः । यस्य मूत्रं पुरीषं निष्ठ्यूतं शुक्रं वा अप्सु निमज्जति ब्रुडति । यस्य वा निष्ठ्यूतं निष्ठीवनमनेकवर्णं भवत्यसौ मासेन नश्यति ।

घनीभूतमिवाकाशमाकाशमिव यो घनम् ।

मरणाभिमुखः पुरुषो विपर्यासकारिभिर्दोषैरघनादि घनादिरूपं मन्यते घनादि त्वघनादि मन्यते तद्विपर्ययेण । अत एवोपमार्थमिवशब्दं प्रायुङ्क्त । अघनो घनः सम्पन्नो घनीभूतः । 'च्विप्रत्ययस्तस्याऽस्य च्वावितीत्वम्' । घनीभूतमिवान्तरिक्षमन्तरिक्षमिव घनं मेदिनीधर्ममन्तरिक्षमूर्ध्वस्थं यत्तदधःस्थं पातालस्थमिव पश्यतीति वक्ष्यमाणेन सम्बन्धः ।

**अमूर्तमिव मूर्तं च मूर्तं चाऽमूर्तवत्स्थितम्॥ ३०॥**
**तेजस्व्यतेजस्तद्वच्च शुक्लं कृष्णमसच्च सत्।**
**अनेत्ररोगश्चन्द्रं च बहुरूपमलाञ्छनम्॥ ३१॥**

अमूर्तमिति। चशब्दो भिन्नक्रम इवशब्दश्च। अमूर्तं च वातादिकं मूर्तमिव रूपवन्तमिव पश्यति। मूर्तं च वह्न्यादिकममूर्तमिव स्थितं यः पश्यति। भेडोऽप्यधीते। "यस्य दर्शनमायाति वायुरम्बरगोचरः। वह्निर्नायाति दीप्तोऽपि तस्यायुःक्षयमादिशेदिति"। तथा तेजस्वि यद्वस्त्वग्न्यादिकं भास्वरं तदतेजो निस्तेजः पश्यति। 'तेजस्वीत्यस्मायामेधत्यादिना विनिः'। तद्वच्चेति। तेजस्यतेजोदर्शनेन तुल्यं तद्वत् शुक्लं च कृष्णं यः पश्यत्यसच्च यद्वस्तु तत्सद् यः पश्यति, स नश्यति। नेत्रेषु रोगो नेत्ररोगः स न विद्यते यस्य सोऽनेत्ररोगी तिमिरादिकमन्तरेण बहुरूपं चन्द्रं पश्यति। बहून् शशाङ्कानालोकयत इत्यर्थः। यो वा अलाञ्छनमकलङ्कं चन्द्रं पश्यति स नश्यति। एषु च घनीभूतमित्यादिषु विशिष्टेषु वस्तुविपर्यासदर्शनमात्रलक्षणस्यैकस्मिन्नेवोदाहरणत्वेन रिष्टे दर्शयितुं युक्ते यदनेकरिष्टप्रदर्शनं तत्प्रपञ्चार्थं वेद्यम्।

**जाग्रद्रक्षांसि गन्धर्वान् प्रेतानन्यांश्च तद्विधान्।**
**रूपं व्याकृति तद्वच्च यः पश्यति स नश्यति॥ ३२॥**

जाग्रदिति। आसन्नमरणो नरो जाग्रदेव यथास्वरूपाणि रक्षःपिशाचादीनि यः पश्यति, न विपर्ययवस्तुरूपाणि, यतस्तदानीं तैरेव स उपास्यते। तथा च वक्ष्यति—'यमदूतपिशाचाद्यैर्यत्परासुरुपास्यत इति'। रक्षांसीति बहुवचननिर्देशो बहुराक्षसदर्शने सुतरामस्य रिष्टस्य परिपूर्णत्वमिति द्योतयितुम्। एकस्मिन्नपि हि राक्षसे दृष्टे रिष्टं भवत्येव। जातौ वा बहुवचनम्। अन्यांश्च तद्विधान् राक्षसादिप्रकारान्यः पश्यति। तथा विकृता द्रष्टुं दुःशक्या आकृतिर्यस्य रूपस्य तद्रूपं व्याकृति रक्षःपिशाचादिव्यतिरिक्तं तदनेकं यः पश्यति स नश्यति।

**सप्तर्षीणां समीपस्थां यो न पश्यत्यरुन्धतीम्।**
**ध्रुवमाकाशगङ्गां वा स न पश्यति तां समाम्॥ ३३॥**

सप्तर्षीति। यो नरोऽरुन्धतीं सप्तर्षीणां समीपस्थां न पश्यति स तां समां न पश्यति स तस्य संवत्सरस्यान्तरे म्रियत इत्यर्थः। सप्तर्षीणां समीपस्थामित्यरुन्धत्या विशेषणेन सप्तर्षिसमीपेऽरुन्धत्याः स्थितिर्भवतीति वेदयति। तथा चान्यैः सामान्येनैवोक्तम्। यथा– "अरुन्धतीं ध्रुवं चैव सोमच्छायां महापथम्। यो न पश्येन्न पश्येत्स नरः सम्वत्सरात्परमिति"। तथा यो ध्रुवं न पश्यति तथा आकाशगङ्गां यो न पश्यति स तां समां न पश्यति।

इदानीं श्रोत्रेन्द्रियस्य विकृतिमाचिख्यासुराह—

**मेघतोयौघनिर्घोषवीणापणववेणुजान्।**



**शृणोत्यन्यांश्च यः शब्दानसतो न सतोऽपि वा ॥ ३४ ॥**
**निष्पीड्य कर्णौ शृणुयान्न यो धुकधुकस्वनम् ॥**

मेघेति। मेघादिजान् वेणुपर्यन्तान् शब्दांस्तथाऽन्यांश्च शब्दांस्तथारूपान्महतोऽसतः परैरनुपलभ्यमानान् यः पुरुषः शृणोति। तथा मेघादिजांस्तथाऽन्यांश्च यः शब्दान् सतो विद्यमानान्न शृणोति तेषां मरणमादिशेदिति वक्ष्यमाणस्य वचनविपरिणामेनात्र सम्बन्धः कार्यः। यो धुकधुकशब्दं कर्णावङ्गुल्या निष्पीड्य न शृणुयात्।

**तद्वद्गंधरसस्पर्शान् मन्यते यो विपर्ययात् ॥ ३५ ॥**
**सर्वशो वा न यो यश्च दीपगन्धं न जिघ्रति।**

तद्वदिति। तैर्मेघादिजैः शब्दैस्तुल्यस्तद्वत्। यथा मेघादिजान् शब्दान् योऽसतः शृणोति सतश्च न शृणोति तद्वद्यो गन्धरसस्पर्शान् विपर्ययाद्वैपरीत्येन मन्यते न यथावस्तुजातान्। तत्र गन्धविपर्ययो यथा। सुगन्धं दुर्गन्धं मन्यते। रसविपर्ययो यथा। मधुरमम्लमम्लं मधुरमित्यादि। स्पर्शविपर्ययो यथा। मृदुस्पर्शं खरस्पर्शं मन्यते। शीतमुष्णं स्निग्धं रूक्षमिति विपर्ययेण मन्यते। सर्वशो गन्धादीन् वा योऽपि न मन्यते यश्च तत्कालनिर्वाणस्य दीपस्य गन्धं न जिघ्रति घ्राणेन्द्रियेण नानुभवति।

**विधिना यस्य दोषाय स्वास्थ्यायाविधिना रसाः ॥ ३६ ॥**
**यः पांसुनेन कीर्णाङ्गो योऽङ्गघातं न वेत्ति वा।**

विधिनेति। विधिना शास्त्रप्रयुक्तेन प्रयुक्ता रसा यस्य दोषाय रोगायाऽविधिना शास्त्रविधिव्यतिक्रमेण प्रयुक्ताः स्वास्थ्याय स्युः। तथा यः पांसुना रजसेव कीर्णाङ्गो धूलधूसरितशरीरः। यश्चाङ्गे घातं हतिं न वेत्ति।

**अन्तरेण तपस्तीव्रं योगं वा विधिपूर्वकम् ॥ ३७ ॥**
**जानात्यतीद्रियं यश्च तेषां मरणमादिशेत्।**

अन्तरेणेति। तपस्तीव्रमन्तरेणोग्रं तपो विना यः पुरुषोऽतीन्द्रियमिन्द्रियेभ्योऽतिक्रान्तमिन्द्रियाणामगोचरं स्वर्गादि वेत्ति तथा योगं वा विधिपूर्वकमन्तरेण योऽतीन्द्रियं जानाति। तेषां पूर्वोक्तानां सर्वेषां मरणमादिशेत्। "योगश्चित्तवृत्तिनिरोधः"। विधिपूर्वको यथाशास्त्रं सम्यगुपदेशः। तथाऽन्योऽपि योगो रसायनादिः। युज्यत इति योगो विधिविशेषः। शास्त्रोद्दिष्टरसायनाञ्जनादिनापि ह्यतीन्द्रियं दृश्यते दूरव्यवहितादि।

अधुना स्वरविकृतिमाह—

**हीनो दीनः स्वरोऽव्यक्तो यस्य स्याद्गद्गदोऽपि वा ॥ ३८ ॥**
**सहसा यो विमुह्येद्वा विवक्षुर्न स जीवति।**

हीन इति। यस्य पुरुषस्य स्वरः शब्दो निमित्तमन्तरेण हीनोऽथवा दीनो दै-

न्ययुक्तो भवति। अव्यक्तोऽस्फुटो यस्य स्यात्। गद्गदो घर्घरो वा यस्य भवति। यो वा विवक्षुर्वक्तुमिच्छन् कारणमन्तरेण विमुह्येद्वक्तुं न शक्नोति स न जीवति।

**स्वरस्य दुर्बलीभावं हानिं वा बलवर्णयोः ॥ ३९ ॥**
**रोगवृद्धिमयुक्त्या च दृष्ट्वा मरणमादिशेत्।**

स्वरस्येति। स्वरस्य शब्दस्य दौर्बल्यं दृष्ट्वा बलवर्णयोश्च हानिमयुक्त्या दृष्ट्वा मरणमादिशेत्। चशब्दः समुच्चये। रोगवृद्धिमयुक्त्या च दृष्ट्वा नरस्य मरणमादिशेत्। अयुक्त्या निर्निमित्तमेवेत्यर्थः।

**अपस्वरं भाषमाणं प्राप्तं मरणमात्मनः ॥ ४० ॥**
**श्रोतारं चास्य शब्दस्य दूरतः परिवर्जयेत्।**

अपस्वरमिति। स्वभावस्वरादपगतं भ्रष्टमपस्वरं हीनस्वरं कृत्वा यो नरोऽहं मरिष्यामि मरिष्यामीत्येवमात्मानो मरणं भाषते परस्परं तथाभूतं दूरादेव वर्जयेद्वैद्यो न चिकित्सेत्। तथाऽस्य शब्दस्याऽहं मरिष्यामीत्येवंभूतस्य यो नरः श्रोता तमपि वैद्यो दूरतो वर्जयेत्।

स्वराश्रयं रिष्टमुक्त्वा छायाश्रयं रिष्टमभिधित्सुराह—

**संस्थानेन प्रमाणेन वर्णेन प्रभयाऽपि वा ॥ ४१ ॥**
**छाया विवर्तते यस्य स्वप्नेऽपि प्रेत एव सः।**

संस्थानेनेति। संस्थानं प्रतिपुरुषं विलक्षणं समविषमं रूपमाकृतिरित्यर्थः। तत्र यदि शरीरस्य समं संस्थानं भवति छाया त्वस्य विषमा दृश्यते तदा रिष्टम्। तथा यदि शरीरस्य विषमं संस्थानं छाया तु समा भवति तदपि रिष्टम्। तथा यदि दीर्घप्रमाणस्य सतो ह्रस्वा छाया भवति ह्रस्वप्रमाणस्य वा दीर्घा भवति तदपि रिष्टम्। एवं संस्थानेन प्रमाणेन च छायाविवृतिं विद्यात्। तथा यस्य नाभसी छाया आग्नेयी छायाया वर्णतो दृश्यते सा वर्णविवृतिः। एवं पृथिव्यादिमयीषु छायासु वर्णविवृतिर्योज्या। तथा यस्य यथाभूता प्रभा साऽन्यथाभूता भवति सा प्रभाविवृतिः। एवं संस्थानाद्यन्यतमेन यस्य छाया विवर्ततेऽन्यथाभूताऽन्यथा सम्पद्यते स्वप्नेऽपि, स पुमान् प्रेत एव। किं पुनर्जाग्रदवस्थायां न प्रेत इति एवकारेण रिष्टस्याऽव्यभिचारित्वं सूचयति। उत्पन्नश्चेन्नरस्य छायाया अन्यथाभावस्तदानीं पुरुषो यमसात्सम्पन्नो मन्तव्य इत्यर्थः।

अस्याश्च छायाया द्वैरूप्यं दर्शयितुमाह—

**आतपादर्शतोयादौ या संस्थानप्रमाणतः ॥ ४२ ॥**
**छायाऽङ्गात्सम्भवत्युक्ता प्रतिच्छायेति सा पुनः।**
**वर्णप्रभाश्रया या तु सा छायैव शरीरगा ॥ ४३ ॥**

आतपेति। या शरीरादातपादर्शतोयघृतादौ शरीरसंस्थानप्रमाणानुरूपा सम्भवति प्रतिबिम्बकरूपा सा प्रतिच्छायेत्युच्यते। तस्या हि न वर्णप्रभे आश्रयः।

यस्याः पुनर्वर्णप्रभे आश्रयश्छायायाः सा शरीरस्यैव छाया न प्रतिच्छायावच्छरीरादन्यत्राऽऽतपादर्शतोयादौ कुत्रचिदपि याति प्रतिबिम्बकरूपतया ।

**भवेद्यस्य प्रतिच्छाया छिन्ना भिन्नाऽधिकाऽऽकुला ।**
**विशिरा द्विशिरा जिह्मा विकृता यदि वाऽन्यथा ॥ ४४ ॥**
**तं समाप्तायुषं विद्यान्न चेल्लक्ष्यनिमित्तजा ।**

भवेदिति । यस्य पुंसः प्रतिच्छाया छिन्ना द्विधा दृश्यते । अथवा भिन्ना किञ्चित्सच्छिद्रेव यस्य दृश्यते । तथा यस्याऽधिका दृश्यते न यथाप्रमाणा । यस्य वा आकुला चलस्वरूपा अनिश्चितप्रतिबिम्बा भवति । तथा यस्य विशिरा शिरोरहिता । तथा यस्य द्विशिरा । तथा यस्य जिह्मा कुटिला । विकृतेत्यादि । उक्तप्रकारादन्यथाऽन्येन प्रकारेण यस्य विकृता दृश्यते आतपादर्शतोयादौ तं पूर्वोक्तं च सर्वमेव समाप्तायुषं क्षीणजीवितं विद्यात् । न चेदित्यादि । लक्षयितुं प्रत्यक्षादिभिः प्रमाणैः शक्यं लक्ष्यम् । 'शक्यार्थे कृत्यः' । लक्ष्यं च तन्निमित्तं च तस्मात्तथाविधान्निमित्ताद्विकृता छाया यदि न भवति तदा रिष्टं नान्यथा ।

**प्रतिच्छायामयी यस्य न चाक्ष्णीक्ष्येत कन्यका ॥ ४५ ॥**

प्रतीति । प्रतिच्छायामयी कन्यका प्रतिबिम्बकुमारिकेति या लोके प्रसिद्धा साऽक्षिणि नेत्रे यस्य नेक्ष्येत नोपलभ्येत तं समाप्तायुषं विद्यात् ।

इदानीं यस्य महाभूतस्य कीदृशी छाया स्यात् तां कथयितुमाह—

**खादीनां पञ्च पञ्चानां छाया विविधलक्षणाः ।**

खादीनां महाभूतानां पञ्चानां पञ्च छाया भवन्ति । ननु खादीनां पञ्चत्वमर्थाल्लब्धमेव तत्किं पञ्चग्रहणेन ? अस्त्वेवैतत्, किन्तु यथा खादिभ्यः पञ्चभ्यो द्रव्यमेकं भूतोत्कर्षापकर्षभेदेनासङ्ख्येयं द्रव्यं तथा छायानामप्येकत्वं भूतोत्कर्षापकर्षभेदाच्चासङ्ख्येयत्वमाशङ्क्य तदाशङ्कानिवृत्त्यर्थं पञ्चग्रहणम् । पञ्चैव छाया भवन्ति नोनाधिका इति । किम्भूताश्छायाः ? विविधलक्षणाः । विविधं लक्षणं वक्ष्यमाणं यासां ता एवम् ।

**नाभसी निर्मलाऽऽनीला सस्नेहा सप्रभेव च ॥ ४६ ॥**

आकाशजा छाया निर्मला शुद्धा । तथा आनीला ईषन्नीलेत्याकारप्रश्लेषोऽत्र वेद्यः । शुद्धवैदूर्यविमला हि तोयजेति वक्ष्यति । तथा किञ्चित्स्निग्धा । सप्रभेत्यनेन शोभनत्वमुक्तम् । एतदेव स्फुटयितुमिवशब्दस्तन्त्रकृता प्रयुक्तः । अन्यथा छायाप्रभयोर्भिन्नविषयत्वादनुपपन्नमेतद्वाक्यं स्यात् । भेदश्चानयोरधुनैव वक्ष्यति ।

**वाताद्रजोऽरुणा श्यावा भस्मरूक्षा हतप्रभा ।**
**विशुद्धरक्ता त्वाग्नेयी दीप्ताभा दर्शनप्रिया ॥ ४७ ॥**
**शुद्धवैदूर्यविमला सुस्निग्धा तोयजा सुखा ।**
**स्थिरा स्निग्धा घना शुद्धा श्यामा श्वेता च पार्थिवी ॥४८॥**

वातादिति। वाताद्रजोरुणादियुक्ता छाया भवति। आग्नेयी विशुद्धरक्तवर्णा दीप्ताभा तथा दर्शनं प्रियं यस्याः सैवंविधा भवति। तोयजा छाया निर्मलवैदूर्यविमला सुस्निग्धा सुखा सुखावहा। पार्थिवी छाया स्थिरादिगुणयुक्ता। ननु चाग्निजलभुवां स्वयं वर्णादियोगादाग्नेय्यादिकानां तद्वर्णकत्वमुपपन्नम्, नभोमारुतयोस्तु स्वयं वर्णाद्ययोगात्कथं तच्छायानां वर्णादियोगो युज्येतेति केचित्? तान् ब्रूमहे अचिन्त्यत्वाद्धेतुफलस्यादोषः। तथा हि। मधुरादयो रसाः कालादमूर्ताद्भवन्ति ते दृश्यन्ते यथा तथा तच्छाये अप्यते भविष्यतः। तत्र यस्य नरस्य कर्मादिसहायं नभश्छायामुत्पादयति तस्य नाभसीति युज्यत एव। एवं वायव्यामपि वाच्यम्।

इदानीमासां छायानां गुणनिर्देशमाह—

**वायवी रोगमरणक्लेशायान्याः सुखोदयाः।**

वायवी छाया रोगाद्यर्थं जायते। अन्याश्छायाः सुखोदयाः सुखावहाः।

**प्रभोक्ता तैजसी सर्वा सा तु सप्तविधा स्मृता॥ ४९॥**

प्रभा सर्वा सप्तप्रकाराऽपि तैजस्याग्नेय्युक्ता तन्त्रकृद्भिः स्मृता।

तदेव सप्तविधत्वमाह—

**रक्ता पीता सिता श्यामा हरिता पाण्डुराऽसिता।**
**तासां याः स्युर्विकासिन्यः स्निग्धाश्च विमलाश्च याः॥५०॥**
**ताः शुभा मलिना रूक्षाः संक्षिप्ताश्चाशुभोदयाः।**

रक्तेति। तासामित्यादि। तासां पूर्वोक्तानां प्रभाणां मध्याद्याः प्रभा विकासिन्यः प्रसृता इव तथा स्निग्धा विमलाश्च स्युस्ताः शुभाः कल्याणकारिण्यः। याश्च मलिनादिगुणयुक्तास्ता अशुभोदया अमाङ्गल्यकारिण्यः।

छायाप्रभयोरन्यत्वं दर्शयितुं लक्षणमाह—

**वर्णमाक्रामति च्छाया प्रभा वर्णप्रकाशिनी॥ ५१॥**

छाया रक्तादिवर्णमाक्रामति परिभूयावतिष्ठते। प्रभा तु वर्णप्रकाशिनी—रक्तादिवर्णं प्रकाशयितुं शीलमस्याः सा वर्णप्रकाशिनी।

तथेदमपि छायाप्रभयोरन्यत्वे लक्षणमाह—

**आसन्ने लक्ष्यते छाया विकृष्टे भा प्रकाशते।**

निकटे छाया लक्ष्यते। प्रभा पुनर्विकृष्टे दूरप्रदेशे प्रकाशते। यथा पाषाणादिपरिपूर्णानामपि पर्वतादिप्रदेशानां दूराद्विलक्षणैव कान्तिः प्रकाशते।

एवं छायाप्रभयोरन्यत्वं प्रदर्श्य तयोरेवं व्याप्तिं प्रदर्शयति—

**नाऽच्छायो नाऽप्रभः कश्चिद्विशेषाश्चिह्नयन्ति तु॥ ५२॥**
**नृणां शुभाशुभोत्पत्तिं काले छायासमाश्रयाः।**

नेति। कश्चिदपि पुरुषश्छायारहितः प्रभाहीनश्च नास्ति। विशेषास्तु नृणां

शुभाशुभोत्पत्तिं काले विशिष्टं चिह्नयन्ति व्यञ्जयन्तीत्यर्थः। किम्भूता विशेषाः? छायांसमाश्रयाश्छायाऽऽश्रिताः।

**निकषन्निव यः पादौ च्युतांसः परिसर्पति ॥ ५३ ॥**

निकषन्निति। निकषन् घर्षयन्निव यः पादौ च्युतांसः स्रस्तांसः सन् भूमौ परिसर्पति। तथा ये वक्ष्यमाणाश्च ते सर्वे समवर्तिनो यमस्य वशगा इति योज्यमन्तकालकारित्वादस्य।

**हीयते बलतः शश्वद्योऽन्नमश्नन् हितं बहु।**
**योऽल्पाशी बहुविण्मूत्रो बह्वाशी चाल्पमूत्रविट् ॥ ५४ ॥**
**योऽल्पाशी वा कफेनार्तो दीर्घं श्वसिति चेष्टते।**
**दीर्घमुच्छ्वस्य यो ह्रस्वं निःश्वस्य परिताम्यति ॥ ५५ ॥**
**ह्रस्वं च यः प्रश्वसिति व्याविद्धं स्पन्दते भृशम्।**
**शिरो विक्षिपते कृच्छ्राद्योऽञ्चयित्वा प्रपाणिकौ ॥ ५६ ॥**
**यो ललाटात्स्रुतस्वेदः श्लथसन्धानबन्धनः।**
**उत्थाप्यमानः सम्मुह्येद्यो बली दुर्बलोऽपि वा ॥ ५७ ॥**
**उत्तान एव स्वपिति यः पादौ विकरोति च।**
**शयनासनकुड्यादौ योऽसदेव जिघृक्षति ॥ ५८ ॥**
**अहास्यहासी सम्मुह्यन् यो लेढि दशनच्छदौ।**

हीयत इति। तथा योऽन्नमश्नन् भक्तं भक्षयन् बलान्नित्यं हीयते। किम्भूतमन्नम्? हितं पथ्यम्। बहु भूरि। योऽल्पाशी बहुविण्मूत्रो यश्च बह्वाशी बह्वश्नाति नित्यमल्पविण्मूत्रश्च। यश्चाऽल्पाशी कफेनार्तः पीडितो दीर्घं श्वसिति बहुश्वासं मुञ्चति। तथा चेष्टते परिलुठति। तथा यो दीर्घमुच्छ्वस्य बहूर्ध्वं श्वासं मुक्त्वाऽनन्तरं ह्रस्वं निःश्वस्याल्पं श्वासं प्रवर्त्यावृत्तमन्तः कृत्वा परिताम्यति दुःखायते। यश्च ह्रस्वं प्रश्वसिति। व्याविद्धं विषमं कृत्वा नाडीभिः स्पन्दते भृशमतिशयेन स्फुरति। यः प्रपाणिकौ पाण्योः पश्चाद्भागस्थिताववयवविशेषावञ्चयित्वा कृच्छ्रेण शिरोमूर्धानं विक्षिपते। यो ललाटादलिकात् स्रुतस्वेदः सन् शिथिलसन्धिबन्धो भवति। य उत्थाप्यमानो बली दुर्बलो वा सम्मुह्येन्मोहमुपैति। य उत्तान एव वा जातुचित्पार्श्वे न स्वपिति। यश्च पादौ विकरोति विकृतिं नयति। यः शयनादावसदविद्यमानमेव वस्तु ग्रहीतुमिच्छति। य अहास्ये हास्यविषयाऽभावेऽप्यभीक्ष्णं हसन् सम्मुह्यन् दशनच्छदौ लेढि जिह्वया परिमृशति।

**उत्तरोष्ठं परिलिहन् फूत्कारांश्च करोति यः ॥ ५९ ॥**
**यमभिद्रवति च्छाया कृष्णा पीताऽरुणाऽपि वा।**
**भिषग्भेषजपानान्नगुरुमित्रद्विषश्च ये ॥ ६० ॥**





**वशगाः सर्व एवैते विज्ञेयाः समवर्तिनः।**

उत्तरोष्ठमिति। यश्चोत्तरोष्ठं परिलिहन् फूत्कारान्नानाविधान् शब्दान् करोति। यं नरं छायाऽभिद्रवत्यभिभवति। कीदृशी? कृष्णा पीताऽरुणापि वा। ये च भिषगादिद्विषः। एते सर्वे समवर्तिनो वशगा विज्ञेयाः। समं वर्तते रागद्वेषौ हित्वा समवर्ती यमः। सर्व एवेत्येतद् 'निकषन्निव यः पादौ' इत्यत आरभ्य यावद् 'भिषग्भेषजपानान्नगुरुमित्रद्विषश्च ये' इत्येतत्पर्यन्तस्य ग्रन्थस्य सम्बन्धार्थम्।

**ग्रीवाललाटहृदयं यस्य स्विद्यति शीतलम्॥ ६१॥**
**उष्णोऽपरः प्रदेशश्च शरणं तस्य देवता।**

ग्रीवेति। यस्य ग्रीवादिकं शीतलं सत् स्विद्यति स्वेदयुक्तं भवति। अपरः प्रदेशश्चोष्णस्तस्य शरणं रक्षणं देवता नान्यत्।

**योऽणुज्योतिरनेकाग्रो दुश्छायो दुर्मनाः सदा॥ ६२॥**
**बलिं बलिभृतो यस्य प्रणीतं नोपभुञ्जते।**
**निर्निमित्तं च यो मेधां शोभामुपचयं श्रियम्॥ ६३॥**
**प्राप्नोत्यतो वा विभ्रंशं स प्राप्नोति यमक्षयम्।**

य इति। यः पुमानणुज्योतिः तिरस्तोकदृक्। केचित्स्वल्पतेजा इत्याहुः। तथा अनेकाग्रो व्याकुलचेताः। दुश्छायो विवर्णच्छायो निन्दितकान्तिर्वा। सदा दुर्मनाः सततमेव शोकाक्रान्तमानसः। तथा यस्य पुंसो बलिं प्रणीतं येन प्रदत्तं बलिभृतो बलिभुजो वायसादयो नोपभुञ्जते न खादन्ति स यमक्षयं प्राप्नोतीति सम्बन्धः। बलिभृत इत्यतिशयार्थम्। किल काका अपि नाऽदन्ति किंपुनरन्य इत्यर्थः। तथा यो नरो निर्निमित्तं मेधादिजननरसायनादिकारणमन्तरेण मेधादीन् प्राप्नोत्यतो वा मेधादिभ्यो भ्रंशं प्राप्नोति सोऽन्तकगृहं प्राप्नोति। श्रीरत्र धनं राज्यं वा। उपचयः शरीरपुष्टिः।

**गुणदोषमयी यस्य स्वस्थस्य व्याधितस्य वा॥ ६४॥**
**यात्यन्यथात्वं प्रकृतिः षण्मासान्न स जीवति।**

यस्य नरस्य गुणमयी सत्वादिमयी प्रकृतिर्दोषमयी वातादिमयी स्वस्थस्याऽऽतुरस्य वाऽन्यथात्वं याति स्वभावं हित्वा स षण्मासान्न जीवति।

**भक्तिः शीलं स्मृतिस्त्यागो बुद्धिर्बलमहेतुकम्॥ ६५॥**
**षडेतानि निवर्तन्ते षड्भिर्मासैर्मरिष्यतः।**
**मत्तवद्गतिवाक्कम्पमोहा मासान्मरिष्यतः॥ ६६॥**

भक्तिरिति। षड्भिर्मासैर्मरिष्यतो नरस्य भक्त्यादीनि षड् अहेतुकं कारणमन्तरेण निवर्तन्ते। अहेतुकमिति निवर्तनक्रियाविशेषणम्। षडिति नियमार्थम्। यदा षडपि निवर्तन्ते नैकैकं तदा रिष्टमित्यर्थः। मासेन मरिष्यतो मत्तवन्मत्तस्यैव गतिवाक्कम्पमोहा भवन्ति।

**नश्यत्यजानन् षडहात्केशलुञ्चनवेदनाम् ।**
**न याति यस्य चाहारः कण्ठं कण्ठामयादृते ॥ ६७ ॥**
**प्रेष्याः प्रतीपतां यान्ति प्रेताकृतिरुदीर्यते ।**
**यस्य निद्रा भवेन्नित्यं नैव वा न स जीवति ॥ ६८ ॥**
**वक्त्रमापूर्यतेऽश्रूणां स्विद्यतश्चरणौ भृशम् ।**
**चक्षुश्चाकुलतां याति यमराज्यं गमिष्यतः ॥ ६९ ॥**
**यैः पुरा रमते भावैररतिस्तैर्न जीवति ।**

नश्यतीति । कचोत्पाटनपीडामविन्दन् षडहान्नश्यति । यस्याहारः कण्ठामयं विना कण्ठं न याति स च षडहान्तरे म्रियते । प्रेष्या भृत्या यस्य प्रतीपतां वैपरीत्यं यान्ति स नश्यति । यश्च प्रेताकार उपलक्ष्यते सोऽपि न जीवति । यस्य नरस्य नित्यं सततं निद्रा भवति यस्य नैव वा न कदाचिदपि निद्रा भवति स न जीवति । यस्य नरस्याऽस्राणामश्रुस्रोतसां मुखं द्वारमापूर्यते स न जीवति । यस्य चरणौ भृशमत्यर्थं निर्निमित्तं स्विद्यतः स न जीवति । चक्षुरित्यादि । यमराज्यं यास्यतो नयनमाकुलत्वं याति । यैर्भावैः पदार्थैः पुरा पूर्वं रमते सुखायते तैः पदार्थैर्न रतिर्भवति यस्य स न जीवति ।

**सहसा जायते यस्य विकारः सर्वलक्षणः ॥ ७० ॥**
**निवर्तते वा सहसा सहसा स विनश्यति ।**

सहसेति । यस्य पुंसो विकारो ज्वरादिः सहसा कारणं विना सर्वलक्षणः सकललिङ्गोपेतो जायते । अथवा तादृशो विकारः सहसा शीघ्रमेव निवर्तते नश्यति स पुरुषः अचिरादेव विनश्यति ।

अधुना प्रतिरोगं रिष्टं वक्तुं सर्वव्याधिप्रधानस्य ज्वरस्यैव तावद्विकृतिं लिलक्षयिषुराह—

**ज्वरो निहन्ति बलवान् गम्भीरो दैर्घरात्रिकः ॥ ७१ ॥**
**सप्रलापभ्रमश्वासः क्षीणं शूनं हतानलम् ।**
**अक्षामं सक्तवचनं रक्ताक्षं हृदि शूलिनम् ॥ ७२ ॥**
**संशुष्ककासः पूर्वाह्णे योऽपराह्णेऽपि वा भवेत् ।**
**बलमांसविहीनस्य श्लेष्मकाससमन्वितः ॥ ७३ ॥**

ज्वरो बलवानित्यादिलक्षणः क्षीणादिलक्षणं पुरुषं हन्ति । बलवान् हेत्वादिभिर्बलवद्भिर्युतो गम्भीरोऽशेषधात्वन्तर्गतः । दैर्घरात्रिको दीर्घकालानुबन्धी । अन्ये तु रात्रिजागरकारीत्याहुः । दीर्घा हि जागरतो रात्रिः । तथा चोक्तम्— 'दीर्घं श्रान्तस्य यो ज्वर' इति । तथा प्रलापादियुक्तः । कीदृशमातुरम् ? क्षीणं धातुक्षययुक्तम् । तथा अक्षामं अकृशम् । तथा रक्तनेत्रं हृदयशूलान्वितं हन्तीति योज्यम् । यश्च ज्वरः संशुष्ककासः पूर्वाह्णेऽथवाऽपराह्णे भवेत्स द्विविधोऽपि

हन्ति। तथा यः श्लेष्मकाससमन्वितो ज्वरो बलमांसविहीनस्य पुंसः स्यात् स तं निहन्तीति रिष्टत्रयमेतत्। ननु च "हेतुभिर्बलिभिर्युक्तो बहुभिर्बहुलक्षणः। ज्वरःप्राणान्तकृच्चश्च शीघ्रमिन्द्रियनाशन" इत्येष ज्वरस्य रिष्टप्रकारः कस्मान्नोक्तः? उच्यते। उक्तप्राय एवायं बलवानिति वचनात्।

रक्तपित्तविकृतिलक्षणं रिष्टमधिकृत्याह—

**रक्तपित्तं भृशं रक्तं कृष्णमिन्द्रधनुःप्रभम्।**
**ताम्रहारिद्रहरितं रूपं रक्तं प्रदर्शयेत्॥ ७४॥**
**रोमकूपप्रविसृतं कण्ठास्यहृदये सजत्।**
**वाससो रञ्जनं पूति वेगवच्चातिभूरि च॥ ७५॥**
**वृद्धं पाण्डुज्वरच्छर्दिकासशोफातिसारिणम्।**

रक्तपित्तमिति। रक्तपित्तमीदृग्रूपं कर्तृभूतं नरं हन्ति। कीदृक्? भृशमत्यर्थं रक्तं लोहितम्। तथा अतिकृष्णम्। भृशशब्दो हि द्वयोरपि युज्यते। तथेन्द्रधनुःप्रभं नानावर्णमित्यर्थः। क्लिदशे रक्तपित्ते रसमेदोमज्जादिमिश्रस्य रक्तस्य स्रवणान्नानावर्णत्वं सम्पद्यते। यच्च रक्तपित्तं कर्तृ ताम्रहारिद्रहरितं रक्तं च रूपं दृश्यमानं वा प्रदर्शयेत्तन्निहन्ति। यच्च रक्तपित्तं विनापि व्रणैं रोमकूपेभ्यः समस्तेभ्यः प्रकर्षेण विसृतं जातं प्रवृत्तं तच्च निहन्ति। तथा कण्ठे मुखे हृदये च तुल्यकालं सजत् संश्लिष्यत् सानुषङ्गं तच्च हन्ति। वासस इत्यादि। वाससो अरञ्जनमित्यकारप्रश्लेषोऽत्र बोध्यः। वस्त्रस्य हि जीवशोणितं शुद्धशोणितरूपत्वान्न रञ्जकमतस्तेन रक्तं वस्त्रं समनन्तरं प्रक्षालितं शुद्धं सम्पद्यते न रागयुक्तम्। तथा ह्यस्मिन् व्याधौ रक्तपित्ताभ्यां परस्परमविभागापन्नत्वाद्वस्त्रस्य रञ्जनं प्राप्तम्। रक्तेन हि पित्तसहितेन वासो रज्यते नैतद्धौतं शुद्धं सम्पद्यते। तथा चोक्तम्—"शुद्धं वा भावितं वस्त्रमवानं कोष्णवारिणा। प्रक्षालितं विवर्णं स्यात्पित्तं शुद्धं तु शोणितम्"। तथा पूति दुर्गन्धि। तद्धि धातूनुपक्लेदयति। उपक्लिन्नानां धातूनामत्यर्थं दुष्टत्वं चेति निहन्त्येव। तथा वेगवद्वेगेन निर्गत्य रुद्धं पुनर्वेगेन प्रवर्तत इति। तथा भूरि प्रभूतम्। एवंविधं च रक्तपित्तं निहन्ति। वृद्धमुद्रिक्तं रक्तपित्तं सत् पाण्ड्वादियुतं नरं हन्ति।

**कासश्वासौ ज्वरच्छर्दितृष्णातीसारशोफिनम्॥ ७६॥**

कासेति। कासश्वासौ ज्वरादिपञ्चविधोपद्रवोपेतं निहत इति वचनविपरिणामेन सम्बन्धः।

**यक्ष्मा पार्श्वरुजानाहरक्तच्छर्द्यंसतापिनम्।**

यक्ष्मेति। यक्ष्मा राजयक्ष्मा पार्श्वरुजादियुतं नरं हन्ति।

**छर्दिर्वेगवती मूत्रशकृद्गन्धिः सचन्द्रिका॥ ७७॥**
**सास्रविट्पूयरुक्कासश्वासवत्यनुषाङ्गिणी।**



छर्दिरिति। छर्दिर्हन्तीति। कीदृक्? वेगवती महता वेगेन प्रवर्तमाना। मूत्रशकृतोरिव गन्धो यस्याः सा। 'उपमानाच्चेति गन्धस्येदादेशः'। तथा सचन्द्रिका जले तैलबिन्दुस्थाना चन्द्रिकोच्यते। तथा सहास्रेण वर्तते विट् सास्रविट्। सास्रविट् च पूयश्च रुक् च कासश्च श्वासश्च ते विद्यन्ते यस्याः सैवम्। तथा अनुषङ्गिणी दीर्घकालानुवर्तिनी।

**तृष्णाऽन्यरोगक्षपितं बहिर्जिह्वं विचेतनम्॥ ७८॥**

तृष्णेति। तृष्णेदृशं नरं हन्ति। कीदृशम्? अपररोगेण क्षपितं कर्षितम्। बहिर्जिह्वं बाह्यतो जिह्वां निःसारयन्तम्। तथा विचेतनम्। एतत्समुदितं रिष्टलक्षणम्।

**मदात्ययोऽतिशीतार्तं क्षीणं तैलप्रभाननम्।**

मदात्ययोऽतिशयेन शीतपीडितं क्षीणं तैलप्रभमुखं च नरं हन्ति।

**अर्शांसि पाणिपन्नाभिगुदमुष्काऽऽस्यशोफिनम्॥ ७९॥**
**हृत्पार्श्वाङ्गरुजाछर्दिपायुपाकज्वरातुरम्।**

अर्शांसीति। अर्शांसि पाण्यादिशोफयुतं हृदादिरुजाद्यातुरं नरं घ्नन्तीति वचनविपरिणामेन सम्बन्धः। हृदयादीनां रुजा सम्बन्धः। हृत्पार्श्वाङ्गरुजा च छर्दिश्च पायुपाकश्च ज्वरश्च तैरातुरं पीडितम्।

अतीसारविकृतिमाह—

**अतीसारो यकृत्पिण्डमांसधावनमेचकैः॥ ८०॥**
**तुल्यस्तैलघृतक्षीरदधिमज्जवसाऽऽसवैः।**
**मस्तुलुङ्गमषीपूयवेसवाराम्बुमाक्षिकैः॥ ८१॥**

अतीसार इति। अतीसारो यकृत्पिण्डादिभिर्माक्षिकान्तैस्तुल्यो हन्ति। मेचको नीलवर्णः।

**अतिरक्तासितस्निग्धपूत्यच्छघनवेदनः।**
**कर्बुरः प्रस्रवन् धातून् निष्पुरीषोऽथवाऽतिविद्॥ ८२॥**
**तन्तुमान् मक्षिकाक्रान्तो राजीमांश्चन्द्रकैर्युतः।**
**शीर्णपायुवलिं मुक्तनालं पर्वास्थिशूलिनम्॥ ८२॥**
**स्रस्तपायुं बलक्षीणमन्नमेवोपवेशयेत्।**
**सतृट्श्वासज्वरच्छर्दिदाहानाहप्रवाहिकः॥ ८४॥**

अतिरक्तेति। अतिरक्तासितस्निग्धपूत्यच्छश्चासौ घनवेदनश्चेति कर्मधारयः। कर्बुरो नानावर्णः। कस्मात्पुनरनेकवर्णः? यस्माद्धातून् रक्तमांसादीन्स्रवति। अत एवाह। धातून् प्रस्रवन्। लक्षणे शतृप्रत्ययः। धातुप्रस्रवणेन हेतुना नानावर्णत्वं लक्ष्यते। तथा निष्पुरीषः पुरीषरहितः। अथवाऽतिविड् बहुपुरीषः। तथा तन्तुमान् मक्षिकाक्रान्तो राजीमांश्चन्द्रकैर्युतश्च। ईदृशोऽतीसारो वक्ष्यमाणं नरं

हन्ति। शीर्णा गुदवलयो यस्य तमामुक्तो नालो नालक इव यस्य तं मुक्तनालं मुक्तबन्धनमित्यर्थः। तथा पर्वास्थिशूलो विद्यते यस्य तम्। तथा स्रस्तपायुं स्थानाच्च्युतगुदम्। तथा बलेन क्षीणम्। पुनः प्रकृतत्वादतीसारो विशिष्यते। अन्नमेवापक्वमुपवेशयन्सह तृडादिभिः सप्तभिरुपद्रवैर्युक्तः पूर्वोक्तविशेषणमातुरं हन्ति।

**अश्मरी शूनवृषणं बद्धमूत्रं रुजार्दितम्।**

अश्मरी शूनवृषणादियुक्तं नरं हन्ति।

**मेहस्तृड्दाहपिटिकामांसकोथातिसारिणम्॥ ८५॥**

मेहः प्रमेहस्तृडाद्युपद्रवयुक्तं नरं हन्ति।

**पिटिका मर्महृत्पृष्ठस्तनांसगुदमूर्धगाः।**
**पर्वपादकरस्था वा मन्दोत्साहं प्रमेहिणम्॥ ८६॥**
**सर्वं च मांससङ्कोचदाहतृष्णामदज्वरैः।**
**विसर्पमर्मसंरोधहिध्माश्वासभ्रमक्लमैः॥ ८७॥**

पिटिकेति। पिटिका मर्मादिगा अथवा पर्वादिस्था मन्दोत्साहं प्रमेहातुरं घ्नन्ति। सर्वं च नरं मांससङ्कोचादिभिः क्लमान्तैर्युक्तं पिटिका घ्नन्ति।

**गुल्मः पृथुपरीणाहो घनः कूर्म इवोन्नतः।**
**सिरानद्धो ज्वरच्छर्दिहिध्माध्मानरुजान्वितः॥ ८८॥**
**कासपीनसहृल्लासश्वासातीसारशोफवान्।**

गुल्मेति। गुल्मः पृथुपरीणाहो यावच्छोफवान् हन्ति नरम्।

इदानीमुदरव्याधिनिमित्तं रिष्टमाह—

**विण्मूत्रसङ्ग्रहश्वासशोफहिध्माज्वरभ्रमैः॥ ८९॥**
**मूर्छाछर्द्यतिसारैश्च जठरं हन्ति दुर्बलम्।**
**शूनाक्षं कुटिलोपस्थमुपक्लिन्नतनुत्वचम्॥ ९०॥**
**विरेचनहृतानाहमानह्यन्तं पुनः पुनः।**

विडिति। विण्मूत्रादिभिरतीसारान्तैरुपद्रवैर्हेतुभूतैर्जठरं च कर्तृभूतमातुरं हन्ति। कीदृशम्? दुर्बलं हीनबलम्। तथा शूने अक्षिणी यस्य तम्। 'बहुव्रीहौ सक्थ्यक्ष्णोरिति षच्'। कुटिल उपस्थो बस्तिमेढ्रवृषणादिरूपो यस्य तम्। तथा उपक्लिन्ने देहत्वचौ यस्य तम्। विरेचनेन हृत आनाहो यस्य तम्। मुहुर्मुहुरानह्यन्तम्।

पाण्डुरोगरिष्टमाह—

**पाण्डुरोगः श्वयथुमान् पीताक्षिनखदर्शनम्॥ ९१॥**

पाण्डुरोगः श्वयथुयुतः पीताक्षिनखदर्शनमातुरं हन्ति।

शोफरिष्टं ब्रूते—

**तन्द्रादाहारुचिच्छर्दिमूर्छाध्मानातिसारवान्।**



अनेकोपद्रवयुतः पादाभ्यां प्रसृतो नरम् ॥ ६२ ॥
नारीं शोफो मुखाद्धन्ति कुक्षिगुह्यादुभावपि ।
राजीचितः स्रवंश्छर्दिज्वरश्वासातिसारिणम् ॥ ६३ ॥

तन्द्रेति । तन्द्रादियुक्तः शोफोऽनेकैरुपद्रवैर्ज्वरश्वासादिभिर्युतः पादतः प्रसृतो नरं हन्ति । मुखात्प्रसृतः शोफः पूर्वोक्तविशेषणयुक्तो नारीं हन्ति । कुक्षिगुह्यात्प्रसृत उभावपि स्त्रीपुंसौ हन्ति । तथा राजीचिता यथास्वदोषवर्णाभी रेखाभिर्व्याप्तस्तथा स्रवन् यथादोषं स्रुतिं कुर्वन् छर्द्यादियुतं पुरुषं हन्ति ।

ज्वरातिसारौ शोफान्ते श्वयथुर्वा तयोः क्षये ।
दुर्बलस्य विशेषेण जायन्तेऽन्ताय देहिनः ॥ ६४ ॥

ज्वरेति । ज्वरातिसारौ स्वतन्त्रस्य शोफस्यान्तेऽवसाने जायेते । अथवा श्वयतुस्तयोर्ज्वरातिसारयोः क्षये जायते । एवं ज्वरातिसारशोफा यस्य शरीरिणो जायन्ते तस्य तेऽन्ताय मृत्यवे जायन्ते । दुर्बलस्य विशेषेणान्ताय शीघ्रकारित्वात् ।

श्वयथुर्यस्य पादस्थः परिस्रस्ते च पिण्डिके ।
सीदतः सक्थिनी चैव तं भिषक् परिवर्जयेत् ॥ ६५ ॥

श्वयथुरिति । श्वयथुः पादस्थो यस्य पिण्डिके च परिस्रस्ते स्थानाच्च्युते सक्थिनी च सीदतः सादं गच्छतस्तं तादृशं नरं वैद्यो वर्जयेत् ।

आननं हस्तपादं च विशेषाद्यस्य शुष्यतः ।
शूयेते वा विना देहात्समासाद्याति पञ्चताम् ॥ ६६ ॥

आननमिति । मुखं हस्तचरणं च यस्यैते विशेषेण शुष्यन्ति देहं विना वा यस्य शूयन्ते स आतुरो मासेन पञ्चतां पञ्चमहाभूतसमत्वं याति ।

विसर्पः कासवैवर्ण्यज्वरमूर्छाङ्गभङ्गवान् ।
भ्रमास्यशोषहृल्लासदेहसादातिसारवान् ॥ ६७ ॥

विसर्प इति । विसर्पः कासादिमान् हन्ति ।

कुष्ठं विशीर्यमाणाङ्गं रक्तनेत्रं हतस्वरम् ।
मन्दाग्निं जन्तुभिर्जुष्टं हन्ति तृष्णातिसारिणम् ॥ ६८ ॥

कुष्ठमिति । कुष्ठं च कर्तृ विशीर्यमाणाङ्गं रक्तनेत्रादियुक्तं नरं हन्ति । विशीर्यमाणाङ्गं कोथवच्छरीरम् ।

वायुः सुप्तत्वचं भग्नं कफशोफरुजातुरम् ।
वातास्रं मोहमूर्छायमदस्वप्नज्वरान्वितम् ॥ ६६ ॥
शिरोग्रहारुचिश्वाससङ्कोचस्फोटकोथवत् ।
शिरोरोगोऽरुचिश्वासमोहविड्भेदतृड्भ्रमैः ॥ १०० ॥

वायुरिति । वायुः सुप्तत्वगादियुक्तं नरं हन्ति । वातास्रं मोहादियुतं हन्ति । कीदृशम् ? शिरोग्रहादियुक्तम् । शिरोरोगाऽरुच्यादिभिर्युक्तं नरं हन्ति ।



घ्नन्ति सर्वामयाः क्षीणस्वरधातुबलानलम्।
घ्नन्तीति। सर्वे च ते आमयश्च ते क्षीणस्वरादिकं नरं घ्नन्ति।

वातव्याधिरपस्मारी कुष्ठी रक्त्युदरी क्षयी॥ १०१॥
गुल्मी मेही च तान् क्षीणान् विकारेऽल्पेऽपि वर्जयेत्।
वाताख्यो व्याधिर्यस्य स नरस्तथाऽपस्मारवान् कुष्ठवान् रक्तपित्ती जठरी क्षयवान् गुल्मवान् प्रमेही च तानेतान् नरान् क्षीणान्सतोऽल्पेऽपि विकारे सति वर्जयेत्।

बलमांसक्षयस्तीव्रो रोगवृद्धिररोचकः॥ १०२॥
यस्यातुरस्य लक्ष्यन्ते त्रीन् पक्षान्न स जीवति।
बलेति। बलमांसयोरत्यन्तं क्षयो रोगस्य वृद्धिस्तथाऽरोचक एते यस्याऽऽतुरस्य लक्ष्यन्त उपलभ्यन्ते स त्रीन् पक्षान्सार्धं मासं न जीवति।

वाताष्ठीलाऽतिसंवृद्धा तिष्ठन्ती दारुणा हृदि॥ १०३॥
तृष्णया तु परीतस्य सद्यो मुष्णाति जीवितम्।
वातेति। वाताष्ठीलाऽत्यन्तं प्रवृद्धा हृदि तिष्ठन्ति दारुणाऽतिरुक्करी तृषायुक्तस्य पुंसः शीघ्रमेव जीवितहारिणी भवति।

शैथिल्यं पिण्डिके वायुर्नीत्वा नासां च जिह्मताम्॥ १०४॥
क्षीणस्यायम्य मन्ये वा सद्यो मुष्णाति जीवितम्।
शैथिल्यमिति। वायुः पिण्डिके शैथिल्यं नीत्वा तथा नासां जिह्मतां कुटिलतां नीत्वा तथा क्षीणस्य नरस्य मन्ये आयम्याऽऽयामयित्वा द्राग् जीवितं मुष्णाति।

नाभीगुदान्तरं गत्वा वङ्क्षणौ वा समाश्रयन्॥ १०५॥
गृहीत्वा पायुहृदये क्षीणदेहस्य वा बली।
मलान् बस्तिशिरो नाभिं विबद्ध्य जनयन् रुजम्॥ १०६॥
कुर्वन् वङ्क्षणयोः शूलं तृष्णां भिन्नपुरीषताम्।
श्वासं वा जनयन् वायुर्गृहीत्वा गुदवङ्क्षणम्॥ १०७॥
नाभीति। वायुर्वा नाभीगुदयोरन्तरं मध्यं गत्वा वङ्क्षणौ समाश्रयन् जीवितं मुष्णाति। बली वा पवनः पायुं हृदयं च गृहीत्वाऽवष्टभ्य क्षीणदेहस्य पुंसः सद्यो मुष्णाति जीवितम्। वायुर्मलान् विबद्ध्य सन्निरुद्ध्य बस्तिशिरो नाभिं च विबद्ध्य रुजं जनयन् सद्यो मुष्णाति जीवितम्। वायुर्वङ्क्षणयोः शूलं तथा तृष्णां कुर्वन् भिन्नपुरीषतां च विदधदथवा श्वासं जनयन् गुदं वङ्क्षणौ च गृहीत्वा सद्यो मुष्णाति जीवितम्।

वितत्य पर्शुकाग्राणि गृहीत्वोरश्च मारुतः।
स्तिमितस्याततात्तस्य सद्यो मुष्णाति जीवितम्॥ १०८॥
वितत्येति। मारुतः पर्शुकानां पार्श्वास्थ्नामग्राणि प्रान्तानि वितत्य प्रसार्य

तथेत्रो वक्षो गृहीत्वा स्तिमितस्याऽऽर्द्रतां गतस्य सस्वेदस्य निश्चलस्य वा तथा आतताक्षस्य प्रसारितनेत्रस्य सद्यो मुष्णाति जीवितम् ।

**सहसा ज्वरसन्तापस्तृष्णा मूर्च्छा बलक्षयः ।**
**विश्लेषणं च सन्धीनां मुमूर्षोरुपजायते ॥ १०६ ॥**

सहसेति । सहसा झटित्येव ज्वरसन्तापस्तथा तृष्णा मूर्च्छा बलक्षयः सन्धिविश्लेषश्चेत्येतन्मुमूर्षोः सद्यो मरिष्यतो जायते ।

**गोसर्गे वदनाद्यस्य स्वेदः प्रच्यवते भृशम् ।**
**लेपज्वरोपतप्तस्य दुर्लभं तस्य जीवितम् ॥ ११० ॥**

गोसर्ग इति । गोसर्गे गवां मोक्षकाले प्रत्यूषसि लेपज्वरेण श्लेष्मज्वरेणोपतप्तस्य वदनात्स्वेदः प्रच्यवते तस्य दुर्लभं जीवितम् । 'दुर्लभमितीषद्दुःसुष्वित्यादिना खल् । नसुदुर्भ्यामिति नुम्निषेधः' । ननु रिष्टानां निश्चितानामिहाभिधानप्रस्तावात्किमिदमनिश्चितमुक्तं दुर्लभमिति ? मैवम् । ऐकान्तिक एवार्थेऽयं हि दुर्लभशब्दः । तथा च वाल्मीकिना जगदे—"पुत्र वीक्षस्व पितरं सुहृष्टं च कुरु प्रियम् । दुर्लभं जीवितं ह्यस्य पुनः पुत्रो भविष्यतीति" । तस्माद्दुर्लभशब्दस्य नास्ति जीवितमित्येष निश्चित एवाऽर्थः प्रसिद्धः ।

**प्रवालगुलिकाभासा यस्य गात्रे मसूरिकाः ।**
**उत्पद्याशु विनश्यन्ति न चिरात्स विनश्यति ॥ १११ ॥**

प्रवालेति । मसूरिका मसूरसंस्थानाः पिटिका प्रवालगुटिकासदृशा यस्य शरीर उत्पद्य शीघ्रं विनश्यन्ति स नरो द्रागेव विनश्यति ।

**मसूरविदलप्रख्यास्तथा विद्रुमसन्निभाः ।**
**अन्तर्वक्त्राः किणाभाश्च विस्फोटा देहनाशनाः ॥ ११२ ॥**

मसूरेति । मसूरविदलाकारास्तथा प्रवालसदृशास्तथाऽन्तर्मध्ये वक्त्रं मुखं येषां ते तथा किणाभा एते चतुःप्रकारा अपि विस्फोटा देहस्य नाशनाः ।

**कामलाऽक्ष्णोर्मुखं पूर्णं शङ्खयोर्मुक्तमांसता ।**
**सन्त्रासश्चोष्णताऽङ्गे च यस्य तं परिवर्जयेत् ॥ ११३ ॥**

यस्याक्ष्णोः कामला मुखं च पूर्णं तथा शङ्खयोर्मुक्तमांसता मांसशैथिल्यं तथा सन्त्रासः शरीर उष्णता च तं नरं परिवर्जयेन्न चिकित्सेत् ।

**अकस्मादनुधावच्च विघृष्टं त्वक्समाश्रयम् ।**

---

१ ( क्षेपकः—चन्दनोशीरमदिराकुणपध्वाङ्क्षगन्धयः ।
सार्धश्लोकः ) शैवालकुक्कुटशिखाकुन्दशालिमयप्रभाः ।
अन्तर्दाहा निरूष्माणः प्राणनाशकरा व्रणाः ॥ १ ॥

अकस्मात्कारणं विना त्वक्समाश्रयं विघृष्टं यस्यानुधावल्लक्ष्यते तमपि वर्जयेत्।

**यो वातजो न शूलाय स्यान्न दाहाय पित्तजः ॥ ११४ ॥**
**कफजो न च पूयाय मर्मजश्च रुजे न यः ।**
**अचूर्णश्चूर्णकीर्णाभो यत्राऽकस्माच्च दृश्यते ॥ ११५ ॥**
**रूपं शक्तिध्वजादीनां सर्वांस्तान्वर्जयेद् व्रणान् ।**

य इति। यो व्रणो वातजो लिङ्गानुमितः शूलाय न भवति, पित्तजो न दाहाय, कफजश्च न पूयाय, मर्मजश्च न पीडायै, तथा यो व्रणोऽचूर्णश्चूर्णेनाकीर्णाभश्चूर्णव्याप्त इव दृश्यते तथा यस्मिन् व्रणे कारणं विनाऽकस्माद्रूपं शक्तिध्वजादीनां दृश्यते। आदिशब्देन शल्यतोमरादिपरिग्रहः। तान्सर्वान् व्रणान्वर्जयेत्।

**विण्मूत्रमारुतवहं कृमिणं च भगन्दरम् ॥ ११६ ॥**

विण्मूत्रमारुता येन निःसरन्ति कृमिजुष्टस्य यस्तं च भगन्दरं वर्जयेत्। 'कृमिणमिति पामादित्वान्नप्रत्ययः'।

**घट्टयन् जानुना जानु पादावुद्यम्य पातयन् ।**
**योऽपास्यति मुहुर्वक्त्रमातुरो न स जीवति ॥ ११७ ॥**

यश्चातुरो जानुना जानु घट्टयंस्तथा पादावुद्यम्योत्क्षिप्य पातयन् संक्षिपन् मुहुर्मुहुरात्मीयं वक्त्रं मुखमपास्यति कारणं विनाऽन्यत्र नयति स न जीवति।

**दन्तैश्छिन्दन्नखाग्राणि तैश्च केशांस्तृणानि च ।**
**भूमिं काष्ठेन विलिखन् लोष्टं लोष्टेन ताडयन् ॥ ११८ ॥**
**हृष्टरोमा सान्द्रमूत्रः शुष्ककासी ज्वरी च यः ।**
**मुहुर्हसन् मुहुः क्ष्वेडन् शय्यां पादेन हन्ति यः ॥ ११९ ॥**
**मुहुश्छिद्राणि विमृशन्नातुरो न स जीवति ।**

दन्तैरिति। यश्चातुरो हृष्टरोमा सान्द्रमूत्रस्तथा शुष्ककासी तथा ज्वरी स इदमिदं कुर्वन्न जीवति। किं तद्? इत्याह। दन्तैश्छिन्दन्नखाग्राणि तथा तैरेव दन्तैः केशांश्छिन्दंस्तथा तृणानि छिन्दंस्तथा भुवं काष्ठेन विलिखन् लोष्टमपरलोष्टेन ताडयन् मुहुर्मुहुः पुनःपुनर्हसंस्तथा मुहुः क्ष्वेडन् शब्दं कुर्वन् मुहुः शय्यां पादेन यो हन्ति तथा छिद्राण्यपराधान्विमृशन् घोषयन्। केचिद्व्याचक्षते—"छिद्राणि नासिकादीनि विमृशन्संस्पृशन्निति"।

**मृत्यवे सहसाऽऽर्तस्य तिलकव्यङ्गविप्लवः ॥ १२० ॥**
**मुखे दन्तनखे पुष्पं जठरे विविधाः सिराः ।**

मृत्यव इति। आर्तस्यातुरस्य सहसा जातो मुखे वदने तिलकव्यङ्गविप्लवो मृत्यवे मरणाय। तथा दन्ताश्च नखाश्च तस्मिन् दन्तनखे सहसा पुष्पं जातमातुरस्य मृत्यवे। तथा जठरे सहसा विविधा नानाविधा वर्णेन संस्थानेन च सिरा जाता आर्तस्य मृत्यवे मरणं सूचयन्तीत्यर्थः।

ऊर्ध्वश्वासं गतोष्माणं शूलोपहतवङ्क्षणम् ॥ १२१ ॥
शर्म वाऽनधिगच्छन्तं बुद्धिमान् परिवर्जयेत्।

ऊर्ध्वमिति। ऊर्ध्वश्वासादिमन्तमातुरं सुमतिर्वर्जयेन्न चिकित्सेत्।

विकारा यस्य वर्धन्ते प्रकृतिः परिहीयते ॥ १२२ ॥
सहसा सहसा तस्य मृत्युर्हरति जीवितम्।

विकारा इति। विकारा ज्वरादयो यस्यातुरस्याऽकस्माद्वर्धते। प्रकृतिः स्वभावः परिहीयते। यथा शूरः कातरः स्यात्सद्रवो वा तृष्णावानित्यादि। अथवा प्रकृति-र्वातादिः, तेन वातप्रकृतिः पित्तप्रकृतिर्भवेदित्यादि, तस्य सहसा शीघ्रमेव जीवित-मृत्युर्हरति।

यमुद्दिश्यातुरं वैद्यः सम्पादयितुमौषधम् ॥ १२३ ॥
यतमानो न शक्नोति दुर्लभं तस्य जीवितम्।

यमातुरमुद्दिश्य भिषग्यतमान औषधं सम्पादयितुं न शक्नोति तस्य दुर्लभं जीवितम्।

विज्ञातं बहुशः सिद्धं विधिवच्चावतारितम् ॥ १२४ ॥
न सिध्यत्यौषधं यस्य नास्ति तस्य चिकित्सितम्।

विज्ञातमिति। यस्यातुरस्यौषधं विज्ञातं बहुशः सिद्धं विधानेन चोपयुक्तं न सिध्यति तस्य चिकित्सितं नास्ति।

भवेद्यस्यौषधेऽन्ने वा कल्प्यमाने विपर्ययः ॥ १२५ ॥
अकस्माद्वर्णगन्धादेः स्वस्थोऽपि न स जीवति।

भवेदिति। यस्यौषधे कषायघृतलेहादौ तथाऽन्ने भक्तसूपादिके वा कल्प्यमाने विपर्ययोऽन्यथासम्पत्तिर्वर्णगन्धरूपादेरकस्मान्निमित्तं विनापि भवेत् स स्वस्थो-ऽपि न जीवति।

निवाते सेन्धनं यस्य ज्योतिश्चाप्युपशाम्यति ॥ १२६ ॥
आतुरस्य गृहे यस्य भिद्यन्ते वा पतन्ति वा।
अतिमात्रममत्राणि दुर्लभं तस्य जीवितम् ॥ १२७ ॥

निवात इति। यस्य चातुरस्य गृहे निवात इन्धनसहितं ज्योतिरग्न्यादिरूपं शाम्यति तस्य दुर्लभं जीवितम्। यस्य चातुरस्य गृहेऽमत्राणि भाजनान्यतिमात्र-मत्यन्तं पतन्ति तस्य दुर्लभं जीवितम्।

यं नरं सहसा रोगो दुर्बलं परिमुञ्चति।
संशयं प्राप्तमात्रेयो जीवितं तस्य मन्यते ॥ १२८ ॥

यमिति। यं नरं दुर्बलं सन्तं सहसा झटित्येव रोगो मुञ्चति तस्य नरस्या-ऽऽत्रेयो ऋषिर्जीवितं संशयं प्राप्तं मन्यते प्रतिपादयति।

कथयेन्नैव पृष्टोऽपि दुःश्रवं मरणं भिषक्।
गतासोर्बन्धुमित्राणां न चेच्छेत्तं चिकित्सितुम् ॥ १२९ ॥

कथयेदिति। गतासोर्बन्धुमित्राणि तेषां प्रकृतत्वाद्गतासुसम्बन्धि मरणं दुःश्रवं मरणं पृष्टोऽपि वैद्यो न कथयेत् किमुताऽपृष्टः। तथाहि। वैद्योक्तदुःश्रवमरणशब्द-श्रवणात्सन्ताप उत्पद्यते तत्सुहृदाम्। एवं च भिषजः परोपतापकरणन्यायेन योगः स्यात्। न च तं गतासुं चिकित्सितुं वैद्य इच्छेत्। तथाविधातुरचिकित्सनाद्वैद्य-स्यायशःसंयोगः स्यात्। 'गतासोरिति भाविनि भूतवदुपचाराद्भविष्यति क्तो वेद्यः'। यथा—' वृष्टो देवः सम्पन्नाः शालय इति '।

चिकित्साया निष्फलत्वाच्च तं नोपक्रमेदिति प्रतिपादयन्नाह—

**यमदूतपिशाचाद्यैर्यत्परासुरुपास्यते।**
**घ्नद्भिरौषधवीर्याणि तस्मात्तं परिवर्जयेत्॥ १३०॥**

यमदूतेति। यद्यस्माद्यमदूतपिशाचाद्यैः परासुर्गतासुरुपास्यते। किम्भूतैः? औषधानां रसायनादीनां वीर्याणि शक्तीर्घ्नद्भिर्यथायथं व्याधिप्रशमनसामर्थ्यमन्यथा कुर्वद्भिः। तस्मात्तं परिवर्जयेत्।

इदानीं रिष्टज्ञानादरस्य हेतुमाह—

**आयुर्वेदफलं कृत्स्नं यदायुर्ज्ञे प्रतिष्ठितम्।**
**रिष्टज्ञानादृतस्तस्मात्सर्वदैव भवेद्भिषक्॥ १३१॥**

आयुरिति। यद्यस्मादायुर्वेदज्ञे आयुर्वेदविदि वैद्ये आयुर्वेदफलं सकलं प्रति-ष्ठितम्। तस्माद्रिष्टज्ञानादृतो भिषग्भवेत्। आयुर्वेदस्य ह्येतत्फलम्। यदायुषः परिज्ञानं परिपालनं च तच्चोभयं रिष्टज्ञानाज्जायते। तस्मादत्रादरः कार्यः।

**मरणं प्राणिनां दृष्टमायुःपुण्योभयक्षयात्।**
**तयोरप्यक्षयाद् दृष्टं विषमाऽपरिहारिणाम्॥ १३२॥**

मरणमिति। आयुश्च पुण्यं चोभयं च प्रकृतत्वादायुःपुण्ययोस्तेषामायुःपुण्यो-भयानां क्षय आयुःपुण्योभयक्षयस्तस्मादायुःपुण्योभयक्षयान्मरणं प्राणिनां शरी-रिणां दृष्टमुपलब्धं मुनीन्द्रैः। तत्र सर्वोपकरणसम्पन्नानामपि सम्यग्वाह्यमानरथ-वदुपभोगवशेन यथोचितप्रमाणायुःक्षयाद्यन्मरणं जायते तदायुःक्षयादिति बोध्यम्। ज्योतिःशास्त्रविद्भिर्जातकपरिकल्पितनियतायुषामन्येषां यदाहाराद्यभावेन मरणं तत्पुण्यक्षयाद्बोध्यम्। यत्रायुःक्षयो यथावल्लक्षितो दृश्यते तथैव च मरणक्षयस्त-दुभयक्षयान्मरणं बोध्यम्। नचैतदेव हेतुत्रयमायुःपुण्योभयक्षयलक्षणं शरीरिणां मरणे कारणं किंतर्ह्यन्यदपि विद्यते? इत्याह। तयोरित्यादि। नन्वायुःपुण्यो-भयक्षयात्मकं लक्षणत्रितयं प्रकृतं ततश्च तेषामिति निर्देशः प्राप्तः। नैतदेवम्। इह ह्यायुःपुण्ययोरेव परामर्शः सर्वनाम्ना युक्तो न तु तृतीयस्य हेतोस्तदात्मकत्वा-दुभयस्य। अतस्तयोरप्यक्षयादिति युक्तो द्वयोर्निर्देशः। तयोरायुःपुण्ययोरहानि-तोऽपि मरणं दृष्टं यस्माद्दीर्घायुषोपेतानां तथा पुण्यवत्त्वलक्षणं यत्सर्वोपकरणत्वं तत्सम्पन्नानामसेव्योद्भूतम्। विषमं चण्डमातङ्गतुरङ्गगोमहिषदुर्गन्धवेगश्वभ्रप्रपा-

तक्षेसरीसरिसृपादिसेवनं न परिहरन्त्येवं शीलं येषां ते विषमाऽपरिहारिणस्तेषां यन्मरणं तद्विषमाऽपरिहरणाद्भवति । यद्यप्यायुःक्षयादेव सर्वं मरणं तथाऽपि पुण्यक्षयविषमाऽपरिहरणाभ्यामायुःक्षयस्यैव कारणभूतत्वादेवमुक्तम् । तदेवं विद्यमानसर्वोपकरणसम्पन्नत्वे विषममपरिहरतां यन्मरणं तद्विषमाऽपरिहारिणां बोध्यम् । वाह्यवाहकदोषादिकारणस्थविनाशसदृशमिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां शारीरेषु विकृतिविज्ञानीयः पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ।

विकृतिविज्ञानीयाध्यायादनन्तरं दूतादिविज्ञानीयाध्यायारम्भेऽयं सम्बन्धः । उक्तमायुःप्रमाणं स्वस्थातुराणां रूपेन्द्रियस्वरच्छायादिविकृतिलक्षणैः प्रतिनियतविशिष्टव्याधिलक्षणैरपि । अयं पुनरध्यायो दूताद्याश्रयैः शुभाशुभनिमित्तैः शुभाशुभं सूचयितुमारभ्यते ।

**अथाऽतो दूतादिविज्ञानीयं शारीरं व्याख्यास्यामः ।**

दूतः स्त्रीपुरुषादिर्य आतुरेण प्रेष्यते स कथ्यते । दूत आदिर्येषां ते दूतादयः । आदिग्रहणाद्वैद्यस्य गृहान्निर्गच्छतः पथि गच्छतो यावदातुरगृहे प्रवेशः, प्रविष्टस्याऽपि यानि यानि शुभाशुभसूचकानि निमित्तानि दृश्यन्ते श्रूयन्ते च तेषां परिग्रहः । दूतादीनां विज्ञानं दूतादिविज्ञानं यथैते दूतादयः शुभा एतेऽशुभा इति विशिष्टं निश्चितं ज्ञानमवबोधः । परिच्छेद इत्यर्थः । तस्मै हितो दूतादिविज्ञानीयः । शेषं पूर्ववद्व्याख्येयम् ।

**पाखण्डाश्रमवर्णानां सवर्णाः कर्मसिद्धये ।**
**त एव विपरीताः स्युर्दूताः कर्मविपत्तये ॥ १ ॥**

पाखण्डा इति । पाखण्डः षण्णवतिभेदभिन्नो व्रात्यविशेषः । आश्रमा ब्रह्मचारिगृहस्थभिक्षुवैखानसभेदेन चत्वारः । वर्णा ब्राह्मणक्षत्रियविट्शूद्राश्चत्वारः । ते च प्रतिलोमानुलोमतो बहवः । तेषां पाखण्डादीनां ये सवर्णाः समानवर्णास्तुल्यजातयो दूतास्ते च कर्मसिद्धये कर्मसिद्ध्यर्थं भवन्ति । कर्मसिद्धिं सूचयन्तीत्यर्थः । यथा पाखण्डस्य पाखण्डो दूतः । ब्रह्मचारिणो ब्रह्मचारी, गृहस्थस्य गृहस्थो वानप्रस्थस्य वानप्रस्थो भिक्षोर्भिक्षुर्यावच्छूद्रस्य शूद्रः शुभ इति । त एव पाखण्डादयो विपरीता विजातीयाः, सवर्णा ये न भवन्ति, ते कर्मविपत्तये चिकित्सानैष्फल्याय भवन्ति । चिकित्सानैष्फल्यं सूचयन्तीत्यर्थः ।

**दीनं भीतं द्रुतं त्रस्तं रूक्षाऽमङ्गलवादिनम् ।**
**शस्त्रिणं दण्डिनं षण्ढं मुण्डश्मश्रुं जटाधरम् ॥ २ ॥**



अमङ्गलाह्वयं क्रूरकर्माणं मलिनं स्त्रियम्।
अनेकव्याधितं व्यङ्गं रक्तमाल्यानुलेपनम् ॥ ३ ॥
तैलपङ्काङ्कितं जीर्णविवर्णार्द्रैकवाससम्।
खरोष्ट्रमहिषारूढं काष्ठलोष्टादिमर्दिनम् ॥ ४ ॥
नानुगच्छेद्भिषग्दूतमाह्वयन्तं च दूरतः।

दीनमिति। सवर्णमपि दूतं दीनभीतादिविशेषणविशिष्टं यावत्काष्ठलोष्टादिमर्दिनं भिषग् दृष्ट्वा नानुगच्छेच्चिकित्सानैष्फल्यादिति। रूक्षवादिनं परुषभाषिणम्। अमङ्गलवादिनं मरिष्यत्यसौ पतिष्यति न जीवतीत्याद्यमङ्गलवादिनम्। तथा षण्ढं नपुंसकम्। तथा मुण्डं कृतवपनं श्मश्रु मुखव्यञ्जनं यस्य स एवम्। मुण्डश्मश्रुश्चासौ जटाधरश्च तम्। तथाऽमङ्गलोऽकल्याण आह्वयो यस्य तम्। व्यङ्गं हीनाङ्गम्। तैलपङ्काभ्यामङ्कितं दिग्धम्। तथा जीर्णादिकं वासो यस्य तम्। तथा दूरादाह्वयन्तमाकारयन्तं नानुयायात्।

अशस्तचिन्तावचने नग्ने छिन्दति भिन्दति ॥ ५ ॥
जुह्वाने पावकं पिण्डान् पितृभ्यो निर्वपत्यपि।
सुप्ते मुक्तकचेऽभ्यक्ते रुदत्यप्रयते तथा ॥ ६ ॥
वैद्ये दूता मनुष्याणामागच्छन्ति मुमूर्षताम्।

अशस्तेति। चिन्ता च वचनं च चिन्तावचने। 'अशस्ते चिन्तावचने यस्येति मत्वर्थे बहुव्रीहिः'। वैद्येऽशस्तचिन्तां कुर्वति। अशस्तवचनं चोच्चारयति। मनुष्याणां मुमूर्षतामासन्नमृत्यूनां सम्बन्धिनो दूता आयान्ति। 'मुमूर्षतामित्याशङ्कायामुपसङ्ख्यानमिति सन्। म्रियतेर्लुङ्लिङोश्चेति नियमादात्मनेपदाभावः'। तथा च किम्भूते। नग्ने विवस्त्रे। छिन्दति भिन्दति किञ्चित्। तथा पावकमग्निं जुह्वाने पितृभ्यश्च पिण्डान्निर्वपत्यनुप्रयच्छति। यावदप्रयतेऽशुचौ। मनुष्याणामित्युपलक्षणम्। तिर्यगादयोऽपीह गृह्यन्त एव।

विकारसामान्यगुणे देशे कालेऽथवा भिषक् ॥ ७ ॥
दूतमभ्यागतं दृष्ट्वा नाऽऽतुरं तमुपाचरेत्।

विकारेति। विकारेण ज्वरादिना सामान्यस्तुल्यो गुणो यस्यासौ विकारसामान्यस्तस्मिंस्तथाविधे देशे काले वा दूतमभ्यागतं सम्मुखमागच्छन्तं दृष्ट्वा भिषक्तमातुरं दूतस्य प्रेषकं नोपाचरेत्। यथा कफजे ज्वरादावामये घृतोदकादिद्रवसमीपे देशेऽनूपे वा काले वा प्रत्युषस्यागतो दूतोऽशुभः। पित्तामये वह्न्यादिना सन्तप्ते देशे काले मध्याह्ने दूतोऽशुभः। वातरोगे परुषरूक्षसिकतापाषाणशर्करादिविशिष्टे देशे काले सायाह्ने दूतोऽशुभः विपरीतस्तु शुभः। छर्दिमेहातीसारादिषु सेतुभङ्गोऽशुभः। एष्वेव सेतुबन्धः शुभः।

स्पृशन्तो नाभिनासास्यकेशरोमनखद्विजान् ॥ ८ ॥

गुह्यपृष्ठस्तनग्रीवाजठरानामिकाङ्गुलि।
कार्पासबुससीसास्थिकपालमुशलोपलम् ॥ ९ ॥
मार्जनीशूर्पचैलान्तभस्माङ्गारदशातुषान्।
रज्जूपानत्तुलापाशमन्यद्वा भग्नविच्युतम् ॥ १० ॥
तत्पूर्वदर्शने दूता व्याहरन्ति मरिष्यताम्।

स्पृशन्त इति। तदित्यनेन वैद्यः परामृश्यते। तस्य पूर्वदर्शनं प्रथमदर्शनं तस्मिन् सति तत्काल एव मरिष्यतामासन्नमरणानां सम्बन्धिनो दूता नाभ्यादि स्पृशन्तो व्याहरन्ति। 'लक्षणहेत्वोः क्रियाया इति हेतावत्र शतृप्रत्ययः'। नाभ्यादिस्पर्शनं हि मुमूर्षुदूतव्याहरणस्य हेतुः। मुमूर्षोर्वयं दूता इति प्रतिपादयन्तीत्यर्थः। अनामिकाङ्गुलिः कनीयसीनिकटस्थिता। दशा वस्त्रवर्तिः। उपानच्चर्मपादुका। तुला मानविशेषः। न केवलं नाभ्यादि स्पृशन्तोऽपरमपि च भग्नविच्युतं च स्पृशन्त इति योज्यम्।

तथाऽर्धरात्रे मध्याह्ने सन्ध्ययोः पूर्ववासरे ॥ ११ ॥
षष्ठीचतुर्थीनवमीराहुकेतूदयादिषु।
भरणीकृत्तिकाऽऽश्लेषापूर्वाऽऽर्द्रापैत्र्यनैर्ऋते ॥ १२ ॥

तथेति। नाभ्यादिकमस्पृशन्तोऽप्यर्धरात्रादिष्वागच्छन्तो मरिष्यतां दूता व्याहरन्ति। 'अर्धरात्र इत्यहःसर्वैकदेशेत्यत्र चकारादच् समासान्तः'। आगच्छन्त इत्यत्राऽपि योज्यम्। पैत्र्यनैर्ऋत इति मघामूलाख्ये नक्षत्रे। आदिशब्देनोत्पातदर्शनकृष्णचतुर्दश्यादयो गृह्यन्ते। सङ्ग्रहेऽप्युक्तम्—"मध्याह्नोभयसन्ध्यार्धरात्रिचतुर्थीषष्ठीनवमीपर्वदिनेषु ग्रहोपरागोत्पातदर्शनभरणीकृत्तिकार्द्राऽऽश्लेषामघामूलपूर्वासु चाशुभ इति"।

यस्मिंश्च दूते ब्रवति वाक्यमातुरसंश्रयम्।
पश्येन्निमित्तमशुभं तं च नानुव्रजेद्भिषक् ॥ १३ ॥

यस्मिन्नति। यस्मिन् दूते आतुरसंश्रममातुरप्रतिबद्धं वाक्यं ब्रवति सत्यशुभं निमित्तं भिषक् पश्येत्। तं दूतमातुरचिकित्सार्थमागतं नानुव्रजेत्।

किं तदशुभं निमित्तमित्याह—

तद्यथा विकलः प्रेतः प्रेतालङ्कार एव वा।
छिन्नं दग्धं विनष्टं वा तद्वादीनि वचांसि वा ॥ १४ ॥
रसो वा कटुकस्तीव्रो गन्धो वा कौणपो महान्।
स्पर्शो वा विपुलः क्रूरो यद्वान्यदपि तादृशम् ॥ १५ ॥
तत्सर्वमभितो वाक्यं वाक्यकालेऽथवा पुनः।
दूतमभ्यागतं दृष्ट्वा नातुरं तमुपाचरेत् ॥ १६ ॥

तद्यथेति। तद्यथाशब्दोऽशुभनिमित्तसन्दर्शनसम्बन्धार्थः। विकलोऽङ्गहीनः

काएकुएठादिकः। प्रेतो मृत एव । प्रेतालङ्कारो यो मृतस्यानुलेपनवस्त्रादिनाऽलङ्कारो विधीयते। छिन्नं रज्ज्वादिकम्। दग्धं वस्त्रादिकम्। विनष्टं वा भग्नघटभाजनादिकम्। तद्वादीनि छिन्नदग्धविनष्टवाचकानि वचांसि वचनानि श्रोत्रेण श्रूयन्ते। रसो वा कटुकस्तीव्र इत्यनेन रसाधारद्रव्यमनाहारप्रतिबद्धमुपलक्ष्यते। रसो हि रसनेन्द्रियग्राह्य एव। तस्मात् कटुकरसाधिष्ठितं द्रव्यं मरिचादि कटुकरसशब्देनेह गृह्यते। लोकेऽपि रसेन द्रव्यं व्यपदिश्यत एव। यथेदं मधुरं द्रव्यमिदमम्लमिति। तदेवं कटुकरसाधिष्ठितं द्रव्यं यदा चक्षुषा गृह्यते वैद्येन तदा न शुभम्। तीव्रग्रहणादतीव्रस्य कुठेरकादेर्निरासः। गन्धश्च कौणपो महान् दुर्गन्धोऽतिशयेन तत्काल एव घ्राणेन्द्रियेण गृह्यते। स्पर्शो वा विस्तीर्णकरोऽतिदुःसहस्तत्काल एवाग्न्यादिसम्बन्धी स्पर्शनेन्द्रियेण गृह्यते सोऽशुभः। यद्वेति। अथवाऽपरमपि यत्तादृशं विकलाद्यशुभनिमित्तसदृशमनिर्दिष्टमपि रक्तकरवीरकुसुमादिकं तत्सर्वं वाक्यमभित आतुराश्रयाद्वाक्यादग्रेऽथवा वाक्यकाल आतुराश्रयवाक्यमध्ये विकलाद्यशुभनिमित्तम्। तदानीमशुभसूचकत्वात् तस्मिन् काले दूतमभ्यागतमाभिमुख्येन तत्कालमेवागतं दृष्ट्वा येनासौ प्रेषितो दूतस्तमातुरं नोपाचरेत्।

अथान्यदप्यशुभं निमित्तमाह—

**हाहाक्रन्दितमुत्क्रुष्टं रुदितं स्खलनं क्षुतम्।**
**वस्त्रातपत्रपादत्रव्यसनं व्यसनीक्षणम्॥ १७॥**
**चैत्यध्वजानां पात्राणां पूर्णानां च निमज्जनम्।**
**हतानिष्टप्रवादाश्च दूषणं भस्मपांसुभिः॥ १८॥**

हाहेति। हाहाक्रन्दितमित्यादिकमशोभनमिति वक्ष्यमाणेन सम्बन्धः। हाहेति क्रन्दितं रुदितं करुणम्। तथोत्क्रुष्टमुच्चैः कृत्वा क्रुष्टमाक्रोशः। स्खलनं पतनं वैद्यस्याऽन्यस्य वा वस्त्रादीनां वैद्यस्य सम्बन्धिनां व्यसनं विनाशः। व्यसनिनामापद्गतानामीक्षणमालोकनं न शोभनमिति सर्वत्र योज्यम्। चैत्यादीनां निमज्जनं पतनं ब्रुडनं च। तथा हत इत्येवंरूपाणामनिष्टानाममङ्गलानां प्रवादा उच्चैरुच्चारितानि वाक्यानि। दूषणं भस्मपांसुभिर्वैद्यस्यैव पथि गच्छतो भस्मना पांसुना च विकिरणमशोभनम्। कर्मसिद्ध्यभावादातुरस्याऽपि मरणसूचकत्वात्।

**पथश्छेदोऽहिमार्जारगोधासरटवानरैः।**

पथश्छेद इति। पथश्छेदो मार्गस्य च्छेदोऽशोभन इति योज्यम्। कैः? सर्पमार्जारादिभिः। सरटः सर्पसदृशी रक्तवर्णा द्विमुखी प्राणिजातिश्चक्रलएड इत्यपरपर्यायः।

**दीप्तां प्रतिदिशं वाचं क्रूराणां मृगपक्षिणाम्॥ १९॥**
**कृष्णधान्यगुडोदश्विल्लवणासवचर्मणाम्।**

सर्षपाणां वसातैलतृणपङ्केन्धनस्य च ॥ २० ॥
क्लीबक्रूरश्वपाकानां जालवागुरयोरपि।
छर्दितस्य पुरीषस्य पूतिदुर्दर्शनस्य च ॥ २१ ॥
निःसारस्य व्यवायस्य कार्पासादेररेरपि।
शयनासनयानानामुत्तानानां तु दर्शनम् ॥ २२ ॥
न्युब्जानामितरेषां च पात्रादीनामशोभनम्।

दीप्तामिति। यस्यां दिशि सूर्यः स्थितः सा दीप्ता भण्यते। तथा चोक्तम्—"अङ्गारिण्यर्कनिर्मुक्ता दीप्ता यस्यां दिवाकरः। प्रधूमितैष्यत्सूर्या वै शान्ताः पञ्चेतरा दिशः"। दीप्तां दिशं प्रति या वाचो वाण्यः क्रूराणां क्रव्यभुजां मृगाणां द्वीपिश्वगालादीनां पक्षिणां च श्येनादीनां ता अशोभना इति लिङ्गविपरिणामेन सम्बन्धः। कृष्णेत्यादि। कृष्णधान्यादीनां यद्दर्शनं वैद्यस्य पथि गच्छत आतुरगृहं प्रविशतो वा तदशोभनमशुभसूचकत्वात्। उदश्वित्तक्रम्। सर्षपो रक्ताभासः। क्रूरो निष्ठुरवादी। श्वपाकश्चाण्डालः। जालमानायः। वागुरा मृगबन्धनी। पूतिर्दुर्गन्धिः। दुर्दर्शनः करालाकृतिः। निःसारस्य व्यपगतसारस्य वस्तुनः। व्यवायस्य मैथुनस्य। कार्पासादेरित्यादिशब्देन कार्पासबुससीसादेर्दूतचिन्तानिर्दिष्टस्य ग्रहणम्। कार्पासादेः पदार्थस्य दर्शनं पथि गच्छत आतुरगृहं प्रविशतो वा वैद्यस्याऽशोभनम्। अरेर्दर्शनमशोभनम्। प्रकृतत्वाद्वैद्यस्यात्मशत्रुदर्शनम्। तथा शय्यादीनामुत्तानानामूर्ध्वमुखस्थितपादानां दर्शनम्। तथेतरेषां पात्रादीनां घटशरावोदञ्चनादीनामधोमुखानां दर्शनमशोभनम्।

पुंसंज्ञाः पक्षिणो वामाः स्त्रीसंज्ञा दक्षिणाः शुभाः ॥ २३ ॥

पुमिति। पुंसंज्ञाः पुंनामानः पक्षिणो वर्तकादयो वामस्थिताः प्रशस्ताः। स्त्रीनामानो बलाकासारिकादयो दक्षिणस्थिताः शुभाः।

प्रदक्षिणं खगमृगा यान्तो नैवं श्वजम्बुकाः।
अयुग्माश्च मृगाः शस्ताः शस्ता नित्यं च दर्शने ॥ २४ ॥
चाषभासभरद्वाजनकुलच्छागबर्हिणः।

प्रदक्षिणमिति। वामाद्दक्षिणं गच्छन्तः खगमृगाः शुभाः। खगाः काकपारावतादयः। मृगा हरिणैणादयः। यान्तो नैवं श्वजम्बुकाः। किंतर्हि दक्षिणाद्वामं गच्छन्तः शुभा इत्यर्थः। अयुग्मा अपि मृगाः शुभाः चाषादयो मयूरान्ता नित्यं दर्शने वामतो दक्षिणतो वा शस्ताः।

अशुभं सर्वथोलूकबिडालसरटेक्षणम् ॥ २५ ॥

अशुभमिति। सर्वथा सर्वेण प्रकारेण वामतो दक्षिणतो वा युग्मानामयुग्मानां वोलूकादीनां दर्शनमशुभम्। कीर्तने तु प्रशस्ता इत्येके।

**प्रशस्ताः कीर्तने कोलगोधाहिशशजाहकाः ।**
**न दर्शने न विरुते, वानरर्क्षावतोऽन्यथा ॥ २६ ॥**

प्रशस्ता इति । कोलादयः कीर्तने प्रशस्ताः । कोलः सूकरः । वानरश्च ऋक्षश्च तौ, दर्शने विरुते न शस्तौ । अत उक्तन्यायादन्यथा विपरीतौ प्रशस्तौ । कीर्तनं तयोरप्रशस्तमित्यर्थः ।

**धनुरैन्द्रं च लालाटमशुभं शुभमन्यतः ।**

धनुरिति । ऐन्द्रं धनुर्लालाटमभिमुखमशुभम् । अन्यतः=पुरःस्थितं सम्मुखं वर्जयित्वा, तिर्यक् पृष्ठतो वा स्थितं शुभम् । 'लालाटमिति भवार्थे अण्' । ललाट-शब्देनेह ललाटसमीपो देशो लक्ष्यते । सम्मुखमित्यर्थः ।

**अग्निपूर्णानि पात्राणि भिन्नानि विशिखानि च ॥ २७ ॥**

अग्नीति । पात्राण्यग्निपूर्णान्यशोभनानि । तथा भिन्नानि भग्नानि । तथा विशिखान्यन्तःशून्यानि न शुभानीति वचनविपरिणामेन सम्बन्धः ।

वैद्यस्यातुरस्य गृहप्रवेशे शुभाशुभसूचकानि निमित्तान्याह—

**दध्यक्षतादि निर्गच्छन् वक्ष्यमाणं च मङ्गलम् ।**
**वैद्यो मरिष्यतां वेश्म प्रविशन्नेव पश्यति ॥ २८ ॥**

दधीति । आदिशब्देनेक्षुनिष्पावादिपरिग्रहः । दध्यक्षतावादी यस्य मङ्गलस्य तदेवम् । वैद्यः प्रविशन्नेव तत्काल एवातुरगृहाद्दध्यक्षतादि यच्च वक्ष्यमाणं तन्निर्गच्छन्निःसरन् मरिष्यतामासन्नमरणानां पश्यति ।

**दूताद्यसाधु दृष्ट्वैवं त्यजेदार्तमतोऽन्यथा ।**
**करुणाशुद्धसन्तानो यत्नतः समुपाचरेत् ॥ २९ ॥**

दूतेति । एवं पूर्वोक्तेन प्रकारेण दूताद्यसाध्वशुभं पूर्वनिर्दिष्टं दृष्ट्वा आर्तमातुरं त्यजेन्न चिकित्सेत् । आदिशब्देन शकुनादेर्ग्रहणम् । अतोऽन्यथेति । दूतादि शुभं दृष्ट्वा तमातुरं वैद्यो यत्नेन समुपाचरेत् । किम्भूतः ? करुणया शुद्धं निर्मलं सन्तानं चेतो यस्य स एवम्भूतः सन् ।

अथ तदेव दध्यक्षताद्याह—

**दध्यक्षतेक्षुनिष्पावप्रियङ्गुमधुसर्पिषाम् ।**
**यावकाञ्जनभृङ्गारघण्टादीपसरोरुहाम् ॥ ३० ॥**
**दूर्वार्द्रमत्स्यमांसानां लाजानां फलभक्ष्ययोः ।**
**रत्नेभपूर्णकुम्भानां कन्यायाः स्यन्दनस्य च ॥ ३१ ॥**
**नरस्य वर्धमानस्य देवतानां नृपस्य च ।**
**शुक्लानां सुमनोवालचामराम्बरवाजिनाम् ॥ ३२ ॥**
**शङ्खसाधुद्विजोष्णीषतोरणस्वस्तिकस्य च ।**

---

मौ. टि.–१ कोलादयः कीर्त्तने प्रशस्ताः, न दर्शने न च विरुते । वानरः, ऋक्षश्च, अतो विपरीतौ, अर्थाद् दर्शने विरुते च शस्तौ, न कीर्त्तन इत्यभिप्राय आचार्य्यस्य ।

भूमेः समुद्धृतायाश्च वह्नेः प्रज्वलितस्य च ॥ ३३ ॥
मनोज्ञस्यान्नपानस्य पूर्णस्य शकटस्य च ।
नृभिर्धेन्वाः सवत्साया वडवायाः स्त्रिया अपि ॥ ३४ ॥
जीवञ्जीवकसारङ्गसारसप्रियवादिनाम् ।
रुचकादर्शसिद्धार्थरोचनानां च दर्शनम् ॥ ३५ ॥
गन्धः सुसुरभिर्वर्णः सुशुक्लो मधुरो रसः ।
गोपतेरनुकूलस्य स्वरस्तद्वद्गवामपि ॥ ३६ ॥
मृगपक्षिनराणां च शोभिनां शोभना गिरः ।
छत्रध्वजपताकानामुत्क्षेपणमभिष्टुतिः ॥ ३७ ॥
भेरीमृदङ्गशङ्खानां शब्दाः पुण्याहनिःस्वनाः ।
वेदाध्ययनशब्दाश्च सुखो वायुः प्रदक्षिणः ॥ ३८ ॥
पथि वेश्मप्रवेशे च विद्यादारोग्यलक्षणम् ।

दधीति । दध्यक्षतादीनां दर्शनं पथि वेश्मप्रवेशे च विद्यादारोग्यलक्षणमिति वक्ष्यमाणेन सम्बन्धः । अक्षता यवाः । अखण्डितास्तण्डुला इत्यन्ये । धान्यमेवाखण्डितमक्षतशब्दवाच्यमित्यपरे । यावकमलक्तकः । भृङ्गारः कनकालुका । आर्द्रमत्स्यः—आर्द्रमांसम् । आर्द्रग्रहणमत्र शुष्कपरिहारार्थम् । भक्ष्यं मोदकादि । पद्मरागादिकं रत्नम् । इभो हस्ती । नरस्येति । शौर्यत्यागप्रज्ञाराजसत्कारादिभिर्वर्धमानः प्रतिदिनमुपचयं गतस्तथाविधस्य पुरुषस्य दर्शनं शुभम् । शुक्लानां सुमनःप्रभृतीनां दर्शनं शुभम् । वालचामरं केशप्रकीर्णकम् । वाजी तुरङ्गः । उष्णीषं शिरोवेष्टनम् । मनोज्ञस्य हृदयहारिणोऽन्नपानस्य । शकटस्य रथस्य नृभिर्नरैः पूर्णस्य सम्भृतस्य । धेन्वा इत्यादि । ‘ स्त्रिया अपीत्यपिशब्दः समुच्चये ’ । यथा धेन्वाः सवत्साया दर्शनमेवं वडवायाः स्त्रियाश्च सवत्सायाः सापत्याया इति । रुचको वलय आभरणविशेषः । सिद्धार्थो गौरसर्षपः । गन्धः सुष्ठु सुरभिः । वर्णः सुष्ठु शुक्लः सितः । रसो मधुरः । गोपतेर्वृषभस्यानुकूलस्याऽकुपितस्य स्वनो न प्रतिकूलस्य कुपितस्य शब्दः । तद्वद्गोपतिना तुल्यो गवामप्यनुकूलानां शब्द इत्यर्थः । तथा शोभिनां प्रशस्तानां मृगादीनां प्रशस्ता गिरः । विद्यादारोग्यलक्षणमिति योज्यम् । मृगपक्षिनरा ह्यशोभिनोऽपि शृगालोलूकपुल्कसचाण्डालादयः सन्ति तद्व्यवच्छेदनार्थं शोभिनामिति विशेषणम् । शोभिनामपि मृगादीनां क्षामरोगार्ताभिहतानामशोभना वाचः स्युस्तत्त्यागार्थं शोभना इति विशेषणम् । छत्रादीनामुत्क्षेपणमुपरि स्थापनम् । पताका वैजयन्ती । अभिष्टुतिः प्रयाणकाले जनेन स्तुतिर्जयजयेत्यादिशब्दपूर्वा अभिमुखमुच्चारिता । तथा भेर्यादीनां शब्दाः पुण्याहनिःस्वनाः प्रशस्तशब्दा आरोग्याय नत्वप्रशस्तनिःस्वनाः प्रेतपटहादिजाः । वेदाध्ययनस्य वेदपाठस्य ये शब्दास्ते च शुभाः । प्रदक्षिणोऽनुकूलो वायुः सुखः

सुखावहः। पथि वेश्मप्रवेशे चैतदारोग्यलक्षणं विद्यात्।

**इत्युक्तं दूतशकुनं स्वप्नानूर्ध्वं प्रचक्षते॥ ३६॥**

इत्येवमर्थे परिसमाप्तौ वा। दूतः स्त्रीपुरुषादिः। शुभाशुभं प्रागुक्तम्। तथा चेतनाचेतनरूपः शुभाशुभसूचको दूतवर्जितो लोकप्रसिद्धः शकुन उक्तः। 'यथा हाहाक्रन्दितमित्यादि। इत्येवमुक्तमभिहितम्। अतो दूतशकुनादूर्ध्वमनन्तरं स्वप्नान् प्रचक्षते सम्यग् भणिष्यते तन्त्रकार इति शेषः। स्वप्नलक्षणमष्टाङ्गसङ्ग्रहे कथितम्। यथा—"सर्वेन्द्रियव्युपरतौ मनोऽनुपरतं यदा। विषयेभ्यस्तदा स्वप्नं नानारूपं प्रपश्यतीति"। तथा—"श्लेष्मावृतेषु स्रोतःसु श्रमादुपरतेषु च। इन्द्रियेषु स्वकर्मभ्यो निद्रां विशति देहिनामिति" निद्रालक्षणम्।

**स्वप्ने मद्यं सह प्रेतैर्यः पिबन् कृष्यते शुना।**
**स मर्त्यो मृत्युना शीघ्रं ज्वररूपेण नीयते॥ ४०॥**

स्वप्न इति। यो मर्त्यः पुरुषः स्वप्ने स्वप्नावस्थायां प्रेतैः सह मद्यं पिबन् शुना कृष्यत आक्रम्यते स मृत्युना ज्वररूपेण शीघ्रमचिरात् कतिपयैरेव दिवसैर्नीयते लोकान्तरमिति शेषः।

**रक्तमाल्यवपुर्वस्त्रो यो हसन् ह्रियते स्त्रिया।**
**सोऽस्रपित्तेन,**

रक्तेति। रक्तमाल्यो रक्तवपू रक्तवस्त्रश्च यो मर्त्यो हसन् स्त्रिया स्वप्ने ह्रियत आकृष्यत आक्रम्यते सोऽस्रपित्तेन मृत्युना शीघ्रं नीयते।

**महिषश्ववराहोष्ट्रगर्दभैः॥ ४१॥**
**यः प्रयाति दिशं याम्यां मरणं तस्य यक्ष्मणा।**

महिषेति। यो महिषादिभिः कारणभूतैर्याम्यां दक्षिणां दिशं स्वप्ने प्रयाति तस्य यक्ष्मणा मरणं भवति।

**लता कण्टकिनी वंशस्तालो वा हृदि जायते॥ ४२॥**
**यस्य तस्याशु गुल्मेन,**

लतेति। मर्त्य इति प्रथमान्तोऽपीहार्थवशात्षष्ठ्यन्तः सम्बध्यते। यस्य मर्त्यस्य स्वप्ने कण्टकयुक्ता लता हृदये जायते वंशो वाथवा तालस्तस्य शीघ्रं गुल्मेन मरणं भवेत्। सङ्ग्रहे त्वेवमुक्तम्—"यस्य कण्टकिनी लता वंशस्तालो वा हृदि जायते स गुल्मेन। यस्य शिरसि स शिरोरोगेण वा शिरश्छेदनेनेति"।

**यस्य वह्निमनर्चिषम्।**
**जुह्वतो घृतसिक्तस्य नग्नस्योरसि जायते॥ ४३॥**
**पद्मं स नश्येत्कुष्ठेन,**

यस्येति। यस्य मर्त्यस्य नग्नस्याज्याभ्यक्तस्य वह्निमनर्चिषं ज्वालारहितं जुह्वत उरसि पद्मं स्वप्ने जायते स नरः कुष्ठेन नश्येत्।



चण्डालैः सह य पिबेत्।
स्नेहं बहुविधं स्वप्ने स प्रमेहेण नश्यति ॥ ४४ ॥

चण्डालैरिति । चण्डालैः सह बहुविधमनेकप्रकारं स्नेहं घृततैलादिकं यो मर्त्यः स्वप्ने पिबेत् स प्रमेहेण नश्यति । स्वप्ने प्रकृतेऽपि पुनः स्वप्नग्रहणं कृतं स्पष्टार्थम् ।

उन्मादेन जले मज्जेद्यो नृत्यन् राक्षसैः सह ।

उन्मादेन स नश्यति यो राक्षसैः सह नृत्यन् जले मज्जेत् ।

अपस्मारेण यो मर्त्यो नृत्यन् प्रेतेन नीयते ॥ ४५ ॥

स मर्त्योऽपस्मारेण नश्यति यो नृत्यन् प्रेतेन स्वप्ने नीयते ।

यानं खरोष्ट्रमार्जारकपिशार्दूलसूकरैः ।
यस्य प्रेतैः शृगालैर्वा स मृत्योर्वर्तते मुखे ॥ ४६ ॥

यानमिति । यस्य नरस्य स्वप्ने खरादिभिर्यानं भवति स मृत्योर्मुखाभ्यन्तरे वर्तते । अत्यासन्नविनाशवान् ।

अपूपशष्कुलीर्जग्ध्वा विबुद्धस्तद्विधं वमन् ।
न जीवति,

अपूपान् शष्कुलीर्वा जग्ध्वा भक्षयित्वैवं स्वप्ने दृष्ट्वा विबुद्धः सन्, तद्विधमपूपशष्कुलीप्रायमेव वमेदुद्गिरेत्स न जीवति ।

अक्षिरोगाय सूर्येन्दुग्रहणेक्षणम् ॥ ४७ ॥

सूर्यचन्द्रयोर्ग्रहणदर्शनमक्षिरोगाय ।

सूर्याचन्द्रमसोः पातदर्शनं दृग्विनाशनम् ।

स्वप्ने सूर्याचन्द्रमसोः पतनदर्शनं मर्त्यस्य दृष्टिविनाशनम् । 'सूर्याचन्द्रमसोरिति देवताद्वन्द्वे चेत्यानङादेशः' ।

मूर्ध्नि वंशलतादीनां सम्भवो वयसां तथा ॥ ४८ ॥
निलयो मुण्डता काकगृध्राद्यैः परिवारणम् ।
तथा प्रेतपिशाचस्त्रीद्राविडान्ध्रगवाशनैः ॥ ४६ ॥
सङ्गो वेत्रलतावंशतृणकण्टकसङ्कटे ।
श्वभ्रश्मशानशयनं पतनं पांशुभस्मनोः ॥ ०॥
मज्जनं जलपङ्कादौ शीघ्रेण स्रोतसा हृतिः ।
नृत्यवादित्रगीतानि रक्तस्रग्वस्त्रधारणम् ॥ ५१ ॥
वयोऽङ्गवृद्धिरभ्यङ्गो विवाहः श्मश्रुकर्म च ।
पक्वान्नस्नेहमद्याशः प्रच्छर्दनविरेचने ॥ ५२ ॥
हिरण्यलोहयोर्लाभः कलिर्बन्धपराजयौ ।
उपानद्युगनाशश्च प्रपातः पादचर्मणोः ॥ ५३ ॥



हर्षो भृशं प्रकुपितैः पितृभिश्चावभर्त्सनम्।
प्रदीपग्रहनक्षत्रदन्तदैवतचक्षुषाम्॥ ५४॥
पतनं वा विनाशो वा भेदनं पर्वतस्य च।
कानने रक्तकुसुमे पापकर्मनिवेशने॥ ५५॥
चितान्धकारसम्बाधे जनन्यां च प्रवेशनम्।
पातः प्रासादशैलादेर्मत्स्येन ग्रसनं तथा॥ ५६॥
काषायिणामसौम्यानां नग्नानां दण्डधारिणाम्।
रक्ताक्षाणां च कृष्णानां दर्शनं जातु नेष्यते॥ ५७॥

मूर्ध्नीति। जातु नेष्यत इति वक्ष्यमाणेन सम्बन्धः। वंशलतादीनां मूर्ध्नि शिरसि सम्भवो जन्म जातु नेष्यते। एवमग्रेऽपि योज्यम्। तथा वयसां पक्षिणां मूर्ध्नि निलयो निलयनम्। तथा मुण्डता कृतमुण्डनत्वम्। काकाद्यैः परिवाणं परिवृतत्वम्। न केवलं काकाद्यैः प्रेताद्यैश्चेति तथाशब्दस्यार्थः। गवाशना गोमांसभक्षास्तैः। वेत्रादिसङ्कटे संवृते सङ्गो द्वारालाभस्तत्रैव निःसारमपश्यतः। श्वभ्रे श्मशाने च शयनं स्वपनम्। पांसौ भस्मनि च पतनम्। जलपङ्कादिके मज्जनं ब्रुडनम्। आदिशब्देन कूपकलुषोदकादि गृह्यते। स्रोतसा शीघ्रेण हृतिर्हरणम्। नृत्यं च वादित्रं च गीतं च तानि। तथा स्रक् च वस्त्रं च स्रग्वस्त्रं रक्ते च ते स्रग्वस्त्रे च तयोर्धारणम्। वयश्चाङ्गं च तयोर्वृद्धिः। अभ्यङ्गोऽभ्यञ्जनम्। विवाहः परिणयः। श्मश्रुकर्म मुखव्यञ्जनमुण्डनम्। पक्वान्नं मण्डकादिः। स्नेहस्तैलादिः। मद्यं सीध्वादि। तेषां पक्वान्नादीनामाशो भक्षणम्। प्रच्छर्दनं वमिः। विरेचनं विरेकः। हिरण्यस्य रुक्मादेर्लोहस्य च लाभः। सङ्ग्रहे तूक्तम्—"लभ्यन्ते वा हिरण्यलोहलवणादय इति"। कलिरनर्थः। बन्धो बन्धनम्। पराजयः परिभवः। उपानद्युगस्य नाशः पादस्य चर्मणः प्रकर्षेण पतनम्। भृशमतिशयेन हर्षः। पितृभिः प्रकुपितैरवभर्त्सनं सन्तर्जनम्। प्रदीपादीनां पतनमथवा विनाशः। पर्वतस्य च भेदनम्। कानने वने रक्तपुष्पे प्रवेशनमिति सम्बन्धः। पापकर्मणां पापिनां निवेशने गृहे प्रवेशनम्। चितायामन्धकारसम्बाधे तमःसंकटे जनन्यां मातरि च प्रवेशनम्। प्रासादात् पर्वताद्वा पातः पतनम्। आदिशब्देन वृक्षगृहादेर्ग्रहणम्। मत्स्येन ग्रसनं निगरणम्। 'कषायेण रक्तं वस्त्रं काषायं तद्धियते येषामितीनिः'। तेषां काषायिणां काषायवस्त्रावृतानां तथा असौम्यानां दुर्दर्शानां तथा नग्नानां विवस्त्राणां तथा दण्डधारिणां दण्डिनां तथा रक्तनयनानां कृष्णवर्णानां च नृणां जातु न कदाचिद्दर्शनमिष्यते स्वप्ने। अशुभहेतुत्वात्।

कृष्णा पापाननाचारा दीर्घकेशनखस्तनी।
विरागमाल्यवसना स्वप्नकालनिशा मता॥ ५८॥
मनोवहानां पूर्णत्वात्स्रोतसां प्रबलैर्मलैः।



दृश्यन्ते दारुणाः स्वप्ना रोगी यैर्याति पञ्चताम् ॥ ५६ ॥
अरोगः संशयं प्राप्य कश्चिदेव विमुच्यते ।

कृष्णेति । एवंविधा स्त्री स्वप्ने कालनिशा तद्विधा मता । कृष्णा कृष्णवर्णा । तथा पापमाननमाचारश्च यस्याः सा तथा । दीर्घाः केशा नखाः स्तनौ च यस्याः सैवम् । 'स्वाङ्गाच्चोपसर्जनादिति ङीप्' । माल्यं च वसनं च माल्यवसनम् । विगतो रागो यस्य माल्यवसनस्य तदेवम्भूतं माल्यवसनं यस्याः सैवम् । मनोवहाना-मित्यादि । मनश्चेतो वहन्ति यानि विशेषेण हृदाश्रितानि स्रोतांसि तानि मनोवहानि तेषां मनोवहानां प्रबलैरतिबलवद्भिर्मलैर्मलिनीकरणस्वभावैर्वातपित्तश्लेष्मभिः पूर्णत्वाद्दारुणा घोरा अप्रशस्ताः स्वप्ना दृश्यन्तेऽनुभूयन्ते । यः स्वप्नैर्दृष्टै रोगी आतुरः पञ्चतां याति मरणं प्राप्नोति । तथास्वभावत्वादेषां स्वप्नानाम् । अरोग इत्यादि । स्वस्थो नरः संशयं जीवितसन्देहं प्राप्य कश्चिदेव बहूनां मध्यात्पुण्यवान्नियतायुरेव विमुच्यते मरणादिति शेषः ।

स्वप्नभेदानिदानीमाह—

दृष्टः श्रुतोऽनुभूतश्च प्रार्थितः कल्पितस्तथा ॥ ६० ॥
भाविको दोषजश्चेति स्वप्नः सप्तविधो मतः ।

दृष्ट इति । चः समुच्चये । इतिः प्रकारे । दृष्टत्वादिना प्रकारेण स्वप्नः सप्तविधो मतः । सप्त स्वप्ना इत्यर्थः । यश्चक्षुषा जाग्रदवस्थायां किञ्चिद्वस्तुजातं दृष्ट्वा तदानीं सुप्तावस्थायां तादृशं वस्तुजातं संवित्तिरूपतयाऽनुभूयते स दृष्ट उच्यते । यश्च शब्दमात्रेण वस्तुजातं श्रोत्रेन्द्रियेण गृह्यते तदिदानीं सुप्तावस्थायां तादृक्संवित्तिरूपतयाऽनुभूयते स श्रुत उच्यते । यस्तु जाग्रदवस्थायां यथायथमिन्द्रियैरनुभूयते सुप्तावस्थायां तादृगन्तःसंवित्तिरूपतयाऽनुभूयते सोऽनुभूत उच्यते । यस्मिन् दृष्टे श्रुतेऽनुभूते वा यत्पूर्वं जाग्रदवस्थायां वस्तुजातं मनसाऽभ्यर्थ्यते तथैव च सुप्तावस्थायामन्तःसंवित्तिरूपतयाऽनुभूयते स प्रार्थित उच्यते । यस्तु षड्भिः प्रत्यक्षानुमानादिभिर्न दृष्टो नापि श्रुतो नाप्यनुभूतो दृष्टश्रुतानुभूतत्वाभावादेव न च प्रार्थितोऽपि तु केवलं मनसा यथेच्छमुत्प्रेक्ष्य यत्किञ्चनरूपाभिः कल्पनाभिः कल्पितो जाग्रदवस्थायां वस्तुजातान्तःसंवित्तावुपारूढस्तदानीं सुप्तावास्थायां तादृगनुभूयते स कल्पितः । यश्च दृष्टश्रुतादिभ्यः स्वप्नेभ्योऽन्यो विलक्षणस्वप्नो यथा दृश्यते सुप्तावस्थायामुत्तरकालं तथैव स्वप्नदर्शिना नरेण तन्मुखावगततदर्थैरपि प्रत्यक्षतो दृश्यते स भाविकः । दोषजः स स्वप्नो यो वातजः पित्तजः कफजो वा यथायथं दोषाणामनुरूपाऽन्तःसंवितावनुभूयते स दोषज उच्यत इति ।

तेष्वाद्या निष्फलाः पञ्च यथास्वप्रकृतिर्दिवा ॥ ६१ ॥
विस्मृतो दीर्घह्रस्वोऽति,

तेषु स्वप्नेषु मध्याद्ये पञ्चाद्या आदौ पठिता दृष्टादयस्ते निष्फलाः । न ते यथानु-

रूपं फलं शुभाशुभं ददति। यथास्वप्रकृतिर्यथादोषजो यः स्वप्नः सोऽपि निष्फलः। नासौ यथानुरूपं शुभाशुभलक्षणं फलं ददाति वातप्रकृतेर्वाप्रकृतत्यनुरूपतः स्वप्नो यावद्द्वन्द्वप्रकृतेर्द्वन्द्वप्रकृत्यनुरूपतोऽफलः। तथा दिवा दृष्टो यः स्वप्नस्तथा विस्मृ-स्तथाऽतिदीर्घोऽतिह्रस्वो वा यः स्वप्नः सः पञ्चविधव्यतिरिक्तोऽप्यफलः।

**पूर्वरात्रे चिरात्फलम् ॥ ६२ ॥**

**दृष्टः करोति तुच्छं च,**

पूर्वरात्रे दृष्टः स्वप्नश्चिराच्चिरेण कालेन फलं तुच्छमल्पं नतु यथापरिभाषितं विदधाति। केचित्त्वाहुः—चेति विकल्पार्थे। चिरेण कालेन तुच्छं वेत्यर्थः। 'पूर्वरात्र इत्यहः सर्वैकदेशेति समासान्तः'।

**गोसर्गे तदहर्महत् ॥ ६३ ॥**

**निद्रया चानुपहतः प्रतीपैर्वचनैस्तथा।**

गोसर्गे गवां मोक्षकाले यो दृष्टः स्वप्नः स तदहस्तस्मिन्नेवाहनि फलं महत्करोतीति योज्यम्। तदहरित्यहःशब्दः सप्तम्यर्थवृत्तिरव्ययः। तथा शुभः स्वप्नो दृष्टो रात्रिशेषे निद्रया वा यद्यनुपहतो यस्मिन्स्वप्ने दृष्टेऽनन्तरं न सुप्यते स स्वप्नो महत्फलं करोति। अन्यथा स्वल्पम्। प्रतीपैरननुकूलैर्वचनैश्चानुपहतोऽनभ्याहतः शुभः स्वप्नो दृष्टो महत् फलं करोति।

एवं शुभं स्वप्नं प्रत्युक्त्वाऽशुभं स्वप्नं प्रत्याह—

**याति पापोऽल्पफलतां दानहोमजपादिभिः ॥ ६४ ॥**

पापोऽशुभः स्वप्नोऽल्पफलतां याति। कैः? दानादिभिः। आदिग्रहणाद् ध्याननियमादयो गृह्यन्ते।

**अकल्याणमपि स्वप्नं दृष्ट्वा तत्रैव यः पुनः।**
**पश्येत्सौम्यं शुभं तस्य शुभमेव फलं भवेत् ॥ ६५ ॥**

अकल्याणमप्यशुभसूचकत्वादशुभं स्वप्नं दृष्ट्वा तत्रैव तस्मिन्नेवावसरेऽशुभस्वप्नदर्शनसमनन्तरे काले सौम्यकरं शुभसूचकत्वाच्छुभं स्वप्नं यः पश्येत्तस्य शुभमेव फलं भवेत्। सौम्यं शुभं स्वप्नं दृष्ट्वा यस्तत्रैव स्वप्नमध्ये सुप्तोऽशुभं च स्वप्नं पश्येत्तस्याशुभमेव फलं भवेन्न पूर्वदृष्टं शुभमिति बोध्यम्। नन्वेवं सति स्वप्नानामनिश्चितफलत्वं प्राप्नोति? ततश्च स्वप्ने मद्यं सहप्रेतैरित्यादिनां यदुक्तं तदन्यथाऽपि स्यात्? यतोऽशुभलक्षणोऽप्येवं दानादिभिश्चान्यथा सम्पद्यते ततश्चानिश्चितफलत्वान्मरणं प्रति नासौ निश्चितो हेतुः? एवमन्येऽपि ये स्वप्नाः प्रतिनियता रक्तपित्तादीनां व्याधीनां हेतवो निर्दिष्टास्तेऽपि तथैव बोद्धव्याः? अत्राचक्ष्महे—निश्चिताऽनिश्चितफलस्वभावत्वात्स्वप्नानामदोषः। तथाहि। केचित्स्वप्ना निश्चितफलस्वभावा निर्दिष्टाः। यथा—स्वप्ने मद्यं सहप्रेतैरित्यादयः। केचिदनिश्चितफलस्वभावाः। यथा—मूर्ध्नि वंशलतादीनामित्यारभ्य यावद् रक्ताक्षाणां

च कृष्णानां दर्शनं जातु नेष्यत इत्येवमन्तेनं ग्रन्थेन ये निर्दिष्टास्तत्र ये निश्चितफलस्वभावास्तेषां न कथञ्चिदप्यन्यथा कर्तुं पार्यते । ते प्राक्तनस्य कर्मणस्तथारूपस्य बलवत्वात् । ये त्वनिश्चितफलस्वभावा मूर्ध्नि वंशलतादीनामित्यादयस्तेषां स्वप्नान्तरदर्शनादिभिरन्यथासद्भावः सम्भाव्यत इति ।

पश्येत्सौम्यमित्युक्तमतस्तानेव सौम्यान्स्वप्नान् दर्शयितुमाह—

**देवान् द्विजान् गोवृषभान् जीवतः सुहृदो नृपान् ।**
**साधून् यशस्विनो वह्निमिद्धं स्वच्छान् जलाशयान् ॥ ६६ ॥**
**कन्यां कुमारकान् गौरान् शुक्लवस्त्रान्सुतेजसः ।**
**नराशनं दीप्ततनुं समन्ताद्रुधिरोक्षितः ॥ ६७ ॥**
**यः पश्येल्लभते यो वा छत्रादर्शविषामिषम् ।**
**शुक्लाः सुमनसो वस्त्रममेध्यालेपनं फलम् ॥ ६८ ॥**
**शैलप्रासादसफलवृक्षसिंहनरद्विपान् ।**
**आरोहेद् गोऽश्वयानं च तरेन्नदह्रदोदधीन् ॥ ६९ ॥**
**पूर्वोत्तरेण गमनमगम्यागमनं मृतम् ।**
**सम्बाधान्निःसृतिर्देवैः पितृभिश्चाभिनन्दनम् ॥ ७० ॥**
**रोदनं पतितोत्थानं द्विषतां चावमर्दनम् ।**
**यस्य स्यादायुरारोग्यं वित्तं बहु च सोऽश्नुते ॥ ७१ ॥**

देवानिति कुमारका बालकाः । विषं वत्सनाभादिः । आमिषं मांसम् । सुमनसः पुष्पाणि । शुक्लशब्दो वस्त्रमित्यत्राऽपि सम्बध्यते, अर्थवशाच्चाऽस्य नपुंसकत्वमेकत्वं च बोध्यम् । देवादीन्यः पश्येद्यो वा छत्रादीन् लभते यश्च शैलादीन् समारोहेद्यश्च नदादींस्तरेद्यस्य वा पूर्वोत्तरगमनादिकं स्यात्स पुरुष आयुरादीनश्नुते प्राप्नोति ।

आरोग्यमश्नुत इत्युक्तमततस्तदेवारोग्यं लक्षयितुमाह—

**मङ्गलाचारसम्पन्नः परिवारस्तथातुरः ।**
**श्रद्दधानोऽनुकूलश्च प्रभूतद्रव्यसङ्ग्रहः ॥ ७२ ॥**
**सत्वलक्षणसंयोगो भक्तिर्वैद्यद्विजातिषु ।**
**चिकित्सायामनिर्वेदस्तदारोग्यस्य लक्षणम् ॥ ७३ ॥**

मङ्गलेति । प्रशस्ताचरणं नित्यमप्रशस्तविसर्जनम् । एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्वदर्शिभिः । आचरणमाचारः सद्वृत्तानुष्ठानम् । मङ्गलाचाराभ्यां सम्पन्नो युक्तः परिवारः । तथा श्रद्दधानोऽवश्यं मे व्याधिरयमनेन भेषजेन नश्यतीत्येवमातुरो मन्यमानः । तथा च परिवारोऽनुकूलो दक्षिणः । तथा प्रभूतस्य द्रव्यस्य सङ्ग्रहः सङ्ग्रहणम् । तथा सत्वलक्षणयोः संयोगो वैद्यादिषु भक्तिश्चिकित्सायामुपक्रमेऽ-

निर्वेदः सोत्साहता तदेतदारोग्यलक्षणम् ।

कस्मादिदं स्थानं शारीरमुच्यत इत्यस्य निरुक्तिमाह—

**इत्यत्र जन्ममरणं यतः सम्यगुदाहृतम् ।**
**शरीरस्य ततः स्थानं शारीरमिदमुच्यते ॥ ७४ ॥**
**इति श्रीवैद्यपतिसिंहगुप्तसूनोर्वाग्भटस्य कृतावष्टाङ्गहृदय-**
**संहितायां शारीरस्थानं समाप्तमध्यायश्च षष्ठः ॥ ६ ॥**

इति परिसमाप्तौ । अत्राऽस्मिन्स्थाने यतो यस्माच्छरीरस्य जन्म सम्यगविपरीतं गर्भावक्रान्त्यादिभिश्चतुर्भिरध्यायैः प्रसङ्गानुप्रसक्तिकया उदाहृतम् । मरणं विकृतिविज्ञानीयाख्येन तथा दूतादिविज्ञानीयाख्येनाध्यायेन च कथितम् । ततः शरीरस्य जन्ममरणोदाहरणादिदं स्थानं शारीरमुच्यते । यद्यपि सर्व आयुर्वेदाख्यो ग्रन्थः शरीरमधिकृत्य प्रवृत्तस्तथापीदं स्थानं साक्षाज्जन्ममरणचिन्तनाच्छरीरस्य प्राधान्येन शारीरं स्थानमुच्यत इति ।

इति श्रीमृगाङ्कदत्तसूनुश्रीमदरुणदत्तकृतायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां द्वितीयं शारीरस्थानं षष्ठोऽध्यायश्च समाप्तः ॥





# अष्टाङ्गहृदये निदानस्थानम्।

## प्रथमोऽध्यायः।

श्रीगणेशाय नमः। अथ निदानस्थानारम्भः। अस्य चाऽयं सम्बन्धः। हेतुलिङ्गौषधस्कन्धलक्षणोऽयमायुर्वेदः प्रणीतः। तानि च हेतुलिङ्गौषधानि सूत्रस्थाने सूचितानि। शरीरलक्षणं चाधारं समुत्पाद्य तानि विस्तरेणोपदेष्टुं शक्यन्ते। तस्माच्छारीरस्थानं पूर्वमारब्धवान्। तत्रैवं सत्यौषधस्कन्ध एव प्राक् प्राधान्यादुपदेष्टुं न्याय्यः? नैवम्। हेतुलिङ्गाभ्यां ह्यामयं परीक्ष्यानन्तरं यथायोगमामयप्रशमनार्थमौषधं दातुमुचितम्। तस्माद्धेतुलिङ्गयोरेवोपादानं प्रागयुक्तं, नत्वौषधस्येति चिकित्सितस्थानात् प्रागिदमेव स्थानमुपदेष्टुं युक्तम्। तथोक्तं मुनिना—"रोगमादौ परीक्षेत ततोऽनन्तरमौषधमिति"। तस्मादौषधाद्धेतुलिङ्गयोरेवाऽऽमयं प्रति प्राधान्यमतो निदानस्थानारम्भः। तत्र च पूर्वं सर्वरोगनिदानमेवारब्धुं युक्तं, प्राधान्यात्। प्राधान्यं च सर्वरोगकारणनिर्देशात्। तथाहि—वातादय एव प्रकुपिताः सर्वरोगकारणम्। वक्ष्यति हि—'सर्वेषामेव रोगाणां निदानं कुपिता मला इति'। तेषां च कोपकारणमस्मिन्निर्दिश्यत इत्याह—

**अथाऽतः सर्वरोगनिदानं व्याख्यास्यामः।**
**इति ह स्माहुरात्रेयादयो महर्षयः।**

अथाऽत इत्यादि। सर्वे च ते रोगास्तेषां निदानं सर्वरोगनिदानम्। शेषमायुष्कामीयाध्यायवद्व्याख्येयम्। इतीत्यादिशब्दानामपि पूर्ववद्व्याख्या।

तत्र रोगाणां सामान्यं निदानं विभणिषुस्तावद्रोगाणामेव पर्यायान् वदति। रोगपर्यायश्रवणेन हि शिष्याणां तत्र तत्र शास्त्रदेशेषु सम्मोहो न भवति।

**रोगः पाप्मा ज्वरो व्याधिर्विकारो दुःखमामयः।**
**यक्ष्माऽऽतङ्कगदाऽऽबाधशब्दाः पर्यायवाचिनः॥ १॥**

रोगादयः शब्दाः पर्यायवाचिन एकार्था इत्यर्थः। ननु चैषां रोगादिशब्दानां प्रवृत्तिनिमित्तं प्रत्यर्थभेदोऽपि दृश्यते? यथा—रुजतीति रोगः, दुःखस्य कर्तृत्वाद्, दुःखस्याभिधायकः। पाप्मेति किल सर्वे रोगाः पापस्य कर्मणः फलमिति कृत्वा पाप्मेत्युच्यते। ज्वरः प्रधानो रोगाणामुक्तः। प्राधान्यं चाऽस्य दुरुपक्रमत्वादतिदुःसहत्वाच्च। अत एव सर्वकायमनःसन्तापकत्वं ज्वरस्याहुः। तथा। 'ज्या' वयोहानावित्यस्य धातोरौणादिके वरप्रत्यये सति, ज्वरशब्दस्यार्थान्तरत्वमप्यापतति। विविधमाधिं दुःखमादधाति शरीरे मनसि चेति व्याधिः। विकारो बुद्धीन्द्रियमनः

शरीराणां विकृतिमन्यथात्वं जनयतीत्यर्थः। दुःखमित्यनेनोपतापकत्वमनुभवं गमयति। आमय इत्यस्यार्थः किलाऽऽमसमुत्थाः सर्वे व्याधयः। प्रायेण हि लोकोऽखिल एव लौल्याद्देशकालापथ्यातिमात्राशी भवति। तस्य चावश्यमामसम्भवाद्बाहुल्येनामसमुत्था व्याधयः। बाहुल्यं चाङ्गीकृत्य शब्दप्रवृत्तिः। यक्ष्मेव यक्ष्मा। यथा "यक्ष्मा रोगसमूहानाम्" इत्युक्तः। एवं सर्वोऽपि रोगो रोगसमूह इत्यनेन द्योतयति। तथा च सर्वो विकार उत्पद्यमानोऽनेकैर्व्याधिलक्षणभूतैरुपद्रवभूतैश्च युक्त उत्पद्यते। यथा ज्वरस्यालस्यारोचकादयः। आतङ्क इति। 'तकि' कृच्छ्रजीवन इत्यस्य धातोराङ्पूर्वस्य रूपम्'। रोगोपतप्तत्वाद्धि स्त्रीपानभोजनादिभ्यो निवृत्ताः कृच्छ्रेण जीवन्ति। गद इव गदोऽनेककारणजन्यत्वात्। यथा हि गदोऽनेककारणजस्तथा गदोऽपीति गदशब्दस्यार्थः। आबाध इति आसमन्तात्कायमनसोर्बाधनं पीडेत्यर्थः। एवं प्रवृत्तिनिमित्तं प्रत्यर्थभेददर्शनात्कथमुक्तं पर्यायवाचिन इति ? अत्राचक्ष्महे। एवमेवैतत्, किन्तु पीडाकारित्वात् सामान्यं प्रवृत्तिनिमित्तमुररीकृत्य पर्यायवाचिन इत्युक्तम्।

**निदानं पूर्वरूपाणि रूपाण्युपशयस्तथा।**
**सम्प्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम्॥ २॥**

निदानादयः सम्प्राप्त्यन्ता रोगाणां विज्ञानं पञ्चधा स्मृतं मुनीन्द्रैरिति शेषः। निदानादिविज्ञानेन सर्वे रोगा विशेषेण बुध्यन्त इत्यर्थः। उपशयस्तथेति। यथा निदानादयो रोगाणां विज्ञानं तथोपशयोऽपीति तुल्यकक्षतां द्योतयितुं तथाशब्दं तन्त्रकृत्प्रयुक्तवान्। एवं सम्प्राप्तिश्चेत्यत्र चकारमपि। इतिः परिसमाप्तौ। एतावदेव रोगाणां विज्ञानम्। निदानं द्विधा रोगाणाम्। आसन्नं विप्रकृष्टं च। तत्रासन्नं यथा—वातादयः प्रकुपिताः। विप्रकृष्टं कारणं यथा—वातादिचयप्रकोपकरमाहारविहारादि। तत्र निदानं(यथा–)कटुकाम्लदध्यादिकं ज्वरस्य। पूर्वरूपं यथा। ज्वरस्यैवालस्यादयः। रूपं यथा—"आगमापगमक्षोभमृदुतावेदनोष्मणाम्। वैषम्यं तत्र तत्राङ्गे तास्ताः स्युर्वेदनाश्चला इत्यादि"। उपशयो यथा—ज्वरं स्नेहमर्दनादिनोपशाम्यन्तमुपलभ्य, स तु तस्योपशय इत्युच्यते। सम्प्राप्तिस्तु यथादुष्टेनेत्यादिलक्षणविनिश्चितज्ञानकारणत्वविज्ञानम्, कारणे कार्योपचारात्। निदानादीनामसमासनिर्देश एकैकस्यापि प्राधान्यमिति द्योतनाय। एवमेकैकस्योपलब्धिकारणत्वं भवति। उपचारादेव सङ्ख्यायां लब्धायां पञ्चधेत्युक्तं नियमार्थम्। पञ्चधैवैतानि तत्त्वतो नान्ये रोगावबोधहेतव सन्तीत्यर्थः।

**निमित्तहेत्वायतनप्रत्ययोत्थानकारणैः।**
**निदानमाहुः पर्यायैः,**

निमित्तादिभिः षड्भिः पर्यायैर्निदानमाहुर्वदन्ति मुनय इति शेषः। तत्र तत्र शास्त्रप्रदेशे निदानमेतैः पर्यायैर्वेद्यमित्यर्थः।

**प्राग्रूपं येन लक्ष्यते ॥ ३ ॥**

**उत्पित्सुरामयो दोषविशेषेणाऽनधिष्ठितः ।**

येनालस्यारुच्यादिनोत्पित्सुरुद्बुभूषुरामयो ज्वरादिर्लक्ष्यते तत्प्राग्रूपम् । दोषविशेषेण वातादिनाऽनधिष्ठितोऽनासादितो व्यक्तरूपेणेत्यत्राऽनुक्तमपि गम्यमानत्वादुक्तं बोध्यम् । तथाहि वातादिदोषेणाऽनधिष्ठितत्वाद्व्याधिरुत्पित्सुतैव न घटते, व्याधिकारणाभावात् । नहि वातादीन् विमुच्य व्याधेः प्रायेणाऽन्यतः सम्भवः सम्भाव्यते । वक्ष्यति हि—'सर्वेषामेव रोगाणां निदानं कुपिता मला इति' तस्माद्दोषविशेषानधिष्ठितत्वमुत्पित्सोरामयस्य यदुच्यते, तद्व्यक्तरूपदोषापेक्षमवगन्तव्यम् ।

अत एवाह—

**लिङ्गमव्यक्तमल्पत्वाद्व्याधीनां तद्यथायथम् ॥ ४ ॥**

तदित्यनेन प्राग्रूपं परामृश्यते । तत्प्राग्रूपमुत्पित्सूनां ज्वरादीनामल्पत्वादनासादितबलत्वादव्यक्तं लिङ्गमस्पष्टं लक्षणं यथायथं यद्यस्य व्याधेर्ज्वराद्यन्यतमस्यात्मीयमात्मीयम् । अतश्च प्राग्रूपं त्रिधा दृश्यते । किञ्चिच्छारीरं किञ्चिन्मानसं किञ्चिच्छारीरमानसं च । तत्र शारीरं यथा—ज्वरस्यालस्यास्यवैरस्यगात्रगौरवजृम्भासास्राकुलाक्षतेत्येवम्प्रायम् । मानसं च—अरतिर्हितोपदेशेष्वक्षान्तिरित्येवम्प्रायम् । किञ्चिच्छारीरमानसं यथा—प्रीतिरम्ले पटूषणे द्वेषः स्वादुषु भक्ष्येष्वित्येवंप्रायं शारीरमानसदोषजनितत्वात् ।

इदानीं रूपं लक्षयितुमाह—

**तदेव व्यक्ततां यातं रूपमित्यभिधीयते ।**

तदेव प्राग्रूपं, व्यक्ततां यातं व्यक्तदोषाधिष्ठितं सद् रुपमित्यभिधीयते । तदेवेत्येवशब्देनैतद् द्योतयति- यदेव शारीरं प्राग्रूपं पूर्वोपवर्णितं तदेवेह गृहीतव्यं स्थायित्वात् । तद्ध्यामयानुबन्धि । मानसं शारीरमानसं वाऽस्थायित्वान्न गृहीतव्यम् । तद्धि द्वयमप्युत्पित्सुव्याधिसमनन्तरं प्रायेण नश्यतीति तद्व्यक्ततां न याति, अतः शारीरमेवोत्पित्सुव्याधिप्राग्रूपमिह तदा परामृष्टुं युक्तम् ।

**संस्थानं व्यञ्जनं लिङ्गं लक्षणं चिह्नमाकृतिः ॥ ५ ॥**

संस्थानादयः षड् रूपस्य पर्याया इत्यर्थः । इमे च पर्यायाः प्राग्रूपस्याऽपि योज्याः । यथा पूर्वसंस्थानं पूर्वव्यञ्जनं पूर्वलिङ्गमित्यादि ।

**हेतुव्याधिविपर्यस्तविपर्यस्तार्थकारिणाम् ।**
**औषधान्नविहाराणामुपयोगं सुखावहम् ॥ ६ ॥**
**विद्यादुपशयम्,**

उपयुज्यत इत्युपयोगः सेवनम् । सुखमावहत्युत्पादयतीति सुखावहः । देहस्य

सुखं करोतीत्यर्थः। य उपयोगः सुखावहस्तमुपशयं विद्यान्मुनीन्द्र इति शेषः। केषामुपयोगः? औषधान्नविहाराणाम्। औषधं हरीतक्यादि। अन्नं रक्तशाल्यादि। विहारो वाग्देहमनोनिर्वर्तितश्चेष्टाविशेषो व्यायामव्यवायजागरणाऽध्ययनगीतभाषणधारणादिरूपः। औषधं चान्नं च विहारश्चौषधान्नविहारास्तेषामौषधान्नविहाराणाम्। तेषां किम्भूतानाम्? हेतुव्याधिविपर्यस्तविपर्यस्तार्थकारिणाम्। हेतुव्याधिविपर्यस्तानां विपर्यस्तार्थकारिणां च। विपर्यस्ता विपरीताः, हेतुव्याध्योर्विपर्यस्ताः। हेतुश्च व्याधिश्च हेतुव्याधी तयोर्विपर्यस्ता हेतुव्याधिविपर्यस्ता निदानरोगयोर्विपरीताः, य औषधान्नविहारास्ते। तथा विपर्यस्तानामर्थो विपर्यस्तार्थस्तं कुर्वन्तीति विपर्यस्तार्थकारिणः। हेतुव्याधिविपर्यस्ताश्च विपर्यस्तार्थकारिणश्च हेतुव्याधिविपर्यस्तविपर्यस्तार्थकारिणस्तेषाम्। केषां? विपर्यस्तानाम्, अर्थं कुर्वन्ति। अत्र प्रकृतत्वाद्धेतुव्याधिविपर्यस्तानाम्। तदयमर्थः—हेतुव्याध्योरविपर्यस्ता अविपरीता अपि हेतुरूपा इव भासमाना व्याधिरूपा इव भासमाना हेतुव्याधिविपर्यस्तानामर्थं व्याध्युपशमलक्षणं कुर्वन्ति। यथा हेतुव्याधिविपरीतैश्चौषधान्नविहारैर्व्याध्युपशमः क्रियते, प्रतिपक्षात्तथा विपर्यस्तार्थकारिभिरपीत्यर्थः। सङ्ग्रहे तु जगाद—"उभयार्थकारि पुनर्दैवव्यपाश्रयं, तथा छर्द्यां छर्दनमित्यादि"। एवंविधं ह्यविपरीतमेव भेषजं विपरीतमर्थं करोतीति। तत्र हेतुविपरीता औषधान्नविहारा यथा—गुरुस्निग्धशीतजे व्याधौ लघुरूक्षोष्णमौषधमन्नं वा। तथा सन्तर्पणोत्थेऽपतर्पणम्। अपतर्पणोत्थे सन्तर्पणम्। जागरणोत्थे व्याधौ स्वापः। स्वापोत्थे जागरणम्। व्यायामोत्थे आसनेत्यादि। तथा व्याधिविपर्यस्ता औषधान्नविहारा यथा—कफजे ज्वरे सर्पिःपानमौषधम्। तस्मिन्नेव ज्वरेऽन्नं पेया। विहारश्च तस्मिन्नेव कफजे ज्वरे देहमनोव्यापारोपरमः। तथा पवनसाध्ये ज्वरे दोषाऽनपेक्षमौषधं मुस्तापर्पटकम्। अन्नं रक्तशाल्यादि। प्रमेहे रजनी यवान्नं च। तथा च वक्ष्यति—"रक्तायाः शालयो जीर्णाः षष्टिकाश्च ज्वरे हिता इत्यादि"। विहारश्च यथा—"ज्वरकालस्मृतिं चाऽस्य हारिभिर्विषयैर्हरेत्"। तथा मुनिरप्यवोचत्—"ज्वरकालं च वेगं च चिन्तयन् ज्वर्यते तु यः। तस्येष्टैश्च विचित्रैश्च विषयैर्नाशयेत्स्मृतिमिति"। विपर्यस्तार्थकारिणश्च द्विधा भवन्ति। व्याधिविपर्यस्तार्थकारिणो हेतुविपर्यस्तार्थकारिणश्च। तत्र व्याधिविपर्यस्तार्थकारिणो यथा—छर्दिव्याधौ तदर्थकार्यौषधं मदनादि। अन्नं च तदुपसृष्टं शाल्यादि। अथवा यदहृद्यमसात्म्यमपरिशुष्कं गुरु च। विहारोऽङ्गुल्युत्पलनालादिना तदुद्वमनम्। यथा वाऽतिसारे विरेचनम्। वमनेन विरेचनेन च छर्द्यतीसारवृद्धिरेव कर्तुं युक्ता। तद्धेतुकत्वात्तस्य। हेतुविपर्यस्तार्थकारिणश्च यथा मद्योत्थे व्याधौ मद्यमेवोपयुक्तं व्याधिं शमयत्यौषधत्वेन। एवमन्नविहारावप्यूह्यौ। मद्येन मदात्ययस्य वृद्धिरेव कर्तुं युक्ता, तद्धेतुकत्वात्तस्य। इह तु शमनकारणाद्विपर्यस्तार्थकारित्वम्।

एतद्देव च तदर्थकारीति वदन्ति । तच्च मात्राशितीये व्याख्यातमेव ।

**व्याधेः स हि सात्म्यमिति स्मृतः ।**

हि यस्मात्स उपशयो व्याधिरामयस्य सात्म्यमिति स्मृतः । मुनीन्द्रैरिति वाक्यशेषः । एवं व्याधिगुणविपरीतो य आहारो विहारश्च प्रायेण निदानविपरीतः स व्याधिसात्म्यम् । मुनिस्त्ववोचत्–"देशानामामयानां च विपरीतगुणं गुणैः । सात्म्यमिच्छन्ति सात्म्यज्ञाश्चेष्टितं चाद्यमेव चेति" ।

उपशयलक्षणकथनप्रस्तावादनुपशयोऽपि लक्ष्य इत्याह—

**विपरीतोऽनुपशयो व्याध्यसात्म्याभिसंज्ञितः ॥ ७ ॥**

अतो यथानिर्दिष्टलक्षणादुपशयाख्याद्यो विपरीतलक्षण औषधान्नविहाराणामुपयोगः सेवनमसुखावहः सोऽनुपशय उच्यते । स एव व्याधेरसात्म्यमित्यभिसंज्ञित आभिमुख्येन सङ्केतितः ।

निदानप्राग्रूपरूपोपशयानुक्त्वा सम्प्रति सम्प्राप्तिं लक्षयितुमाह—

**यथादुष्टेन दोषेण यथा चानुविसर्पता ।**
**निर्वृत्तिरामयस्यासौ सम्प्राप्तिर्जातिरागतिः ॥ ८ ॥**

येन प्रकारेण दुष्टः कुपितो वाताद्यन्यतमो दोषो यथादुष्टस्तेन यथादुष्टेन दोषेण यथा चानुविसर्पता देहमनुधावता सन्निवेशविशेषेण गच्छता प्रत्यामयं या निर्वृत्तिर्निष्पत्तिरुद्भव इतियावद्, निर्दिष्टा सा सम्प्राप्तिः । सा च जातिरागतिश्च कथ्यते । यथा ज्वरस्य मलास्तत्रेत्यादिलक्षणलक्षितास्तत्र मलानामामाशयप्रवेशनेन तथा आमानुगमनेन तथा स्रोतोरोधेन तथा पक्तिस्थानाज्ज्वलननिरसनेन तथा तेनैव जाठरेण वह्निना तेषामभिसरणेन तथा सकलदेहतापेन गात्रं चात्युष्णं कुर्वतेत्येवंविधा सम्प्राप्त्या ज्वरोऽयमिति निश्चीयते । एवं रक्तपित्तादिष्वपि चिन्त्या सम्प्राप्तिः ।

**सङ्ख्याविकल्पप्राधान्यबलकालविशेषतः ।**
**सा भिद्यते यथाऽत्रैव वक्ष्यन्तेऽष्टौ ज्वरा इति ॥ ९ ॥**

सा च सम्प्राप्तिः सङ्ख्यादिविशेषेण भिद्यते । सङ्ख्या च विकल्पश्च प्राधान्यं च बलं च कालश्च ते, एवं तेषां विशेषः सङ्ख्याविकल्पप्राधान्यबलकालविशेषस्तस्मात्सेयं सम्प्राप्तिर्बहुधा सम्पद्यते । तत्र सङ्ख्याविशेषा यथा–इहैव वक्ष्यन्तेऽष्टौ ज्वरा इति । एवमन्यत्र पञ्च कासाः पञ्च श्वासा अष्टौ गुल्मा इत्येवमादयः सङ्ख्याविशेषाः सम्प्राप्तिभेदाः ।

**दोषाणां समवेतानां विकल्पोंऽशांशकल्पना ।**

दोषाणां वातादीनां समवेतानामेकस्मिन् व्याधौ सङ्घटितानां या अंशांशकल्पना भागेन कार्यादनुमेयेन निरूपणा स विकल्पः । अंशश्चांऽशश्चांशांशौ ताभ्यां कल्पना अनेकविधो विशेषः । यथाऽस्मिन् व्याधौ वातः कुपितः कदाचिदेकेन

गुणेनाधिकेन रूक्षेण कदाचिल्लघुना कदाचिच्छीतेन कदाचिद् द्वाभ्यां त्रिभिर्वाऽधिकैर्दुष्यति। एवं पित्तं कट्वम्लादिना कुपितं कदाचिदेकेन गुणेन तीक्ष्णेन कदाचिद् द्वाभ्यां बहुभिर्वाऽधिकैर्दुष्यति। एवं कफेऽपि निरूप्यम्। तदेवंरूपो यो निश्चयः स विकल्प इति। यतश्चैवं, ततः सर्वेषु रोगेषु तुल्याः कोपनप्रकारा न भवन्ति। तथाहि–रूक्षादयो गुणा वातस्य सदा कोपकाः, किन्तु कदाचित् कस्यचिद् गुणस्य प्रकृष्टत्वं कोपेन कस्यचिन्न्यूनत्वमिति। अतो हेतोर्गदाऽऽनन्त्यं चिकित्साऽऽनन्त्यं च। दोषाणामिति बहुवचनोपादानादेव समवेतानामित्यर्थे लब्धे समवेतग्रहणं पृथग्द्वन्द्वसमस्तानामपि वांशकल्पना विकल्प उच्यत इति प्रतिपादनार्थम्।

**स्वातन्त्र्यपारतन्त्र्याभ्यां व्याधेः प्राधान्यमादिशेत् ॥१०॥**

स्वातन्त्र्यं च पारतन्त्र्यं च ताभ्यां व्याधेः प्राधान्यमादिशेज्जानीयात्। तत्र स्वतन्त्रस्य व्याधेः प्राधान्यं यथास्वनिर्दिष्टोपक्रमसाध्यत्वात्। अस्वतन्त्रस्य व्याधेरप्राधान्यं प्रधानव्याध्युपक्रमेण प्रायस्तस्याप्युपक्रम्यत्वात्। यद्यपि प्राधान्यविशेषादसौ सम्प्राप्तिर्भिद्यत इत्युक्तं तथाप्यप्राधान्यविशेषादप्यसौ सम्प्राप्तिर्भिद्यत इत्यर्थादुक्तं भवत्येव। प्राधान्याऽप्राधान्ययोः परस्परं सापेक्षत्वात्। यथा ह्यप्राधान्यं प्राधान्यमपेक्ष्य वक्तुं युज्यते। अप्राधान्यं चापेक्ष्य प्राधान्यमिति।

**हेत्वादिकार्त्स्न्यावयवैर्बलाबलविशेषणम्।**

कृत्स्नस्य भावः कार्त्स्न्यम्। कार्त्स्न्यं चावयवाश्च कार्त्स्न्यावयवाः। हेत्वादीनां कार्त्स्न्यावयवा हेत्वादिकार्त्स्न्यावयवाः। आदिशब्देन प्राग्रूपादयो गृह्यन्ते। बलं चाबलं च बलाबले, व्याधेः सम्बन्धिनी, तयोर्विशेषेण विशिष्टता बलाबलविशेषणम्। तद्यथासङ्ख्येन हेत्वादिकार्त्स्न्यावयवैरादिशेत्। तत्र प्रतिरोगं यन्निदानत्वेनोपदिष्टं तत्किं कार्त्स्न्येनास्य व्याधेरुत्पादकमुताऽवयवेन ? एवं प्राग्रूपमपि। तथा लक्षणमपि किं समस्तस्य व्याधेर्लक्ष्यत उताऽवयवेन ? उपशयोऽप्यस्य व्याधेः सन्तर्पणापतर्पणरूपः, स किं कार्त्स्न्येन सुखानुबन्धं करोत्युतावयवेन ? तत्र कार्त्स्न्येन यथा–रक्तशाल्यादिना मांसाद्यन्यतमेन चैकैकेन। तथापतर्पणरूपोऽपि यवश्यामाकगवेधुककोरदूषनीवारतक्रारनालादिः, स किं कार्त्स्न्येन सुखानुबन्धं करोत्युतावयवेन यवादिनैकैकेन ? एवमन्यदपि चिन्त्यम्। यथा च ज्वरस्यामाशयं प्रविश्य किं कार्त्स्न्येनाथवांशेन ? तथाऽऽममनुगम्य किं कार्त्स्न्येनाथवांशेनेत्यादि। तदैवम्भूतैर्मलैरयं ज्वरो निर्वर्त्यत इत्येवं बलाबलविशेषणमादिशेदिति।

**नक्तंदिनर्तुभुक्तांशैर्व्याधिकालो यथामलम् ॥ ११ ॥**

नक्तं च दिनं च ऋतुश्च भुक्तं च तानि नक्तन्दिनर्तुभुक्तानि तेषामंशा अवयवा नक्तन्दिनर्तुभुक्तांशाः। व्याधेः कालो व्याधिकालः। यथामलं यथादोषम्। यो यस्य दोषस्यात्मीयः कालस्तं नक्तन्दिनर्तुभुक्तांशैर्व्याधिकालमादिशेत्। यथा श्लेष्मज्वरस्य रात्रिमुखे पूर्वाह्णे वा वसन्तऋतावाहारे च भुक्तमात्रे बललाभो भवति

एवं मारुतपित्तयोरपि बललाभो निरूप्यः।

इति प्रोक्तो निदानार्थः,

इतिशब्दः प्रकारे। अनेन संक्षेपाख्येन प्रकारेण यथानिर्दिष्टेन निदानार्थो निदानाभिधेयः समासतः प्रकर्षेणोक्तो नतु व्यासतः।

अत एवाह—

तं व्यासेनोपदेक्ष्यति।

य एव निदानार्थः समासेन प्रोक्तस्तमेव व्यासेनोपदेक्ष्यति तन्त्रकृदभिधास्यति।

**सर्वेषामेव रोगाणां निदानं कुपिता मलाः ॥ १२ ॥**

सर्वेषां रोगाणां कुपिता मलाः क्रुद्धा वातपित्तकफा एव निदानं हेतुः।

**तत्प्रकोपस्य तु प्रोक्तं विविधाऽहितसेवनम्।**

तदित्यनेन वातादयः परामृश्यन्ते। तस्य वातादिप्रकोपस्य निदानं विविधं नानाप्रकारमहितसेवनमहितानुष्ठानं प्रोक्तम्।

किं तत्? इत्याह—

**अहितं त्रिविधो योगस्त्रयाणां प्रागुदाहृतः ॥ १३ ॥**

तत्त्रयाणां कालार्थकर्मणां त्रिविधो हीनमिथ्यातिमात्रलक्षणो योगोऽहितमिति प्राक् सूत्रस्थान उदाहृत उक्तः। यथा—'अर्थैरसात्म्यैः संयोगः कालः कर्म च दुष्कृतमित्यादि'।

इदानीं वातादीनामन्नपानविहारमहितं कोपकारणमाह—

**तिक्तोषणकषायाल्परूक्षप्रमितभोजनैः।**
**धारणोदीरणनिशाजागरात्युच्चभाषणैः ॥ १४ ॥**
**क्रियातियोगभीशोकचिन्ताव्यायाममैथुनैः।**
**ग्रीष्माहोरात्रिभुक्तान्ते प्रकुप्यति समीरणः ॥ १५ ॥**

तिक्तादिभिः समीरणः कुप्यति। नन्वल्पप्रमितभोजनशब्दयोः पर्यायशब्दत्वाद् द्वयोरुपादानमयुक्तम्? नैतदस्ति। भिन्नार्थत्वादनयोः। तथा ह्यल्पभोजनं हीनभोजनमुच्यते। प्रमितभोजनं तु तदुच्यते यदतिक्रान्तवेलं भुक्तम्। तथा चागमः— "धान्यं पुलाकनिष्पन्नं ज्ञेयं तत्प्रमिताशनमिति। अतीतकालं यद्भुक्तमित्यादि" (च)। धारणोदीरणे वातवेगादीनाम्। क्रियातियोगो वमनविरेचनास्थापनादिक्रियाणामतिसेवनम्। नन्वास्थापनेन च वायोः कोपोऽनुपपन्नः? तथा हि— 'वाते बस्तिरिष्यत' इत्युक्तम्। नैवम्। आस्थापनातियोगो हि पित्तश्लेष्मादीनां धातूनामपचयकृत्। तदपचयाच्च वायोः कोपः। तथाचोक्तम्—'वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन चेति'। तस्माद्युक्तो वायोरास्थापनातियोगेन कोपः। तन्त्रकृताप्युक्तम्—"स्नेहबस्तिं निरूहं वा नैकमेवातिशीलयेत्। उत्क्लेशाग्निवधौ स्नेहा-

निरूहान्मरुतो भयमिति "। ग्रीष्मान्तः इत्यन्तशब्दः समीपवचनो वेद्यः । तेन ग्रीष्मसमीपे वर्षाख्ये काले प्रकोप इति युज्यते। अन्यथा "चयप्रकोपप्रशमा वायोग्रीष्मादिषु" इत्येतद्व्याहन्यते।

पित्तं कट्वम्लतीक्ष्णोष्णपट्वक्रोधविदाहिभिः।
शरन्मध्याह्नरात्र्यर्धविदाहसमयेषु च ॥ १६ ॥

पित्तं कट्वादिभिः कुप्यति। अर्धरात्रे पित्तस्य कालस्वभावात्कोपः।

स्वाद्वम्ललवणस्निग्धगुर्वभिष्यन्दिशीतलैः।
आस्यास्वप्नसुखाजीर्णदिवास्वप्नातिबृंहणैः ॥ १७ ॥
प्रच्छर्दनाद्ययोगेन भुक्तमात्रवसन्तयोः।
पूर्वाह्णे पूर्वरात्रे च श्लेष्मा,

स्वाद्वादिभिः कफः कुप्यति।

द्वन्द्वं तु सङ्करात् ॥ १८ ॥

द्वयं द्वयं वातपित्ते वातकफौ पित्तकफाविति । सङ्करान्मिश्रीभावात्तिक्तादीनां कुप्यति। एतदुक्तं भवति—येन तिक्तकट्वादिर्वातपित्तहेतुः सेवितस्तस्य वातपित्ते प्रकुप्यतः। एवं शेषयोर्योज्यम्।

मिश्रीभावात्समस्तानां सन्निपातस्तथा पुनः।
सङ्कीर्णाजीर्णविषमविरुद्धाध्यशनादिभिः ॥ १९ ॥
व्यापन्नमद्यपानीयशुष्कशाकाममूलकैः।
पिण्याकमृद्यवसुरापूतिशुष्ककृशामिषैः ॥ २० ॥
दोषत्रयकरैस्तैस्तैस्तथान्नपरिवर्ततः।
धातोर्दुष्टात्पुरोवाताद् ग्रहोवशाद्विषाद्गरात् ॥ २१ ॥
दुष्टान्नात्पर्वताश्लेषाद् ग्रहैर्जन्मर्क्षपीडनात्।
मिथ्यायोगाच्च विविधात्पापानां च निषेवणात् ॥ २२ ॥
स्त्रीणां प्रसववैषम्यात्तथा मिथ्योपचारतः।

समस्तानां तिक्तादीनां मिश्रीभावात्सन्निपातः कुप्यति। 'तथेति समुच्चये'। सङ्कीर्णाशनादिभिश्च सन्निपातः कुप्यति । आदिशब्देन पर्युषितक्लिन्नादिभोजनादयो गृह्यन्ते। सङ्कीर्णाशनादीनां लक्षणं प्रागुक्तम् । दोषत्रयकरैस्तैरिति पूर्वोक्तैर्भेरण्डकदधिफाणितयवकपाटलव्रीहिसर्षपशाकादिभिः। तथेति न केवलमेतैरेव, परिवर्तनादिभिश्चेति तथाशब्दस्यार्थः।

प्रतिरोगमिति क्रुद्धा रोगाधिष्ठानगामिनीः ॥ २३ ॥
रसायनीः प्रपद्याशु दोषा देहे विकुर्वते।

प्रत्यामयमित्यनेन प्रकारेण क्रुद्धाः कुपिता दोषा आशु द्रागेव देहे विकुर्वते विकारं जनयन्ति। किं कृत्वा? रसायनीर्नाडीः प्रपद्य प्राप्य। किम्भूताः? रोगस्या-

धिष्ठानानि स्थानानि रसरुधिरादीनि, तानि गन्तुं शीलं यासां ता रोगाधिष्ठानगामिन्यस्तास्तथाविधा नाडीः प्रपद्य प्राप्य विकृतिभाजो दोषाः सम्पद्यन्त इत्यर्थः ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां निदानस्थाने प्रथमोऽध्यायः ।



# द्वितीयोऽध्यायः ।

सर्वरोगनिदानादनन्तरं ज्वरनिदानारम्भेऽयं सम्बन्धः । उक्तं सर्वरोगनिदानम् । अतोऽनन्तरमवश्यं कस्यचिद्विशिष्टस्य रोगस्य निदानं वक्तुमुचितम् । रोगेषु च ज्वरः प्रधानः । तथा च मुनिः—"ज्वरो रोगाणामिति" । स्वयमेव चास्य प्राधान्यं तन्त्रकृत्प्रतिपादयिष्यतीति ज्वरनिदानमेवारब्धुं युक्तम् ।

**अथाऽतो ज्वरनिदानं व्याख्यास्यामः ।**

अथादिशब्दानां पूर्ववद्व्याख्या ।

**ज्वरो रोगपतिः पाप्मा मृत्युरोजोऽशनोऽन्तकः ।**
**क्रोधो दक्षाध्वरध्वंसी रुद्रोर्ध्वनयनोद्भवः ॥ १ ॥**
**जन्मान्तयोर्मोहमयः सन्तापात्माऽपचारजः ।**
**विविधैर्नामभिः क्रूरो नानायोनिषु वर्तते ॥ २ ॥**

रोगाणां पती रोगपतिः सर्वरोगप्रधानः । पाप्मा पापस्वभावः । तथा मृत्युः, सर्वप्राणिनो हि मरणेनाऽसावेव योजयति यथा, न तथाऽन्ये रोगाः । सर्वधात्वाप्यायकं यदोजस्तदशनं भोजनं यस्येत्योजोऽशनः । अन्तको मारणहेतुसामान्यात् । क्रोधो भगवतो महेश्वरस्य दक्षापमानितस्य लोकान्निर्दिधक्षोर्ललाटान्निर्गतः । अत एवाह दक्षाध्वरध्वंसी रुद्रोर्ध्वनयनोद्भव इति । जन्मान्तयोर्मोहमय इति । ज्वरस्य सन्तापात्मकत्वं लिङ्गम् । जन्मान्तयोश्च क्वचित्सन्तापानुलब्धेर्मोहमयइत्युक्तम् । मोहस्वभावादेवान्यजन्मजं कर्म प्राणी न स्मरति । यश्चापचारजस्तथाविधादाहारविहारादुद्भूतः स सन्तापस्वभावः स च क्रूरो दुश्चिकित्स्यः । नानायोनिषु हस्त्यश्वगोपक्ष्यादिषु च विविधैर्नामभिर्वर्तते । यथा—"पाकलस्तु यथेभानामभितापो हयेषु च । गवां गोकर्णकश्चैव पक्षिणां मकरस्तथा । वान्तादानामलर्कः स्यादब्जेष्विन्द्रमदः स्मृतः । ओषधीषु तथा ज्योतिश्चूर्णको धान्यजातिषु । जलेषु नीलिका भूमौ चूषो नृणां ज्वरो मतः । ऋते देवमनुष्येभ्यो नान्यो विषहते तु तम् । शेषाः सर्वे विपद्यन्ते तिर्यग्यौनौ ज्वरार्दिताः । कर्मणा लभते जन्तुर्देवत्वं मानुषादपि । पुनश्चैव च्युतः स्वर्गान्मानुष्यमभिपद्यते । तस्मात्स देवभावाच्च सहते मानवो ज्वरम्" । यथा—दन्तिशरीरे पाकलो नाम ज्वरः । अश्वशरीरेऽभितापकः । गोशरीरे गोकर्णकः । पक्षिशरीरे मकरः । श्वशरीरेऽलर्कः । मत्स्येष्विन्द्रमदः ।

ओषधीषु ज्योतिः। धान्येषु चूर्णकः। अप्सु नीलिका। भूमौ चूषः। मानुषेषु ज्वर इति। ननु यदि रुद्रोर्ध्वनयनोद्भवस्तर्ह्यपचारज इति कथमुक्तम्? अमः— पूर्वं कृतयुगे ललाटजलोचनादुत्पन्नो ज्वरः। त्रेतायुगे तु सम्प्राप्ते परिग्रहदोषाद्धर्मस्य पादेऽन्तर्हित इत्यपचारेणासौ प्रथमं प्राणिषूद्भूतोऽपचारज उच्यते। कलियुगेऽप्यन्नपानौषधाद्यपचारेण जात इत्यपचारज उच्यत इति न किञ्चिदत्राऽयुक्तम्।

स चाऽपचारजो ज्वरः किमेको वाऽनेकविध इत्याह—

**स जायतेऽष्टधा दोषैः पृथङ्मिश्रैः समागतैः।**
**आगन्तुश्च,**

स सन्तापलक्षणो ज्वरोऽष्टधाऽष्टप्रकारः सम्पद्यते। कथम्? पृथग्दोषैर्वातपित्तकफैस्तथा मिश्रैर्द्वाभ्यां द्वाभ्यां, तथा समागतैः सन्निपतितैस्त्रिभिस्तथाऽऽगन्तुकारणजनितो ज्वरः। एवं पृथग्दोषैस्त्रयो मिश्रैस्त्रयः सन्निपतितैरेक आगन्तुकश्चैक इत्यष्टौ।

सम्प्राप्तिमस्याधुना वक्ति—

**मलास्तत्र स्वैःस्वैर्दुष्टाः प्रदूषणैः॥ ३॥**
**आमाशयं प्रविश्याममनुगम्य पिधाय च।**
**स्रोतांसि पक्तिस्थानाच्च निरस्य ज्वलनं बहिः॥ ४॥**
**सह तेनाभिसर्पन्तस्तपन्तः सकलं वपुः।**
**कुर्वन्तो गात्रमत्युष्णं ज्वरं निर्वर्तयन्ति ते॥ ५॥**
**स्रोतोविबन्धात्प्रायेण ततः स्वेदो न जायते।**

तत्रेति निर्धारणे। तेष्वष्टसु ज्वरेषु मध्ये निजानां ज्वराणामुत्पत्तिर्निर्धार्यते। मला वातादयः स्वैः स्वैः प्रदूषणैः कोपनैर्दुष्टाः कुपिता ज्वरं निर्वर्तयन्त्युत्पादयन्ति। तत्र यथा वातस्तिक्तादिभिः। पित्तं कटुकादिभि। कफः स्वाद्वादिभिः। एवं संसर्गे सन्निपाते च चिन्त्यम्। आगन्तुना च केनचित् प्रकुपिता दोषा ज्वरं निर्वर्तयन्ति। यद्यपि चागन्तुकज्वरस्तद्धेतुकस्तथाऽपि तत्राऽपि वातादय एव हेतवः। न हि वातादीन् विमुच्य व्याधेः समुद्भवः कथमपि सम्भाव्यते। एतावांस्तु विशेषः–दोषजे व्याधौ पूर्वं वातादयः कुप्यन्ति पश्चात्कायस्य पीडा भवति। आगन्तुजे व्याधौ पूर्वं शरीरस्य व्यथा भवति पश्चाद्वातादिकोप इति। कयाऽनुपूर्व्या ज्वरं निर्वर्तयन्तीत्याह। आमाशयमित्यादि। आमाशयं प्रविश्य नाभिस्तनान्तरे स्थित्वा तथाऽऽमं पूर्वोक्तलक्षणलक्षितमनुगम्य तेन चामेनानुगताः स्रोतांसि रसादिवाहीनि पिधाय छादयित्वा तथा ज्वलनं पक्तिस्थानाद्बहिर्निरस्य निष्कास्य। पक्तिग्रहणमत्र जाठराग्नेर्निःसन्देहेन ग्रहणार्थमन्यथा त्रयोदशानामग्नीनां मध्यात्कतमं ज्वलनं स्थानाद्बहिर्निरस्येति सन्दिह्येतेति। तेन च निरस्तवह्निना सहैकलोलीभूताः सकलं वपुरभिसर्पन्तस्तपन्तो गात्रमत्युष्णं कुर्वन्तो ज्वरं निर्वर्तयन्ति। अत्युष्णग्रहणेनैतत्प्र-

तिपादयति । अत्युष्णगात्रत्वेनैव ज्वरसम्भवो नोष्णगात्रमात्रेण । तथा च निरामयस्याऽपि हि प्राणिनो जीवतो गात्रमुष्णं भवत्येव । ननु वायुकृते ज्वरे वायोर्योगवाहित्वात्पित्तकृतेऽपि ज्वरे पित्तस्य वह्निना समानगुणत्वात्सन्तापोपलब्धिर्युक्ता, श्लेष्मज्वरे तु श्लेष्मणो वह्निप्रतिपक्षत्वात्कथमिव सन्तापकत्वं युक्तम्? इति केचित्। अत्रोच्यते—स्वाभावादुपपन्नमेतत् । ज्वरस्य ह्ययमचिन्त्यः स्वभावो येनावश्यं सन्तापमुत्पादयति । एवं वातस्याऽमूर्तिमत्वेऽपि गुल्मादिषु श्यावारुणत्वोपलब्धिः । तस्माद्व्याधीनामेव स्वभावविशेषान्न्याय्यमेवेदम् । स्रोतोविबन्धादिति । यत एव स्रोतःपिधानं तत एव हेतोः स्वेदो न जायते । प्रायोग्रहणात् क्वचित्पित्तज्वरादौ स्वेदो जायत एवेत्यर्थः । तथा चानन्तरमेव तन्त्रकृदधीते—'स्वेदो निःश्वासवैगन्ध्यमित्यादि' ।

पूर्वरूपं लक्षयितुमाह—

**तस्य प्राग्रूपमालस्यमरतिर्गात्रगौरवम् ॥ ६ ॥**
**आस्यवैरस्यमरुचिर्जृम्भा सास्राऽऽकुलाक्षता ।**
**अङ्गमर्दोऽविपाकोऽल्पप्राणता बहुनिद्रता ॥ ७ ॥**
**रोमहर्षो विनमनं पिण्डिकोद्वेष्टनं क्लमः ।**
**हितोपदेशेष्वक्षान्तिः प्रीतिरम्लपटूषणे ॥ ८ ॥**
**द्वेषः स्वादुषु भक्ष्येषु तथा बालेषु तृड् भृशम् ।**
**शब्दाग्निशीतवाताम्बुच्छायोष्णेष्वनिमित्ततः ॥ ९ ॥**
**इच्छा द्वेषश्च तदनु ज्वरस्य व्यक्तता भवेत् ।**

तस्य ज्वरस्य प्राग्रूपमालस्यं वाङ्मनःकायकर्मस्वनुद्यमः । सुश्रुते चोक्तम् । यथा "सुखस्पर्शप्रसङ्गित्वं दुःखद्वेषणलोलता । शक्तस्य चाप्यनुत्साहः कर्मण्यालस्यमुच्यत इति" । अरतिरेकत्रानवस्थितिश्चेतसः । तथाङ्गगुरुत्वम् । आस्यवैरस्यं वक्त्रविरसता । अरुचिरन्नाभिलाषाभावः । जम्भा जृम्भणम् । सहास्रेण वर्तत इति सास्रे आकुले अक्षिणी यस्य स एवं तस्य भावः सास्राकुलाक्षता । अङ्गमर्दोऽङ्गभङ्गः । अविपाकोऽन्नस्याविपक्तिः । अल्पप्राणता स्तोकबलत्वम् । तथा बहुनिद्रता । 'त्वतलोर्गुणवचनस्य पुंवद्भावो वक्तव्य इत्यत्र पुंवद्भावः' । रोमहर्षो रोमाञ्चः । विनमनमङ्गानां विनामः । पिण्डिकयोरुद्वेष्टनमुद्वेष्टः । क्लमो ग्लानिः । हितस्य गुरुपित्रादेरुपदेशास्तेष्वक्षान्तिरसहनत्वम् । तदुपदिष्टं न क्षमते । प्रीतिरित्यादि । अम्लादिषु द्रव्येषु प्रीतिर्भक्तिः । स्वादुषु भक्ष्येषु मधुरेषु द्रव्येषु द्वेषो भवति तथा बालेषु शिशुषु सकललोकवल्लभेष्वपि ज्वरस्वभावाद् द्वेषो भवति । तथा तृड् भृशं तृष्णाऽत्यर्थम् । शब्दादिष्वनिमित्ततः कारणं विना सज्वरस्य प्रीत्यप्रीती जायेते । कदाचिदप्रियमपि शब्दं न द्वेष्टि कदाचित् प्रियमपि वेणुवीणादिजनितं द्वेष्टि । एवं शीतार्तोऽपि कदाचिदग्निं द्वेष्टि कदाचिदशीतार्तोऽग्निमभिलषति । एवं शीतादि-

ष्वपि योज्यम्। एवं प्राग्रूपमव्यक्तलिङ्गम्। तथा एतस्य चानु प्राग्रूपाणां पश्चाज्ज्वरस्य व्यक्तता स्फुटता भवेत् स्पष्टलिङ्गोत्पत्तिः। वातज्वरोऽयं पित्तज्वरोऽयं श्लेष्मज्वरोऽयं संसर्गजोऽयं सन्निपातजोऽयमिति व्यक्तीभवति।

आगमापगमक्षोभमृदुता वेदनोष्मणाम् ॥ १० ॥
वैषम्यं तत्र तत्राऽङ्गे तास्ताः स्युर्वेदनाश्चलाः।
पादयोः सुप्तता स्तम्भः पिण्डिकोद्वेष्टनं श्रमः ॥ ११ ॥
विश्लेष इव सन्धीनां साद ऊर्वोः कटीग्रहः।
पृष्ठं क्षोदमिवाप्नोति निष्पीड्यत इवोदरम् ॥ १२ ॥
छिद्यन्त इव चास्थीनि पार्श्वगानि विशेषतः।
हृदयस्य ग्रहस्तोदः प्राजनेनेव वक्षसः ॥ १३ ॥
स्कन्धयोर्मथनं बाह्वोर्भेदः पीडनमंसयोः।
अशक्तिर्भक्षणे हन्वोर्जृम्भणं कर्णयोः स्वनः ॥ १४ ॥
निस्तोदः शङ्खयोर्मूर्ध्नि वेदना विरसास्यता।
कषायास्यत्वमथवा मलानामप्रवर्तनम् ॥ १५ ॥
रूक्षारुणत्वगास्याऽक्षिनखमूत्रपुरीषता।
प्रसेकारोचकाऽश्रद्धाऽविपाकाऽस्वेदजागराः ॥ १६ ॥
कण्ठौष्ठशोषस्तृट् शुष्कौ छर्दिकासौ विषादिता।
हर्षो रोमाङ्गदन्तेषु वेपथुः क्षवथोर्ग्रहः ॥ १७ ॥
भ्रमः प्रलापो घर्मेच्छा विनामश्चानिलज्वरे।

आगमादीनां वैषम्यमनिलज्वरे लिङ्गमिति योज्यम्। ज्वरस्यागमः सन्तापारम्भस्तस्य वैषम्यं शिरःप्रभृतीनामङ्गानां न युगत्सन्तापः, अपि तु कदाचिदस्य शिरसि पूर्वमागच्छति, कदाचिदंसयोः पादयोर्भवति। अपगमो ज्वरस्य मोक्षस्तस्य वैषम्यं कदाचिदस्य पूर्वं पादयोः सन्तापमोक्षः कदाचित्त्रिके कदाचिच्छिरसि सन्तापस्य मुक्तिरिति। तथा क्षोभमृदुतयोर्वैषम्यं कदाचित्तीव्रः सन्तापः कदाचिन्मृदुरिति। वेदना ज्वरस्य तास्तास्तासां वैषम्यं न युगपत्सर्वाङ्गीणो वेदनोपलम्भोऽपि तु क्वचित्कदाचित्कस्मिंश्चिदङ्ग इति। तथा ज्वरस्य य ऊष्मा सन्तापस्तस्याऽपि वैषम्यात्कदाचिच्छिरस्यस्य सन्ताप उपलभ्यते कदाचित्पादाद्यन्यतमेऽङ्गे तत्र तत्राङ्गे बाहुशिरःप्रभृतौ तास्ता वेदनाः पादयोः सुप्तताद्या वक्ष्यमाणाश्चला अनवस्थिताः स्युर्वायोश्चलरूपत्वात्। ता एवाह—पादयोरित्यादि। पादयोः सुप्तिर्निश्चेतनत्वम्। नखक्षतादिकमपि न चिन्तयेतां तावित्यर्थः। स्तम्भः स्तब्धता तयोरेव पिण्डिकयोरुद्वेष्टनमुद्वेष्टः। श्रमः खेदः। सन्धीनां विच्छेदनमिव। ऊर्वोः सादः स्वक्रियायामसमर्थत्वम्। कट्या ग्रहः स्तम्भ इव। पृष्ठं क्षोदमिव संक्षुण्णतामिवाप्नोति संक्षुण्णशस्यादिवत्। निष्पीड्यत इवोदरं पिण्याकादिवत्। छिद्यन्त इवास्थीनि करपत्रादिना काष्ठवदतिशयेन पार्श्वगान्यस्थीनि छिद्यन्त इव। तथा

हृदयस्य ग्रहणम् । वक्षसः उरसः प्राजनेनैव प्रतोदेनैव तोदो व्यथनम् । स्कन्धयोर्मथनमरणेरिव । बाह्वोर्भेदो विदारणमिव । अंसयोः पीडनं तैलादिपीडनं काष्ठैरिव । हन्वोर्भञ्जोऽसामर्थ्यं तथा जृम्भणादीनि स्युः । विरसास्यताऽव्यक्तरसत्वं मुखेऽस्य भवति येन मधुराद्यन्यतमं रसं न निश्चिनोति । अथवा कषायरसत्वं वक्त्रस्य । मलानां मूत्रपुरीषादीनामप्रवर्तनमविसर्गः । रूक्षत्वमरुणत्वं च त्वगादीनां भवति, रोगस्वभावात् । तथा प्रसेकादयः स्युः । अत्रारोचकाश्रद्धयोः को विशेषः ? ब्रूमः । अरोचकेन वक्त्रस्थमपि न भुङ्क्ते । अश्रद्धया तु केवलं नाभिलषति मुखस्थं तु भक्षयत्येवेति विशेषः । विषादिता विषण्णत्वं दुःखित्वम् । रोमादीनां हर्षो वेपथ्वादयश्च वातज्वरे स्युः ।

अथ पित्तज्वरलक्षणार्थमाह—

युगपद्व्याप्तिरङ्गानां प्रलापः कटुवक्त्रता ॥ १८ ॥
नासास्यपाकः शीतेच्छा भ्रमो मूर्च्छा मदोऽरतिः ।
विट्स्रंसः पित्तवमनं रक्तष्ठीवनमम्लकः ॥ १९ ॥
रक्तकोठोद्गमः पीतहरितत्वं त्वगादिषु ।
स्वेदो निःश्वासवैगन्ध्यमतितृष्णा च पित्तजे ॥ २० ॥

पित्तज्वरे युगपत्तुल्यकालमङ्गानां व्याप्तिः=शिरःप्रभृतीन्यङ्गानि सन्तापेनैककालं व्याप्यन्ते । नतु वातज्वर इवागमादीनां वैषम्यमिति व्याप्तिग्रहणेन द्योतयति । प्रलापोऽसम्बद्धवचनस्योक्तिः । कटुकरसत्वमास्ये । तथा नासायामास्ये च पाकः । तथा शीतेच्छादयोऽत्र भवन्ति । मण्डलाकारा निर्मुखाः पिटिकाः कोठा इत्युच्यन्ते । ननु दोषास्त्रयोऽपि ज्वरं निवर्तयन्तीत्युक्तम् । पित्तज्वरे च पित्तेन युक्तस्य कायाग्नेर्भूयो वृद्ध्या भाव्यं, नाग्निमान्द्येन । "वृद्धिः समानैः सर्वेषामिति" वचनात् । एवञ्चाग्निमान्द्याभावाज्ज्वरस्य सम्भवेऽप्युपपत्तिरयुक्ता ? नैवम् । स्वस्थानाच्चालनेनाऽग्नेर्मान्द्यापत्तेः । स्थानवशादन्यथात्वस्याप्यग्नेः क्रियासामर्थ्यं दृष्टम् । तथा चाष्टाङ्गसङ्ग्रहे शोषनिदाने वक्ष्यति—"योंऽशः शरीरसन्धीनाविशति तेन जृम्भा ज्वरश्चोपजायत इत्यादि" । तस्मात्स एवाग्निः क्वचिदेव देशे पक्तुं शक्तो भवति न सर्वत्र । उष्णगुणेन तु पित्तेन युक्तः पक्ता भवत्येवोष्णतरः । अत एव सन्तापादीनधिकतरान् करोतीति न किञ्चिदत्रानुपपन्नम् ।

कफज्वरलक्षणमाह—

विशेषादरुचिर्जाड्यं स्रोतोरोधोऽल्पवेगता ।
प्रसेको मुखमाधुर्यं हृल्लेपश्वासपीनसाः ॥ २१ ॥
हृल्लासश्छर्दनं कासः स्तम्भः श्वैत्यं त्वगादिषु ।
अङ्गेषु शीतपिटिकास्तन्द्रोदर्दः कफोद्भवे ॥ २२ ॥

सर्वज्वरेऽरुचिर्भवत्येव । अतिशयेन तु कफजे । तथा जाड्यादयः स्युः । त्वगा-

दिष्वित्यादिशब्द आस्याक्षिनखादीनां ग्रहणाय । उदर्दस्य लक्षणं तन्त्रान्तर उक्तम्–"शीतपानीयसंस्पर्शाच्छीतकाले विशेषतः । श्वयथुः शिशिरार्तानामुदर्दः कफसम्भव इति" ।

एवं त्रयाणां दोषाणां पृथग्लिङ्गान्यभिधाय सामान्यलिङ्गान्यधुना कथयति–

**काले यथास्वं सर्वेषां प्रवृत्तिर्वृद्धिरेव वा ।**

कालः पूर्वाह्णादिको वर्षादिको वा यो वातादेस्तस्मिन् काले यथास्वं यथायथं वातादिज्वराणामप्रवृत्तानां प्रवृत्तिरुत्पत्तिरुत्पन्नानामाधिक्यं वा स्यात्तदा वातादिज्वरोऽयमित्यवबुध्येत ।

इदानीं सामान्येनान्यदपि लिङ्गद्वयमाह—

**निदानोक्ताऽनुपशयो विपरीतोपशायिता ।**

निदानानि च तान्युक्तानि च तिक्तोषणादीनि वातादिज्वरकारणानि तैरनुपशयो यस्मिन् ज्वरे स एवम् । रोगवृद्धया हि रोगिणो दुःखावहत्वम् । ननु निदानाऽनुपशय इत्येतावदस्तु ? किमुक्तग्रहणेन ? उच्यते । उक्तग्रहणं स्वस्वनिदानग्रहणार्थम् । उक्तग्रहणमन्तरेण यानि कानिचिन्निदानानि रक्तपित्तश्वासादीनि तेषामनुपशय इत्येवं प्राप्नुयात् । उक्तशब्दोच्चारणसामर्थ्यात्तु यान्येव वातज्वर उक्तानि तान्येव तत्र ज्वरे गृह्यन्ते नेतराणि । एवं पित्तकफादिज्वरादिषु । तस्मादुक्तग्रहणं कर्तव्यम् । विपरीतोपशायितेति । उपशेतेऽवश्यमित्युपशायि विपरीतैरुपशायि विपरीतोपशायि, तस्य भावो विपरीतोपशायिता सुखानुबन्ध आरोग्यलक्षणः । कस्य विपरीतैः ? प्रकृतत्वान्निदानस्यैव । एवं ज्वरनिदानप्रतिपक्षभूतैः सर्वेषां ज्वराणामुपशयः सुखानुबन्धो विपरीतोपशायितेति बोध्यम् । ननु निदानोक्तानुपशय इतीदमेवास्तु किं विपरीतोपशायितेत्यनेन । यस्य हि निदानोक्तानुपशयस्तस्याऽवश्यं विपरीतोपशायितया भाव्यम् ? नैवमनैकान्तिकत्वात् । तथा ह्यतीसारादिषु निदानोक्तानुपशय उपलभ्यते । न च सामावस्थायां विपरीतं सङ्ग्राह्युपशायिता । अपि च मद्योत्थानां विकाराणां मद्यमेव प्रबाधकमित्युक्तम् । न चैवं विपरीतोपशायितेति घटते । तस्मान्न्याय्यमुभयोरुपादानम् । एवं हि लक्षणं सम्यगुक्तं भवति ।

**यथास्वलिङ्गसंसर्गे ज्वरः संसर्गजः,**

यद्यत्स्वं यथास्वं, यानि ज्वरस्य स्वानि लिङ्गानि वातज्वरस्य पित्तज्वरस्य श्लेष्मज्वरस्य च तेषां संसर्गो लिङ्गसंसर्गः संसृष्टलिङ्गत्वं, तस्मिन्सति संसर्गजो ज्वरो वेद्यः । अत्राऽपि काले यथास्वमित्यादि सर्वं लक्षणं बोध्यम् ।

न चैतावदेव संसर्गलक्षणमित्याह—

**अपि च ॥ २३ ॥**

**शिरोऽर्तिमूर्च्छावमिदाहमोहकण्ठाऽऽस्यशोषारतिपर्वभेदाः ।**

**उन्निद्रतातृड्भ्रमरोमहर्षा जृम्भाऽतिवाक्त्वं च चलात्सपित्तात्॥२४॥**

चलात्सपित्ताद्वातपित्तसंसर्गजे शिरोऽर्त्यादयः स्युः। कण्ठास्ययोः शोषेण सम्बन्धः। वातज्वरे शिरोऽर्त्यादीनि प्रायो दृष्टानि, कानिचित्तु पित्तज्वरे दृष्टानि, तानि च वातपित्तज्वरे दृश्यन्ते। तथाऽन्यान्यप्यधिकान्यत्र वातपित्तज्वरे दृष्टानि, यानि न केवले वातज्वरे नाऽपि पित्तज्वरे दृष्टानि। एवमन्ययोः संसर्गज्वरयोर्योज्यम्। 'उपजातिर्वृत्तम्'।

इदानीं कफानिलसंसर्गलक्षणमाह—

**तापहान्यरुचिपर्वशिरोरुक् पीनसश्वसनकासविबन्धाः।**
**शीतजाड्यतिमिरभ्रमतन्द्राः श्लेष्मवातजनितज्वरलिङ्गम्॥ २५॥**

तापहान्यादि श्लेष्मवातज्वरस्य लिङ्गम्। तापहानिस्तापाभावः। विबन्धो मूत्रपुरीषादीनाम्। 'स्वागता वृत्तम्'।

अधुना कफपित्तसंसर्गज्वरं लक्षयति—

**शीतस्तम्भस्वेददाहाऽव्यवस्थास्तृष्णा कासः श्लेष्मपित्तप्रवृत्तिः।**
**मोहस्तन्द्रा लिप्ततिक्तास्यता च ज्ञेयं रूपं श्लेष्मपित्तज्वरस्य॥ २६॥**

शीतादीनामव्यवस्थाऽनियमः। तथा तृष्णा प्रवृत्त्यादिकं च श्लेष्मपित्तज्वरस्य वेद्यम्। 'शालिनी वृत्तम्'। अथ द्विदोषजातानां ज्वराणां किमागमापगमवैषम्यादिना क्रमेणोत्पत्तिर्युगपत्सर्वशरीरप्राप्त्या वा? इत्यत्र संशयः। तत्र संसर्गजत्वादेककालं द्वयोरपि पक्षयोः सम्भवो युक्तः। किन्त्वेतयोः पक्षयोर्विरोधाद् युगपदसम्भव इति। अत्रोच्यते—यदि संसर्गजे ज्वरे बलवान् वायुः स्यात्तदाऽऽगमापगमवैषम्यादिना क्रमेण। अथ (यदि) पित्तस्य बलीयस्त्वं तदा युगपत्सर्वशरीरव्याप्तिक्रमेण। समौ यदा द्वावपि भवतस्तदाऽपि यस्य देशकालादिना बललाभस्तदा तस्यैवोत्पत्तिक्रमेण ज्वरो भवति। सन्निपाते तु युगपदेव शरीरव्याप्तिः।

अथ सन्निपातज्वरस्य लक्षणमाह—

**सर्वजो लक्षणैः सर्वैर्दाहोऽत्र च मुहुर्मुहुः।**
**तद्वच्छीतं महानिद्रा दिवा जागरणं निशि॥ २७॥**
**सदा वा नैव वा निद्रा महास्वेदोऽति नैव वा।**
**गीतनर्तनहास्यादिविकृतेहाप्रवर्तनम्॥ २८॥**
**साश्रुणी कलुषे रक्ते भुग्ने लुलितपक्ष्मणी।**
**अक्षिणी पिण्डिकापार्श्वमूर्धपर्वास्थिरुग्भ्रमः॥ २९॥**
**सस्वनौ सरुजौ कर्णौ कण्ठः शूकैरिवाचितः।**
**परिदग्धा खरा जिह्वा गुरुः स्रस्ताङ्गसन्धिता॥ ३०॥**
**रक्तपित्तकफष्ठीवो लोलनं शिरसोऽतिरुक्।**





**कोठानां श्यावरक्तानां मण्डलानां च दर्शनम् ॥ ३१ ॥**
**हृद्व्यथा मलसंसर्गः प्रवृत्तिर्वाऽल्पशोऽति वा ।**
**स्निग्धास्यता बलभ्रंशः स्वरसादः प्रलापिता ॥ ३२ ॥**
**दोषपाकश्चिरात्तन्द्रा प्रततं कण्ठकूजनम् ।**
**सन्निपातमभिन्यासं तं ब्रूयाच्च हृतौजसम् ॥ ३३ ॥**

सर्वेभ्यो जातो वातपित्तकफसमुत्थः सर्वजः सर्वैर्लक्षणैर्युतो भवति । तथा तत्र च सन्निपातज्वरे दाहो मुहुर्मुहुः । तद्वद्दाहवत् पुनः पुनः शीतं भवति । अहनि महती निद्रा । रात्रौ तु जागरणम् । सदा वा दिवसे निशि च नैव वेति द्वयोरपि नक्तन्दिवसयोर्निद्रा न भवति । तथा बहुस्वेदोऽतिशयेन नैव वा स्वेदः । तथा गीतादिकाया विकृताया ईहायाश्चेष्टायाः प्रवर्तनम् । तथा नयने सास्रे भवतः । तथा कलुषे रक्ते तथा कुटिले तथा लुलिते पक्ष्मणी ययोस्ते एवम् । तथा पिण्डिकादिरुक् । भ्रमो मोहः । कर्णौ सशब्दौ सरुजौ सपीडौ च । कण्ठः शूकैः किंशारुभिरिव व्याप्तः । जिह्वा परिदग्धा तथा खरा अमृदुः । तथा गुरुः । तथा स्रस्ताङ्गसन्धित्वम् । रक्तादिष्ठीवनम् । मूर्ध्नो लोलनं चलनम् । तथा अतिरुक् । कोठानां श्यावरक्तानां मण्डलानां च दर्शनम् । नैव वेत्यत्राऽपि योज्यम् । तथा हृदि पीडा । मलानां मूत्रपुरीषादीनामप्रवृत्तिः । अल्पशो वा प्रवृत्तिरतिशयेनाऽथवा । तथा स्निग्धास्यतादि भवति । अथास्य सन्निपातस्य नामद्वयमाह । तं सन्निपातमभिन्यासं हृतौजसं च ब्रूयात् । तत्र–"ओजस्तु तेजोधातूनाम्" इत्याद्योजोलक्षणम् । हृतमोजो येन स हृतौजास्तं हृतौजसम् ।

**दोषे विबद्धे नष्टेऽग्नौ सर्वसम्पूर्णलक्षणः ।**
**असाध्यः सोऽन्यथा कृच्छ्रो भवेद्वैकल्यदोऽपि वा ॥ ३४ ॥**

दोषे विबद्ध इत्येकवचनमयुक्तम् । दोषाणां ह्यत्र च बहुत्वाद्बहुवचनं न्याय्यं स्यात् ? अत्रोच्यते—जात्यभिप्रायाददोषः । जात्याख्यायामेकस्य बहुत्वसिद्धेर्दोष इत्युक्ते बहुत्वं गम्यते । यथा निष्पन्नो यव इति । तस्माद्दोषे विबद्ध इति युक्तम् । नष्टेऽग्नावित्यसत् । सर्वज्वरेष्वेव ह्यग्निनाशस्य प्रागभिधानात् । तस्मादयुक्तमेतत् । उच्यते—विशेषाभिप्रायात् । कामं सर्वज्वरेष्वग्निनाशो युक्तः । अस्मिंस्तु सान्निपातिके विशेषेणाग्निनाश इत्यभिप्रायः । दोषे वातपित्तकफमूत्रपुरीषादिके विबद्धेऽप्रवृत्तिशीलेऽग्नौ नष्टे सति सर्वपूर्णलक्षणः सन्निपातोऽसाध्यः साधयितुमशक्यः । अन्यथाऽसम्पूर्णलक्षणत्वेन स ज्वरः कृच्छ्रो भवेद्वैकल्यदो वा भवेत् ।

किमेष एव सन्निपातज्वरप्रकारः सम्भवत्युतान्योऽपि सम्भवति ? इत्याह—

**अन्यश्च सन्निपातोत्थो यत्र पित्तं पृथक् स्थितम् ।**
**त्वचि कोष्ठेऽथवा दाहं विदधाति पुरोऽनु वा ॥ ३५ ॥**

अन्यशब्दार्थोऽन्यदित्ययं निपातः । अपरोऽयं सन्निपातोत्थो ज्वरः । यत्र



सन्निपाते पित्तं वातकफाभ्यां पृथग् भिन्नं स्थितं स त्वच्यथवा कदाचित् कोष्ठे दाहं करोति । कथम् ? पुरोऽनु वा पूर्वं पश्चाद्वा । अथ वेति स्थानविशेषाभिधायिपद-समीपे श्रूयमाणं स्थानविशेषे विकल्पं करोति। पुरोऽनुवेत्यत्र कालविशेषाभिधायि-पदसमीपे श्रूयमाणं कालं विकल्पयति । तत्र चाऽयं विशेषः—त्वचि स्थितं बहिर-धिकं दाहं करोत्यन्तरल्पम् । कोष्ठे तु स्थितमन्तरधिकं बहिस्त्वल्पमिति ।

**तद्वद्वातकफौ शीतम्,**

तद्वदित्यनेन पित्तं परामृश्यते । पित्तेन तुल्यम् । यथा पित्तं पृथक् स्थितं त्वचि कोष्ठेऽथवा दाहं करोति पुरोऽनु वा तथैव वातकफौ त्वचि कोष्ठेऽथवा पुरोऽनु वा शीतं विधत्त इति द्विविधोऽयं सन्निपातः ।

**दाहादिर्दुस्तरस्तयोः ।**

शीतादिदाहाद्योः सन्निपातयोर्मध्ये यो दाहादिः सन्निपातः स दुस्तरः कृच्छ्र-साध्य इत्यर्थः । केचित्तु शीतादिः शीतार्तो दाहादिर्दाहार्त इति त्रिधा सन्निपातं समगिरन् ।

नन्वस्मिन् शीतादौ दाहादौ च ज्वरे को विशेष इत्याह—

**शीतादौ तत्र पित्तेन कफे स्यन्दितशोषिते ॥ ३६ ॥**
**शीते शान्तेऽम्लको मूर्छा मदस्तृष्णा च जायते ।**

शीतादौ तत्र तस्मिन् सन्निपाते पित्तेन कर्त्रा कफे स्यन्दिते स्राविते शोषिते च ग्रीष्म इव खरदिनकरतापेन हिम इव तथा शीते शान्ते चार्थाद्दाह उपजायते । अम्लकादयश्च चत्वारः स्युः । 'पित्तेनेति कर्तरि तृतीया' । अत एव च बलवत्त्वेन प्राधान्यात् कफं स्रावयति चेति । अम्लोद्गिरणमम्लकः ।

**दाहादौ पुनरन्ते स्युस्तन्द्राष्ठीववमिक्लमाः ॥ ३७ ॥**

दाह आदिर्यस्मिन्स दाहादिः । शीतावसान इत्यर्थाद्गम्यते । दाहादौ च सन्नि-पातेऽस्य दाहस्यान्तेऽवसाने तन्द्रादयो भवन्ति । दाहकारिपित्तस्यन्दितेनैव कफेन शमिते पित्ते कफोद्रेकादेव कफजास्तन्द्रादयो भवन्ति ।

**आगन्तुरभिघाताऽभिषङ्गशापाऽभिचारतः ।**
**चतुर्धा,**

आगन्तुज्वरश्चतुर्धा भवति । अभिघातजोऽभिषङ्गजोऽभिशापजोऽभिचारजश्च ।

**अत्र क्षतच्छेददाहाद्यैरभिघातजः ॥ ३८ ॥**
**श्रमाच्च तस्मिन्पवनः प्रायो रक्तं प्रदूषयन् ।**
**सव्यथाशोफवैवर्ण्यं सरुजं कुरुते ज्वरम् ॥ ३९ ॥**

अत्राऽस्मिन्नागन्तौ ज्वरेऽभिघातजो यो ज्वरः स क्षतच्छेदाद्यैः शस्त्रप्रहारा-द्यैर्जायते । तथा श्रमाच्चाऽध्वादिकृतादायासात् । तस्मिन्नभिघातजे ज्वरे प्रायो बाहुल्येन पवनो वायुर्ज्वरं कुरुते । किं कुर्वन् ? रक्तं प्रदूषयन् । कीदृशं ज्वरम् ?

सव्यथेत्यादि । व्यथादियुक्तं तथा सरुजम् । प्रायोग्रहणं क्वचिदभिघातजेऽन्योऽपि दोषः कुप्यति बाहुल्येन तु वायुरिति द्योतयति ।

**ग्रहाऽऽवेशौषधिविषक्रोधभीशोककामजः ।**
**अभिषङ्गात्,**

ग्रहादिजो ज्वरोऽभिषगाद्भवति ।

इदानीं ग्रहोत्पन्नस्य लिङ्गमाह—

**ग्रहेणाऽस्मिन्नकस्माद्धासरोदने ॥ ४० ॥**

ग्रहेण देवदानवादिनाऽष्टादशभेदभिन्नेन यो ज्वरो भवत्यस्मिंश्च ज्वरेऽकस्मान्निर्निमित्तमेव हासरोदने भवतः ।

**ओषधीगन्धजे मूर्च्छा शिरोरुग्वेपथुः क्षवः ।**
**विषान्मूर्च्छातिसारास्यश्यावतादाहहृद्ग्रहाः ॥ ४१ ॥**
**क्रोधात्कम्पः शिरोरुक् च प्रलापो भयशोकजे ।**
**कामाद्भ्रमोऽरुचिर्दाहो ह्रीनिद्राधीधृतिक्षयः ॥ ४२ ॥**

विषौषधीपुष्पगन्धेन वायुनोपनीतेन यो ज्वरस्तस्मिन्मूर्च्छादयो जायन्ते । विषाज्जाते तस्मिन् ज्वरे मूर्च्छादयो जायन्ते । आस्यश्यावता कृष्णमुखत्वम् । हृद्ग्रहो हृदये पीडा । क्रोधात्कम्पो वेपथुर्जायते । तथा शिरोऽर्तिश्च । भयशोकजे ज्वरे प्रलापः । कामादुद्भूते ज्वरे भ्रमादयो भवन्ति । ह्रीर्लज्जा । निद्रा स्वप्नः । धीर्बुद्धिः । धृतिर्धैर्यम् । तेषां विघातः ।

**ग्रहादौ सन्निपातस्य भयादौ मरुतस्त्रये ।**
**कोपः कोपेऽपि पित्तस्य,**

ग्रहादौ ज्वरत्रये ग्रहावेशौषधिविषजे सन्निपातस्य कोपः । भयादौ ज्वरत्रये भीशोककामजे मारुतस्य कोपः । कोपेऽपि पित्तस्य । अपिशब्दाद्वातस्याऽपि कोप इति ।

**यौ तु शापाऽभिचारजौ ॥ ४३ ॥**
**सन्निपातज्वरौ घोरौ तावसह्यतमौ मतौ ।**

तमशब्देनैतद्दर्शयति । अन्येपि ये सन्निपातज्वरास्तेऽप्यसह्याः सोढुमशक्याः । एतौ पुनः शापाभिचारजावतिशयेन सोढुमशक्याविति ।

**तत्राऽभिचारिकैर्मन्त्रैर्हूयमानस्य तप्यते ॥ ४४ ॥**
**पूर्वं चेतस्ततो देहस्ततो विस्फोटतृड्भ्रमैः ।**
**सदाहमूर्च्छैर्ग्रस्तस्य प्रत्यहं वर्धते ज्वरः ॥ ४५ ॥**

आभिचारिकैर्मन्त्रैरथर्ववेदाद्युपदिष्टैर्हूयमानस्य पुंसो यन्नामोद्देशेन हविःप्रक्षेपः स हूयमान उच्यते । 'अभिचारमधिकृत्य प्रणीत इति प्राग्वहतेष्ठगिति ठक्' । हूयमानस्य पुंसः प्रथमं चेतस्तप्यते सदुःखं जायते । ततोऽनन्तरं देहः शरीरं तप्यते सज्वरं सम्पद्यते । ततोऽनन्तरं विस्फोटतृड्भ्रमैर्दाहमूर्च्छायुतैर्ग्रस्तस्याऽऽक्रान्तस्य प्रत्यहं

ज्वरो वर्धते ज्वरस्याधिक्यं भवति । तनुत्वचः स्फोटा एव विस्फोटा भण्यन्ते ।

**इति ज्वरोऽष्टधा दृष्टः,**

इति पूर्वोक्तेन प्रकारेण, निजः सप्तप्रकार आगन्तुश्चेत्यष्टप्रकारो ज्वरो दृष्टो मुनीन्द्रैरिति शेषः ।

**समासाद् द्विविधस्तु सः ।**
**शारीरो मानसः सौम्यस्तीक्ष्णोऽन्तर्बहिराश्रयः ॥ ४६ ॥**
**प्राकृतो वैकृतः साध्योऽसाध्यः सामो निरामकः ।**

तुर्विशेषे । समासात्संक्षेपतः पुनः स ज्वरो द्विविधः । तदेव द्वैविध्यमाह । शारीरो मानस इत्येकं द्विकम् । सौम्यस्तीक्ष्ण इति द्वितीयम् । अन्तराश्रयो बहिराश्रय इति तृतीयम् । प्राकृतो वैकृत इति चतुर्थम् । साध्योऽसाध्य इति पञ्चमम् । सामो निराम इति षष्ठम् । इति द्वैविध्यमेषां द्विकानाम् ।

सम्प्रत्येतानेव ज्वरान् व्याचष्टे—

**पूर्वं शरीरे शारीरे तापो मनसि मानसे ॥ ४७ ॥**

शारीरे ज्वरे, प्रथमं शरीरे तापो भवति पश्चान्मनसीति पूर्वशब्दस्य सम्बन्धिशब्दत्वाद्गम्यते । एवं मानसे ज्वरे पूर्वं मनसि तापो दुःखं पश्चाद्देहे तापः पीडा विशेषाज्जायते ।

इदानीं सौम्यतीक्ष्णौ व्याचष्टे—

**पवने योगवाहित्वाच्छीतं श्लेष्मयुते भवेत् ।**

पवने श्लेष्मयुते योगवाहित्वाद्धेतोः शीतं भवेत् । तस्माद्वातश्लेष्मज्वरः सौम्य इति बोध्यम् । श्लेष्मा हि सोम इति प्रागुक्तम् ।

तीक्ष्णमिदानीं वक्ति—

**दाहः पित्तयुते मिश्रं मिश्रे,**

दाहः पित्तसम्बन्धे पवने योगवाहित्वाद्भवेत् । इत्येवं मिश्रे पित्तश्लेष्मयुते पवने योगवाहित्वाच्च पवनस्य मिश्रं दाहशीतं भवेत् । 'मुहुर्दाहो मुहुः शीतमिति' । तदयं सौम्यतीक्ष्णव्यामिश्रस्तृतीयो ज्वर इति वेद्यम् । सौम्यस्तीक्ष्ण इति द्वैविध्यकथनं तु समासादिति मन्तव्यम् । योगं वहति तच्छीलो योगवाही । येन येन युक्तो भजत इत्यर्थः । एवं च सति स्वयं नोष्णो न च शीतो वायुरित्यभ्युपगतम् । तदेवमिह योगवाहित्वात्कफेन युक्ते वायौ शीतं भवेदित्युक्तमसौ वायुः शीतं करोतीत्यर्थः । पित्तयुक्तेऽस्मिन् दाहो भवेदसौ दाहं करोतीति । एवं स्वयं नोष्णो न शीत इत्येवावतिष्ठते । तत्र 'रूक्षो लघुः शीत' इत्यत्र च शीत इत्युच्यते । तदिमे वचसी परस्परं व्याजघ्नाते ? नैवम् । तत्र 'रूक्षो लघुः शीतः खरः सूक्ष्मश्चलोऽनिल':—इत्यत्रैवायमर्थस्तथा व्याख्यातो यथा न पूर्वापरव्याहतत्वं भवेत् । तेनेह पुनर्न प्रतन्यते ।

इदानीमन्तराश्रयस्य लक्षणमाह—

**अन्तःसंश्रये पुनः ॥ ४८ ॥**

**ज्वरेऽधिकविकाराः स्युरन्तःक्षोभो मलग्रहः।**

अन्तराश्रये तु ज्वरेऽधिकं कृत्वाऽन्तर्विकाराः स्युः, न बहिरेव। तथा क्षोभस्तीव्रदाहत्वम्। मलानां मूत्रपुरीषादीनां ग्रहो विबन्धः।

**बहिरेव बहिर्वेगे तापोऽपि च सुसाध्यता ॥ ४९ ॥**

बहिर्वेगे तु बहिरेव तापो नत्वन्तरे। अपिचेत्यन्तःक्षोभमलग्रहावप्यत्र न स्त इति समुच्चिनोति। तत्र च बहिर्वेगेऽत एव सुसाध्यता सुखसाध्यत्वं भवति। अन्तराश्रये तु दुःसाध्यतेत्यर्थादुक्तं भवति।

सम्प्रति प्राकृतवैकृतौ लक्षयति—

**वर्षाशरद्वसन्तेषु वाताद्यैः प्राकृतः क्रमात्।**

**वैकृतोऽन्यः स दुःसाध्यः प्रायश्च प्राकृतोऽनिलात् ॥ ५० ॥**

वर्षादिषु त्रिषु ऋतुषु यथाक्रमं वाताद्यैस्त्रिभिर्दोषैर्यो ज्वरो जायते स प्राकृतः। वर्षासु वातज्वरः प्राकृतः शरदि पित्तज्वरो वसन्ते कफज्वर इति परिभाष्यते। अत एव वातप्रकृतेर्वातेन यो ज्वरः पित्तप्रकृतेः पित्तेन श्लेष्मप्रकृते श्लेष्मणा स न प्रकृतिभवत्वेन प्राकृत इत्युच्यते। वैकृतोऽन्य इति यो ज्वरो वर्षादिभ्य ऋतुभ्योऽन्यत्र काले जातो वर्षादिष्वपि वा न यथाक्रमं वाताद्यैर्जनितः स यथोक्तप्राकृतलक्षणादन्यः स वैकृत उच्यते। स च कृच्छ्रसाध्यः। प्राकृतस्तु सुसाध्य इत्यर्थाद्गम्यते। प्राय इत्यादि। प्रायो बाहुल्येन प्राकृतोऽपि यो ज्वरोऽनिलाज्जायते सोऽपि दुःसाध्यः। प्रायोग्रहणेनैतद् द्योतयति—कदाचिद्दैवानुकूलत्वात्सुसाध्य एव भवति। ननु वर्षास्वपि प्राकृतोऽपि ज्वरो यथा विकृतिविज्ञानीये कथितस्तथाऽसाध्य एव। 'ज्वरो निहन्ति बलवानित्यादि'। तदेतत्पूर्वापरव्याहतमिव दृश्यते? नैवम्। अनयोर्वचसोः सामान्यविशेषरूपत्वात्। तथा चेह सामान्येनोक्तं विकृतिविज्ञानीये तु विशेषेणेति। एतदेव च स्फुटीकर्तुं वक्ष्यति–'सर्वथा विकृतिज्ञाने प्रागसाध्य उदाहृत' इति।

सम्प्रति वर्षासु प्राकृतस्य ज्वरस्य स्वरूपं निरूपयति—

**वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितो ज्वरम्।**

**कुर्यात्,**

प्रावृषि पवनः कुपितः पित्तश्लेष्मयुतो ज्वरं कुर्यात्। प्रावृषि प्राकृतो ज्वरो वातप्रधानः, पित्तश्लेष्माणौ त्वनुबलत्वेन वातस्य स्थितौ, न तु सन्निपात इव स्वयं ज्वरकारकावित्यर्थः।

साम्प्रतं शरदि प्राकृतस्य ज्वरस्य दोषबलाबलं लक्षयति–

**पित्तं च शरदि तस्य चानुबलं कफः ॥ ५१ ॥**



**तत्प्रकृत्या विसर्गाच्च तत्र नाऽनशनाद्भयम् ।**

पित्तं शरदि प्राकृतं ज्वरं कुर्यादित्यनुवर्तते । प्रावृट्सञ्चितस्य पित्तस्य तदा कोपसम्भवात् । तस्य च पित्तस्यानुबलमनुबन्धि बलं कफः । अनुबलमिवानुबलम् । यथा कस्यचित् स्वतन्त्रस्य राज्ञो गजतुरगरथपुरुषादिबलवतो वैरिभिः सह युध्यमानस्य पश्चादन्यद्बलं तच्छक्तेरनुबृंहणार्थमागच्छत्येवं स्वतन्त्रस्य पित्तस्य ज्वरं कुर्वतो बलोपबृंहणं शरदि कफः करोति । तत्प्रकृत्येति । तच्छब्देन वर्षाशरदुद्भूतौ मारुतज्वरपित्तज्वरौ परामृश्येते । तयोः प्रकृतिस्तत्प्रकृतिस्तया तत्प्रकृत्या तत्स्वभावेन तत्र प्राकृते ज्वरेऽनशनाल्लङ्घनाद्भयं न भवतीति शेषः । विसर्गाच्च । वर्षाशरदुपलक्षितो हि कालो विसर्गः सौम्यस्वभावस्तस्माच्च कारणात्तस्मिन्काले ज्वर उत्पन्ने लङ्घनात् प्रत्यपायशङ्का न भवति । तथाऽन्यस्मिन् काले ज्वर आदानकालस्वभावाद्वातपित्तोल्बणत्वाच्चानशनाद्भयं भवतीत्यर्थः ।

**कफो वसन्ते तमपि वातपित्तं भवेदनु ॥ ५२ ॥**

वसन्ते काले कफो ज्वरं कुर्यादिति वर्तते । तं च कफमनु वातपित्तं भवेत् । वातपित्ते तस्यानुबले भवत इत्यर्थः । नन्वत्र साक्षात्कफस्य कर्तृत्वमुच्यते । कफश्च सौम्यस्वभावस्तस्मादत्र नानशनाद्भयमिति ? तच्चायुक्तम् । तथा हि वर्षाशरदोः श्लेष्माऽनुबलत्वं कालश्च विसर्गाख्य इति कारणद्वयसम्भवाद्धात्वपचयो न सम्भाव्यत एव । वसन्ते तु कालस्याग्नेयत्वाद्वातपित्तानुबलत्वाच्चावश्यम्भावी धात्वपचय एव । तस्माद्वसन्तेऽनशनाद्भयं शङ्क्यते । केचित्तु—ज्वरस्यामाशयसमुत्थत्वाद्वातकफोत्थत्वाच्चाऽत्रापि किञ्चिन्मात्रमनशनाद्भयं नाशङ्क्यत एवेत्याहुः ।

अथ साध्यासाध्यज्वरलक्षणार्थमाह—

**बलवत्स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः ।**

बलवत्सु नरेषु यौवनादिसम्पत्त्या तथाऽल्पदोषेषु यो ज्वरो जायते, उपद्रवेण कासादिना रहितः स साध्यः साधयितुं शक्यः ।

**सर्वथा विकृतिज्ञाने प्रागसाध्य उदाहृतः ॥ ५३ ॥**

सर्वथेति । यादृगातुरस्य यादृशो ज्वरोऽसाध्यो भवति तादृशो विकृतिविज्ञानीये शारीरे 'ज्वरो निहन्ति बलवानित्यादिना' ग्रन्थेन प्राक् पूर्वमुक्तः ।

अधुना सामनिरामौ ज्वरौ लक्षयति—

**ज्वरोपद्रवतीक्ष्णत्वमग्लानिर्बहुमूत्रता ।**
**न प्रवृत्तिर्न विड् जीर्णा न क्षुत्सामज्वराकृतिः ॥ ५४ ॥**

ज्वरस्योपद्रवाः प्रलापभ्रमादयस्तेषां तीक्ष्णत्वं तीव्रता । तथा बहुमूत्रता । तथा न प्रवृत्तिर्न पुरीषस्य प्रवर्तनम् । विट्प्रवृत्तावपि हि प्रवृत्तिशब्दः प्रसिद्धः । यथाऽनन्तरमधुनैवाधीतं 'प्रवृत्तिर्वाऽल्पशोऽतिवेति' । अथ चेद्विट् प्रवर्तते सा न जीर्णा, पक्वा न भवति । तथा न क्षुन्न बुभुक्षा । इयमशेषा लिङ्गसंहतिः सामज्वराकृतिः

सामज्वरस्य लक्षणम् । सहाऽऽमेन वर्तते यो ज्वरः स सामज्वरस्तस्याकृतिः । "ऊष्मणोऽल्पबलत्वेन—" इत्याद्यामलक्षणम् ।

सम्प्रति पच्यमानज्वरस्य लक्षणमाह—

**ज्वरवेगोऽधिकं तृष्णा प्रलापः श्वसनं भ्रमः ।**
**मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम् ॥ ५५ ॥**

अतिशयेन ज्वरवेगस्तृष्णादयश्चेति पच्यमानज्वरस्य लक्षणम् । पच्यमानज्वरस्य च क्वचिदनिर्दिष्टस्याऽपीह कथनं मतान्तरीयकत्वात् । तथा हि—यावत्पच्यमानावस्था न भवति तावत्कथं निरामावस्था स्यात् । तस्माद्युक्तः पच्यमानज्वरस्य निर्देशः ।

इदानीं निरामज्वरलक्षणमाह—

**जीर्णताऽऽमविपर्यासात्सप्तरात्रं च लङ्घनात् ।**

आमशब्देनाऽत्र सामज्वरलक्षणमुपलक्ष्यते । तेन सामज्वरोक्तलक्षणविपर्यासाज्ज्वरस्य जीर्णता वेद्येति बोध्यम् । यथा—ज्वरोपद्रवमृदुत्वं ग्लानिरल्पमूत्रता पक्वविट्प्रवृत्तिः क्षुदुपगमनमित्येवंरूपो विपर्यासः । तथा ज्वरवेगोऽधिकमित्यादिः पच्यमानज्वराकृतेश्च विपर्यासाज्जीर्णता पक्वता लक्षयितव्या । तथाहि पच्यमानतायामपि सामता सम्भाव्यत एव । तथा सप्तरात्रं च लङ्घनात् । 'सप्तरात्रमिति सप्तानां रात्रीणां समाहार इत्यच् समासान्तः', 'अत्यन्तसंयोगे द्वितीया' । तेनाऽयमर्थः—सप्तरात्रीर्लङ्घयित्वाऽतिवाह्य ततोऽनन्तरं यः कालोऽष्टमदिनादिस्तदा ज्वरस्य जीर्णता निरामतेति । तथा च मुनिः "सप्ताहेन तु पच्यन्ते सप्तधातुगता मलाः । निरामश्चाप्यतः प्रोक्तो ज्वरःप्रायोऽष्टमेऽहनीति" । नन्वेवं सति सप्तरात्राऽप्रवृत्तिरेव निरामज्वरलिङ्गमस्तु । 'जीर्णतामविपर्यासादित्यनेन' नार्थः ? अस्त्येवैतत् । किन्तु सन्निपातज्वरे बहुना कालेन मलपाको भवति तस्मात्तल्लक्षणार्थं जीर्णतामविपर्यासादित्युक्तम् । यद्येवं जीर्णतामविपर्यासादित्यस्तु किं सप्तरात्रं च लङ्घनादित्यनेन । अपि च त्रिदोषजे ज्वरे सप्तरात्रातिक्रमलक्षणं लिङ्गं नोपयुज्यते । तत्र ह्येवमुच्यते । 'वातपित्तकफैः सप्तदशद्वादश चेत्यारभ्य' यावत् 'शुद्ध्यशुद्ध्योर्ज्वरः कालं दीर्घमप्यनुवर्तत' इति । तस्मात्सप्तरात्रं च लङ्घनादित्यवाच्यमिति ? उच्यते—अल्पदोषो यो ज्वरस्तस्याऽऽमविपर्यासात्सप्ताहादर्वागपि जीर्णतोच्यते । यस्तु बहुदोषो ज्वरस्तस्य तु कृतसप्तलङ्घनस्य जीर्णतोच्यते । इति लक्षणद्वयेन प्रत्यपादि । अत एव च तत्र पथ्यमनुजज्ञे । वक्ष्यति हि—'इत्ययं षडहो नेयो बलं दोषं च रक्षता' । तस्मादेतयोर्लक्षणयोर्द्वयोरप्युपादानं न्याय्यमिति स्थितम् । खरनादेनाप्येमवादि । " न च निःसप्ततैवेह निरामज्वरकारणम् । चिरादपि हि पच्यन्ते सन्निपातज्वरे मलाः । सप्तरात्रातिवृत्तिश्च क्षामतादि च लक्षणम् । तस्मात्तदुभयं दृष्ट्वा निरामं ज्वरमादिशेदिति" जीर्णः पक्वः पुराण इति पर्यायाः ।

ज्वरः पञ्चविधः प्रोक्तो मलकालबलाऽबलात् ॥ ५६ ॥
प्रायशः सन्निपातेन भूयसा तूपदिश्यते ।
सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ ॥ ५७ ॥

पञ्चप्रकारो ज्वरो वक्ष्यमाणः सन्ततादिभिर्भेदैः प्रोक्तो मुनीन्द्रैरिति शेषः। कुतः ? मलेत्यादि । मलो वातादिः । कालः पूर्वाह्णादिः । बलं च बलं च बलमित्येकशेषः । बलं चाऽबलं च बलाऽबलं, काले बलाबलं कालबलाबलम् । 'सप्तमीति योगविभागात् समासः' । मलानां कालबलाबलं मलकालबलाबलं तस्माद् द्विबलशब्दोऽत्र निर्दिष्टो द्विविधसम्बन्धार्थः । कोऽसौ द्विविधः सम्बन्ध इति चेत् ? ब्रूमः। ज्वरः पञ्चविधः कथितः–मलकालबलात्, तथा मलकालबलाऽबलात्। तदयमत्रार्थः । सन्ततो ज्वरो मलकालबलादुक्तः । तथा चानन्तरमेव सन्ततलक्षणं वक्ष्यति। 'मला बलिनो गुरवः स्तब्धाः सन्ततं निष्प्रतिद्वन्द्वा ज्वरं कुर्युरिति' । **तस्माद्बलवन्त एव हि दोषाः सन्ततं ज्वरं कुर्वन्ति । विषमज्वराश्चत्वारो मलकालबलाऽबलाद्भवन्ति ।** तथा च विषमज्वरलक्षणेऽधुनैवाध्येष्यते। 'अल्पोऽपि दोषो दूष्यादेर्लब्ध्वाऽन्यतमतो बलम् । सविपक्षो ज्वरं कुर्याद्विषमं क्षयवृद्धिभागिति' । **तस्माच्चतुष्प्रकारोऽपि विषमज्वरो** मलकालबलाऽबलाद्भवति । खरनादेनाऽप्युक्तम् "बलिभिः सर्वगैः सामै रसस्रोतोविसारिभिः। निष्प्रत्यनीकैर्दोषैर्यः सन्ततो जायते ज्वर" इत्यादि । तथा तत्रैव विषमज्वरे गदितम्–"व्याधिक्लिष्टस्येत्यारभ्य, यावद् बलाऽबलविशेषस्तु दोषाणां सम्प्रवर्तते" इति। तथा तत्रैव चोक्तम् "भुव्युत्क्रम्य यथाकालं बीजं काले प्रसूयते।तथा कालक्रमाद्दोषः काले ज्वरकरो भवेदिति"। प्रायश इत्यादि । बाहुल्येनाऽयं सन्ततादिज्वरः सन्निपाताद्भवति । अत्र ( श्लोके ) सन्निपातेनेत्यसाधु। **नह्यन्यःकश्चित्सन्ततादिव्यतिरिक्तो ज्वरोऽस्ति यमेकदोषजं द्विदोषजं वा परिकल्पयेदिति ?** तस्मादसदेतद् । उच्यते–समर्यादया दोषगत्या ये सततादयो ज्वरा उत्पद्यन्ते त एकदोषजादय उपपद्यन्ते । ये पुनर्विषमसम्प्राप्तिसमुत्पन्नाः सन्ततादयस्ते सन्निपातेनेति प्रायशः सन्निपातेनेति न्याय्यमेतत् । नन्वेवं सति वातिकोऽयं पैत्तिकोऽयं श्लैष्मिकोऽयमयं द्वान्द्विक इति कथं व्यपदेश इति ? आह–भूयसेति । सन्निपातोद्भवेऽप्यस्मिन् सन्ततादौ भूयानधिको यो दोषस्तद्दोषोपलक्षितां सञ्ज्ञामासादयतीत्यर्थः। वातज्वरोऽयं पित्तज्वरोऽयमित्यादि। तुरवधारणे। भूयसैव दोषेण व्यपदेशो नान्येनेति । ततश्चैवं सन्निपातोत्थः सन्ततादिज्वर इति स्थितम्।अत एव तन्त्रान्तर एवं जगाद–"सततो मारुतात्प्रायः पित्तात् प्रायस्तृतीयकः। अन्येद्युश्च कफात्प्रायः सन्निपाताच्चतुर्थकः। सन्निपातकृतत्वात्तु दुश्चिकित्स्यश्चतुर्थकः–" इति । तथा च "पृष्ठेऽनिलकफोद्भूतः श्लेष्मपित्तोद्भवस्त्रिके । शिरस्यनिलसम्भूतो गृह्णातीह तृतीयकः । चतुर्थकस्तु श्लेष्मोत्थः प्रतिगृह्णाति जङ्घयोः । वातिकः





**अन्नपानविधित्यागश्चत्वारस्तस्य हेतवः ॥ ४ ॥**

साहसं कायेन वाचा वाऽयथाबलमारम्भः। वेगसंरोधो वातविण्मूत्रादीनामुन्मुखीभूतानां लज्जया धारणम्। शुक्रं च ओजश्च स्नेहश्च तेषां संक्षयो विनाशः। 'अत्र स्नेहशब्देन देहस्नेहो ग्राह्यो देहशब्दलोपं कृत्वाऽयं निर्दिष्टः'। तथा च मुनिः—"देहस्नेहपरिक्षयादिति"। तथाऽन्नपानयोर्यथाशास्त्रं यो विधिस्तस्य त्यागोऽन्यथासेवनमन्यथाभ्यवहारः। तस्य राजयक्ष्मणश्चत्वारः। साहसादयो हेतवः। पाठादेव चतुःसङ्ख्यात्वे लब्धे चतुर्ग्रहणं नियमार्थम्। यद्यपि साहसादय एते प्रत्येकमनेकप्रकारतया भिन्नास्तथाऽपि साहसादि चतुष्टयं नातिक्रामन्तीत्यर्थः।

अथास्मिन् राजयक्ष्माख्ये साहसजे वेगसंरोधजे शुक्रौजःस्नेहसंक्षयजेऽन्नपानविधित्यागजे वा चतुर्विधेऽपि विशेषेण पवनो हेतुरत आह—

**तैरुदीर्णोऽनिलः पित्तं कफं चोदीर्य सर्वतः।**
**शरीरसन्धीनाविश्य तान् सिराश्च प्रपीडयन् ॥ ५ ॥**
**मुखानि स्रोतसां रुद्ध्वा तथैवातिविवृत्य च।**
**सर्पन्नूर्ध्वमधस्तिर्यग्यथास्वं जनयेद्गदान् ॥ ६ ॥**

तैः साहसादिभिरुदीर्णोऽनिल इदमिदं कुर्वन् यथास्वं गदान् जनयेत्। उदीर्ण उल्बणः पित्तश्लेष्मभ्यामधिकः। अत एव पित्तमुदीर्य स्वस्थानाच्च्यावयित्वा तथा कफं सर्वतः सर्वस्मादुदीर्य तथा शरीरसन्धीन् दशाधिकशतद्वयसङ्ख्यातानात्रेयमतेन तु द्विसहस्रसङ्ख्यातानाविश्य तेषामन्तः प्रवेशं कृत्वा तांश्च सन्धीन् प्रपीडयन् प्रकर्षेण मन्थयंस्तथा सिरा अपि सकलशरीरगाः प्रपीडयंस्तथाऽन्येषां स्रोतसां मुखानि द्वाराणि रुद्ध्वा तथैव तानि वा कदाचिदतिविवृत्य प्रसार्य स्रोतोमुखानि सर्पन्नित्यादि। ऊर्ध्वं सर्पन् वायुः पीनसादीन् व्याधीन् जनयेत्। अधः सर्पन् विड्भ्रंशं विट्शोषं वा कुर्यात्। तिर्यक् सर्पन् पार्श्वरुजं विदध्यात्। इति यथास्वंशब्दस्यार्थः।

**रूपं भविष्यतस्तस्य प्रतिश्यायो भृशं क्षवः।**
**प्रसेको मुखमाधुर्यं सदनं वह्निदेहयोः ॥ ७ ॥**
**स्थाल्यमत्रान्नपानादौ शुचावप्यशुचीक्षणम्।**
**मक्षिकातृणकेशादिपातः प्रायोऽन्नपानयोः ॥ ८ ॥**
**हृल्लासश्छर्दिररुचिरश्नतोऽपि बलक्षयः।**
**पाण्योरवेक्षा पादास्यशोफोऽक्ष्णोरतिशुक्लता ॥ ९ ॥**
**बाह्वोः प्रमाणजिज्ञासा काये बैभत्स्यदर्शनम्।**
**स्त्रीमद्यमांसप्रियता घृणित्वं मूर्धगुण्ठनम् ॥ १० ॥**
**नखकेशातिवृद्धिश्च स्वप्ने चाभिभवो भवेत्।**
**पतङ्गकृकलासाहिकपिश्वापदपक्षिभिः ॥ ११ ॥**



केशास्थितुषभस्मादिराशौ समधिरोहणम् ।
शून्यानां ग्रामदेशानां दर्शनं शुष्यतोऽम्भसः ॥ १२ ॥
ज्योतिर्गिरीणां पततां ज्वलतां च महीरुहाम् ।

तस्य राजयक्ष्मणो भविष्यत उत्पित्सो रूपमग्ररूपं प्रतिश्यायादि । वह्नेः सदनं पाकासामर्थ्यम् । देहस्य सादो निर्बलता । स्थाल्यमत्रान्नपानादीनां शुद्धानामप्यशुचिदर्शनमिति । तदानीं पुरुषस्य मिथ्याज्ञानं जायत इत्यर्थः । पाण्योरवेक्षा भूयसा स्वपाणी पश्यति । बाह्वोः प्रमाणजिज्ञासा कियत्प्रमाणौ मे बाहू इति ज्ञातुमिच्छति । काये शरीरे शोभनेऽपि बैभत्स्यदर्शनमिति बीभत्सताज्ञानं तदानीं रोगस्वभावादस्योत्पद्यते । मूर्ध्नो मस्तकस्यावगुण्ठनं वस्त्रादिना सञ्छादनम् । स्वप्ने च तस्य यक्ष्मिणः पतङ्गादिभिरभिभवो भवेत् पतङ्गाद्यैः पराभूयते । पतङ्गः कीटभेदः । तथा केशादिराशिष्वधिरोहणं तथा शून्यग्रामदेशादीनां दर्शनं स्वप्ने भवेत् ।

प्राग्रूपमुक्त्वा सम्प्रत्येकादशरूपमधिकृत्याह—

पीनसश्वासकासांऽसमूर्धस्वररुजोऽरुचिः ॥ १३ ॥
ऊर्ध्वं विड्भ्रंशसंशोषावधश्छर्दिश्च कोष्ठगे ।
तिर्यक्स्थे पार्श्वरुग्दोषे सन्धिगे भवति ज्वरः ॥ १४ ॥
रूपाण्येकादशैतानि जायन्ते राजयक्ष्मिणः ।

अंसौ च मूर्धा च स्वरश्च तेषां रुजोंऽसमूर्धस्वररुजः । पीनसश्च श्वासश्च कासश्चांऽसमूर्धस्वररुजश्च ताः । तथा अरुचिरित्यूर्ध्वमूर्ध्वस्थिते दोषे भवति । अरुचेः पृथगुपन्यासः प्राधान्यख्यापनार्थः । यथा अस्मिन् व्याधावतिभयावहोऽरुच्याख्य उपद्रवो न तथा पीनसादय इति । अधःस्थिते दोषे विशः पुरीषस्य भ्रंशसंशोषौ विड्भ्रंशसंशोषौ भवतः । विड्भ्रंशो भिन्नवर्चस्त्वं विट्शोषो बद्धविट्कत्वम् । एतयोश्च परस्परं विरुद्धत्वान्न तुल्यकालं सम्भवस्तस्मात्कदाचिद्विड्भ्रंशः कदाचिद्विट्शोषो भवति । छर्दिस्तु कोष्ठस्थिते दोषे स्यात् । तिर्यक्स्थे दोषे पार्श्वरुग्भवति । सन्धिगे च ज्वरः । रूपाण्येतानि पीनसादीन्येकादश शोषिणः उत्पद्यन्ते । मुनिस्त्वेवमवोचत्—"प्रयिश्यायं ज्वरं कासमङ्गमर्दं शिरोरुजम् । श्वासं विड्भेदमरुचिं पार्श्वशूलं स्वरक्षयम् । कुरुते चांससन्तापमेकादशेत्यादि" ।

तेषामुपद्रवान् विद्यात्कण्ठोद्ध्वंसमुरोरुजम् ॥ १५ ॥
जृम्भाङ्गमर्दनिष्ठीववह्निसादास्यपूतिताः ।

तेषामेकादशसङ्ख्यानां पीनसादीनां पूर्वोत्पन्नानां कण्ठोद्ध्वंसादीन् पश्चादुत्थितान् सप्तोपद्रवान् जानीयात् । व्याधेरुपरि यो व्याधिर्भवत्युत्तरकालजः उपक्रमविघाती च स उपद्रव उच्यत इत्युपद्रवलक्षणम् ।

तत्र वाताच्छिरःपार्श्वशूलमंसाङ्गमर्दनम् ॥ १६ ॥



**कण्ठोद्ध्वंसः स्वरभ्रंशः पित्तात्पादांसपाणिषु।**
**दाहोऽतिसारोऽसृक्छर्दिर्मुखगन्धो ज्वरो मदः ॥ १७ ॥**
**कफादरोचकश्छर्दिः कासो मूर्धाङ्गगौरवम्।**
**प्रसेकः पीनसः श्वासः स्वरसादोऽल्पवह्निता ॥ १८ ॥**

तस्मिन् राजयक्ष्माख्ये व्याधौ वातादधिकाच्छिरःशूलादयः स्युः। पित्तादधिकात् पादादिषु दाहोऽतिसारादयश्च भवन्ति। कफादधिकादरोचकादयो दश भवन्ति।

यक्ष्मिणो मांसाद्यभ्यवहारतोऽपि धातुक्षयो जायते न धातुपुष्टिरित्यत्र युक्तिमाह—

**दोषैर्मन्दानलत्वेन सोपलेपैः कफोल्बणैः।**
**स्रोतोमुखेषु रुद्धेषु धातूष्मस्वल्पकेषु च ॥ १९ ॥**
**विदह्यमानः स्वस्थाने रसस्तांस्तानुपद्रवान्।**
**कुर्यादगच्छन्मांसादीनसृक् चोर्ध्वं प्रधावति ॥ २० ॥**
**पच्यते कोष्ठ एवान्नमन्नपक्त्रैव चाऽस्य यत्।**
**प्रायोऽस्मान्मलतां यातं नैवालं धातुपुष्टये ॥ २१ ॥**

दोषैर्वातपित्तकफैः कफोल्बणत्वात् स्रोतोद्वारेषु रुद्धेषु पिहितेषु सत्सु रसः स्वस्थान एव विदह्यमानो न सम्यग्रक्ततां प्राप्नुवंस्तांस्ताननेकान् कण्ठोद्ध्वंसादीनुपद्रवान् कुर्य्यात्। किम्भूतैर्दोषैः? कफोल्बणैः श्लेष्माधिकैः। अतश्च कफाधिकत्वात्सहोपलेपेन श्लेष्मलेपेन वर्तन्ते सोपलेपास्तैस्तथाविधैर्दोषैस्तदानीं मन्दानलत्वेन हेतुना धातूष्मसु रसाद्यग्निष्वल्पकेष्वतिशयेनाल्पेषु। एवमनेककारणसद्भावाद्रसः स्वस्थान एव विदह्यमानः पित्तकारिणीं मध्यमां पाकावस्थामनुभवन् सम्यक् पाकमगच्छन् यथोचितान् विकारांस्तांस्तान् कुर्वन्मांसमेदःप्रभृतीन् धातूनगच्छन्नप्राप्नुवन् विदह्यमानतया रक्ततामापन्नस्तदसृक् चोर्ध्वं प्रधावत्यूर्ध्वं प्रसर्पति केवलं निष्ठीवनसहितं वा। तस्मात् क्षयिणो न तन्मांसादि धातुपुष्टये। किञ्चास्मादपि हेतोः सः रसो न धातुपुष्टये। यस्मात् पच्यतेऽन्नं सारकिट्टत्वं नीयते। अन्नस्य पक्त्रैव जाठराग्निना कोष्ठ एवामपक्वाशयाख्ये। उभयत्रैवकारोऽवधारणे। कोष्ठ एव न धातुषु जाठराग्निनैव न धात्वग्निभिरिति। यत एवं ततोऽस्मात् प्राङ्निरूपिताद्धेतुकदम्बकात् प्रायो मलतामाधिक्येन मूत्रपुरीषतां प्राप्तमन्नं नैव धातुपुष्टयेऽलं समर्थम्। धातुपुष्टिग्रहणेनैतत्सूचयति। अभिनवमृत्कुम्भजललवस्यन्दनन्यायेन सूक्ष्मस्रोतोऽनुप्रवेशितया सोऽन्नरसो धात्वाप्यायनमात्रं करोत्येव। अन्यथा वर्षगणानुबन्धि जीवितं क्षयिणो न सम्भाव्येत। तस्माद्धातुस्थितिमात्रं भवति न तु धातुपोषणमिति स्थितम्।

**रसोऽप्यस्य न रक्ताय मांसाय कुत एव तु।**

रसस्तावदुभयरूपोऽन्नरसो धातुरसो वाऽस्य क्षयिणो निकटस्य रक्तधातोर्न

पुष्ट्ये मांसधातोर्विप्रकृष्टस्य तु कुत एव स्यात् । एवं सम्भाव्यत इत्यपिशब्दार्थः ।

ननु यद्येवं तत्कथमन्येभ्यो धातुभ्यो विशेषेण धारणस्वभावाभ्यां विना क्षयी जीवेदित्याशङ्क्याह—

**उपस्तब्धः स शकृता केवलं वर्तते क्षयी ॥ २२ ॥**

क्षयी स शकृता पुरीषेण केवलमुपस्तब्धः कृतावष्टम्भो वर्तते प्राणिति पूर्वोक्तन्यायेन किञ्चिदाहाररसाप्यायितैर्धातुभिर्धारणस्वभावैर्धृतमात्रः । ननु विदह्यमानः स्वस्थाने रसस्तांस्तानुपद्रवान् । कुर्यादगच्छन्मांसादीनसृक् चोर्ध्वं प्रधावतीत्यनेन रक्तस्य सत्ता प्रतिपादिता रसोऽप्यस्य न रक्तायेत्यनेन क्षयिणो रक्तस्याभावः प्रत्यपादि । तदिमे वाक्ये परस्परं व्याघ्नाते । अत्रोच्यते—नानयोर्वाक्ययोः परस्परं विरोधः । यतोऽसृक्चोर्ध्वं प्रधावतीत्यनेन न तद्धातुरूपतां प्राप्तमुक्तं किन्तर्हि रसस्य विदह्यमानता स्वस्थानस्थितस्य रक्तधात्वाशयमगच्छतो रक्तोद्भूतिरुक्ता । अनेनैवाभिप्रायेणोत्तरत्र वाक्ये रसोऽप्यस्य न रक्तायेत्युवाच । अनेन हि रसो धातुरूपाय रक्ताय शोषिणो न सम्पद्यत इति प्रत्यपादि ।

अथास्य क्षयिणः साध्यासाध्यतां निरूपयति—

**लिङ्गेष्वल्पेष्वपि क्षीणं व्याध्यौषधबलाक्षमम् ।**
**वर्जयेत्,**

क्षयिणं बलमांसाभ्यां क्षीणं लिङ्गेषु पीनसादिष्वल्पेष्वपि सत्सु न सर्वेषूत्पन्नेषु वर्जयेन्नोपक्रमेत् । किम्भूतम् ? व्याध्यौषधयोर्बलं व्याध्यौषधबलं तस्याक्षमम् । क्षयाख्यस्य व्याधेर्यद्बलं तथाऽस्य शमनोपायस्यौषधस्य यद्बलं तत्राक्षममसहं यतस्ततो वर्जयेदित्यर्थः ।

**साधयेदेव सर्वेष्वपि ततोन्यथा ॥ २३ ॥**

अन्यथाऽतो विपरीतलक्षणं यक्ष्मिणं बलमांसाभ्यमक्षीणमत एव व्याध्यौषधबलक्षमं सर्वेष्वपि पीनसादिषु लिङ्गेषु सत्सु साधयेदेव किम्पुनर्द्वित्रादिष्वेषु साधयेदित्यपिशब्दार्थः ।

अथास्य व्याधेरुपद्रवभूतानामादिशब्दगृहीतानां पञ्चानां स्वरभेदादीनां रोगाणां निदानान्याह—

**दोषैर्व्यस्तैः समस्तैश्च क्षयात् षष्ठश्च मेदसा ।**
**स्वरभेदो भवेत्,**

दोषैः पृथग्वातपित्तकफैः समस्तैः सन्निपतितैस्तथा क्षयात्तथा षष्ठः स्वरभेदो मेदसा स्यात् ।

**तत्र क्षामो रूक्षश्चलः स्वरः ॥ २४ ॥**
**शूकपूर्णाभकण्ठत्वं स्निग्धोष्णोपशयोऽनिलात् ।**

तत्र तेषु षट्सु स्वरभेदेषु मध्ये वातात्स्वरभेदे सति क्षामादिमान् स्वरः स्यात् ।

तथा शूकपूर्णसदृशगलत्वं स्निग्धोष्णोपशयश्च भवति।

**पित्तात्तालुगले दाहः शोष उक्तावसूयनम्॥ २५॥**

पित्तात् स्वरभेदे सति तालुनि गले च दाहस्तथा शोषः प्रस्तुतत्वात्तालुगलयोरेव। तथा उक्तावसूयनं वाक्यविषयेऽसहनम्। पित्तस्वरभेदे वाक्यं वक्तुमसमर्थ इत्यर्थः।

**लिम्पन्निव कफात्कण्ठे मन्दः खुरखुरायते।**
**स्वरो विबद्धः,**

कफात्स्वरभेदे कण्ठं लिम्पन्निवोपलेपमिव गलस्य कुर्वन् खुरखुरायते प्रकृतत्वात् कण्ठस्यैव। खुरखुरमित्यव्यक्तं शब्दं करोति। तथा सर्वेभ्यः स्वरभेदेभ्योऽयं मन्दस्वरो नोच्चैः श्रूयते। तथा विबद्धो वदतो मध्ये स्खलनरूपः।

**सर्वैस्तु सर्वलिङ्गः,**

सर्वैस्त्रिभिर्दोषैः समुदितैः सर्वलिङ्गस्त्रिदोषलक्षणः स्वरभेदो भवति।

**क्षयात्कषेत्॥ २६॥**
**धूमायतीव चात्यर्थम्,**

क्षयात् स्वरभेदः कषेद्विध्वस्तः स्यात्। कण्ठमर्मघटनादित्यर्थः। अनुक्तमपि प्रकृतत्वात् कण्ठमिति लक्ष्यते। तथा क्षयस्वरभेदी धूमायतीवातिशयेन। अत्यर्थशब्देन पित्तस्वरभेदेऽपि धूमायनं भवतीति गमयति। धूमायतीति धूमनिःसरणमिव नासिकादिदेशेष्वनुभवति।

**मेदसा श्लेष्मलक्षणः।**
**कृच्छ्रलक्ष्याक्षरश्च,**

मेदसा स्वरभेदः श्लेष्मस्वरभेदलक्षणः। तथा कृच्छ्रेण कथञ्चिल्लक्ष्याणि ज्ञेयान्यक्षराणि यत्र स एवम्। एतदेव कृच्छ्रलक्ष्याक्षरत्वं कफस्वरभेदादधिकम्।

**अत्र सर्वैरन्त्यं च वर्जयेत्॥ २७॥**

सर्वैर्दोषैर्यः स्वरभेदस्तथान्ते पठितत्वान्मेदःस्वरभेदोऽन्त्यस्तं च वर्जयेत्। चतुरस्त्वन्यान् साधयेदित्यर्थाद्गम्यते।

**अरोचको भवेद्दोषैर्जिह्वाहृदयसंश्रयैः।**
**सन्निपातेन मनसः सन्तापेन च पञ्चमः॥ २८॥**

जिह्वा च हृदयं च जिह्वाहृदयं तत्संश्रय आश्रयो येषां तैस्तत्रस्थः पृथग्वातपित्तकफैररोचकः स्यात्। तथा सन्निपातेनार्थाज्जिह्वाहृदयसंश्रितेनारोचकः स्यादिति योज्यम्। तथा मनसः सन्तापेनानेकविधेन क्रोधशोकादिनोपतप्तेन पञ्चमोऽरोचक आगन्तुर्भवेत्। अत्राऽपि यथास्वं दोषाणां जिह्वाहृदयसंश्रितत्वमवश्यमाश्रयणीयम्। उद्देशादानादेव पञ्चत्वे लब्धे मनःसन्तापजः पञ्चम एवेति नियमार्थं पञ्चमग्रहणम्। मन्युशोकाद्यनेकप्रकारमनःसन्तापजत्वेऽप्येक एव मनःसन्तापजोऽरोचक इत्यर्थः।

कषायतिक्तमधुरं वातादिषु मुखं क्रमात्।
सर्वोत्थे विरसं शोकक्रोधादिषु यथामलम्॥ २६॥

वाताद्युद्भवेष्वरोचकेषु मुखमास्यं क्रमेण कषायतिक्तमधुरं भवति व्याधिस्वभावात्। पित्तारोचकेऽपि तिक्तवक्त्रता भवति न कटुकास्यत्वम्। सर्वोत्थे सन्निपातजेऽरोचके विरसमास्यं भवति। निश्चितरसाज्ञानात्। शोकक्रोधादिसमुत्थेष्वरोचकेषु यथामलं यथादोषं मुखं भवेत्। तत्र शोकभयकामलोभेर्ष्यादिसन्तप्तमनः-समुत्थे वातप्रकोपात् कषायं क्रोधसन्तप्तमनसः समुत्थे पित्तप्रकोपात्तिक्तं प्रद्वेषतप्तमनः समुत्थेसन्निपातप्रकोपाद्विरसास्यत्वमिति यथामलशब्दस्यार्थः।

छर्दिर्दोषैः पृथक्सर्वैर्द्विष्टैरर्थैश्च पञ्चमी।

पृथक् प्रत्येकं दोषैर्वातपित्तकफैश्छर्दिर्भवेत्। सन्निपतितस्त्रिभिरपि छर्दिः स्यात् तथा द्विष्टैरनभिप्रेतैः शब्दादिभिश्च पञ्चमी छर्दिर्भवेत्। पूर्ववत्पञ्चमीतिनियमार्थम्। द्विष्टानां ह्यर्थानां बहुत्वाद्बह्वयश्छर्दयो भवन्तीत्याशङ्क्येत तथा शङ्कानिवृत्तये द्विष्टार्थयोगजा एकैव छर्दिरित्युक्तम्।

उदानो विकृतो दोषान् सर्वानप्यूर्ध्वमस्यति॥ ३०॥

उदानाख्यो वायुर्विकृतः सर्वानपि दोषान् वातपित्तकफानूर्ध्वमस्यति क्षिपति। अपिशब्द एवार्थः। सर्वास्वेव छर्दिष्वित्यर्थः।

तासूत्क्लेशास्यलावण्यप्रसेकारुचयोऽग्रगाः।

तासु छर्दिषूत्क्लेशादयोऽग्रगाः। अग्रे गच्छन्ति प्राग्रूपतयोद्भवन्ति। उत्क्लेशः स्वस्थान एव मूर्तस्य दोषस्योदयो बुद्बुदवदुत्थानम्।

नाभिपृष्ठं रुजन् वायुःपार्श्वे चाहारमुत्क्षिपेत्॥ ३१॥
ततो विच्छिन्नमल्पाल्पं कषायं फेनिलं वमेत्।
शब्दोद्गारयुतं कृष्णमच्छं कृच्छ्रेण वेगवत्॥ ३२॥
कासास्यशोषहृन्मूर्धस्वरपीडाक्लमान्वितः।

वायुः कासादिमान् इदमिदं कुर्वन् वमेत् छर्दिं करोति। नाभिं पृष्ठं च रुजन् पीडयन् पार्श्वे च रुजन्नाहारमुत्क्षिपेदूर्ध्वं नयेत्। ततस्तस्मादाहारस्योर्ध्वगमनानन्तरं विच्छिन्नं कृत्वा न निरन्तरमल्पाल्पमल्पं कृत्वा कषायं वमेन्न मधुराद्यन्यतमम्। तथा फेनिलं फेनयुक्तम्। 'फेनिलमिति फेनादिलजितीलच्'। तथा शब्दयुतमुद्गारयुतम्। तथा कृष्णं कृष्णवर्णम्। तथा अच्छम्। तथा कृच्छ्रेण कथञ्चिन्न यथासुखम्। तथा वेगवद्वेगयुतम्।

पित्तात्क्षारोदकनिभं धूम्रं हरितपीतकम्॥ ३३॥
सासृगम्लं कटूष्णं च तृण्मूर्छातापदाहवत्।

पित्तात् क्षारोदकसदृशादिकं वमेत्। तथा तृण्मूर्छातापदाहा विद्यन्ते यस्मिंस्तदेवं तृष्णादियुक्तं यथा भवति तथा वमेत्।

**कफात् स्निग्धं घनं शीतं श्लेष्मतन्तुगवाक्षितम् ॥ ३४ ॥**
**मधुरं लवणं भूरि प्रसक्तं लोमहर्षणम् ।**
**मुखश्वयथुमाधुर्यतन्द्राहृल्लासकासवत् ॥ ३५ ॥**

कफात्स्निग्धादिकं वमेत्। तथा श्लेष्मणः सम्बन्धिना तन्तुजालेन गवाक्षितं तथा मधुरादिकं वमेत्। मुखश्वयथ्वादिमत्।

**सर्वलिङ्गा मलैः सर्वै रिष्टोक्ता या च तां त्यजेत्।**

सर्वलिङ्गा छर्दिः सर्वैर्मलवातपित्तकफैः सन्निपतितैर्भवेत्। न केवलं त्रिभिर्दोषैः सर्वलिङ्गा, या च रिष्टोक्ता विकृतिविज्ञानीयाध्याये छर्दिर्वेगवतीत्यादिना ग्रन्थेनोक्ता साऽपि सर्वलिङ्गा दोषत्रयलक्षणोपेता तां त्यजेन्न चिकित्सेत्। नतु रिष्टोक्ता या छर्दिस्तां त्यजेदिति व्याख्येयम्। तस्या रिष्टत्वेनैवासाध्यत्वस्य प्रतिपादितत्वात्।

**पूत्यमेध्याशुचिद्विष्टदर्शनश्रवणादिभिः ॥ ३६ ॥**
**तप्ते चित्ते हृदि क्लिष्टे छर्दिर्द्विष्टार्थयोगजा ।**

पूत्यादिभिस्तप्ते चित्ते उत्तप्ते मनसि तथा तैरेव पूत्यादिभिः क्लिष्टे पीडिते हृदि या जायते छर्दिः सा द्विष्टार्थयोगजा छर्दिरुच्यते। आदिः प्रकारे यथा आकृतिगणेषु।

ननु कृम्यादिजान्यन्यानि छर्दींषि सम्भवन्त्येव लक्षणं कस्मान्नोक्तमित्याह—

**वातादीनेव विमृशेत्कृमितृष्णामदौहृदे ॥ ३७ ॥**
**शूलवेपथुहृल्लासैर्विशेषात् कृमिजां वदेत्।**
**कृमिहृद्रोगलिङ्गैश्च,**

कारणे कार्योपचारात् कृम्यादिशब्दैरेव छर्दय उच्यन्ते। कृमितृष्णामगर्भिणीदौहृदजे छर्दींषि वातादीनेव यथायथं स्वलक्षणैर्विमृशेद्विचारयेल्लक्षयेत्। नहि वातादीनन्तरेणैताश्छर्दयः कथञ्चिदपि सम्भवन्ति। अत एवैवकारोऽत्रावधारणार्थो व्यधायि। एवं कृमिजां कदाचिद्वायुच्छर्दिलक्षणोपेतामथवा पित्तच्छर्दिलक्षणोपेतां कफच्छर्दिलक्षणोपेतां वा यथायथं लक्षयेत्। एवं तृष्णामदौहृदच्छर्दींषि वातादीन् विमृशेत्। विशेषेण शूलवेपथुहृल्लासैः कृमिजां वदेत्। कृमिहृद्रोगलक्षणैश्चानन्तरं वक्ष्यमाणैः कृमिजां वदेत्।

अधुना हृद्रोगं लिलक्षयिषुराह—

**स्मृताः पञ्च तु हृद्गदाः ॥ ३८ ॥**
**तेषां गुल्मनिदानोक्तैः समुत्थानैश्च सम्भवः ।**

हृद्गदाः पञ्च स्मृताः। तन्त्रकृद्भिरिति शेषः। तेषां हृद्रोगाणां गुल्मनिदानोक्तैर्वक्ष्यमाणैः समुत्थानैः कारणैः सम्भव उत्पत्तिः।

**वातेन शूल्यतेऽत्यर्थं तुद्यते स्फुटतीव च ॥ ३९ ॥**



भिद्यते शुष्यति स्तब्धं हृदयं शून्यता द्रवः।
अकस्माद्दीनता शोको भयं शब्दासहिष्णुता ॥ ४० ॥
वेपथुर्वेष्टनं मोहः श्वासरोधोऽल्पनिद्रता।

वातेन हृद्रोगेऽत्यर्थं हृदयं शूल्यते। अत्यर्थशब्देनेदं गमयति । अन्येष्वपि हृद्रोगेषु हृदयं शूल्यतेऽतिशयेन तु वातजे हृद्रोग इति। तथा तुद्यते प्राजनेनेव । शूलं सन्तता पीडा। तोदो विच्छिन्नोतिशयेन रुगुद्भवः । तथा हृदयं स्फुटतीत्यादिक्रियायुतं भवति। तथा शून्यता द्रवश्च प्रकृतत्वाद्धृदयस्यैव स्यादिति बोध्यम्।

पित्तात्तृष्णा भ्रमो मूर्च्छा दाहः स्वेदोऽम्लकः क्लमः ॥ ४१ ॥
छर्दनं चाम्लपित्तस्य धूमकः पीतता ज्वरः।

पित्तात् पित्तेन तृष्णादयः स्युः।

श्लेष्मणा हृदयं स्तब्धं भारिकं साश्मगर्भवत् ॥ ४२ ॥
कासाग्निसादनिष्ठीवनिद्रालस्यारुचिज्वराः।

श्लेष्मणा हृद्रोगे हृदयं स्तब्धं तथा भारिकं गुरु भवति। कथम्? साश्मगर्भवदन्तर्विद्यमानाश्मगर्भसदृशम्। तथा कासादयः स्युः।

सर्वलिङ्गस्त्रिभिर्दोषैः,

सर्वलिङ्गो हृद्रोगस्त्रिभिर्दोषैः स्यात्।

क्रिमिभिः श्यावनेत्रता ॥ ४३ ॥
तमःप्रवेशो हृल्लासः शोषः कण्डूः कफस्रुतिः।
हृदयं प्रततं चात्र क्रकचेनेव दार्यते ॥ ४४ ॥
चिकित्सेदामयं घोरं तं शीघ्रं शीघ्रकारिणम्।

क्रिमिभिश्च हृद्रोगे श्यावाक्षताद्याः स्युः। अत्र क्रिमिहृद्रोगे हृदयं क्रकचेनेव करपत्रेणेव सन्ततं दार्यते। तं क्रिमिहृद्रोगाख्यमामयं घोरमतिदुःसहं शीघ्रकारिणमाशुव्यापातकारिणं शीघ्रमेव चिकित्सेत्। महामर्मणो हृदयस्य क्रिमिभिर्भक्षणात्।

उक्ता हृद्रोगाः शीघ्रकारित्वसामान्यात्तृष्णाऽनन्तरं व्याख्यायते—

वातात्पित्तात्कफात्तृष्णा सन्निपाताद्रसक्षयात् ॥ ४५ ॥
षष्ठी स्यादुपसर्गाच्च,

वातादिभिः पञ्च तृष्णाः स्युः। षष्ठी स्यादुपसर्गाच्च । उपादानादेव षट्सङ्ख्याया लब्धत्वात् षष्ठीत्येतद्वचनं नियमार्थम्। आमोद्भवाद्या या वक्ष्यमाणास्तृष्णास्ताः सर्वास्तृष्णानां षट्त्वं नातिक्रामन्ति वातपित्तजत्वात् । प्रायेण तासामास्वेवान्तर्भावः।

वातपित्ते तु कारणम्।

सर्वासु,





पूर्वोक्तासु वक्ष्यमाणासु च तृष्णासु वातपित्ते कारणम्।
ते एव वातपित्ते हेतू कुत एवमित्याह—

**तत्प्रकोपो हि सौम्यधातुप्रशोषणात्॥ ४६॥**
**सर्वदेहभ्रमोत्कम्पतापतृड्दाहमोहकृत्।**

हि यस्मात् सौम्यस्य शरीरगतस्य रसादेर्धातोराहारविहारादिना यत्प्रशोषणं तस्मात्तयोर्वातपित्तयोः प्रकोपो जायत इत्यध्याहार्यम्। किम्भूतः प्रकोपः? सर्वदेहभ्रमोत्कम्पतापतृड्दाहमोहकृत्।

सौम्यधातुप्रशोषणपूर्वकं तृष्णानां यतो जन्म तस्मादिदमाह—

**जिह्वामूलगलक्लोमतालुतोयवहाः सिराः॥ ४७॥**
**संशोष्य तृष्णा जायन्ते,**

जिह्वादिसिराः संशोष्य तृष्णाः समुत्पद्यन्ते।

**तासां सामान्यलक्षणम्।**
**मुखशोषो जलाऽतृप्तिरन्नद्वेषः स्वरक्षयः॥ ४८॥**
**कण्ठौष्ठजिह्वाकार्कश्यं जिह्वानिष्क्रमणं क्लमः।**
**प्रलापश्चित्तविभ्रंशस्तृड्ग्रहोक्तास्तथाऽऽमयाः॥ ४९॥**

मुखशोषादिकं तृड्ग्रहोक्तामयपर्यन्तं निर्दिष्टं तासां तृष्णानां सामान्यलक्षणम्। तृड्ग्रहोक्ता रोगानुत्पादनीयोक्ताः शोषाङ्गसादबाधिर्यादयः।

**मारुतात् क्षामता दैन्यं शङ्खतोदः शिरोभ्रमः।**
**गन्धाऽज्ञानास्यवैरस्यश्रुतिनिद्राबलक्षयाः॥ ५०॥**
**शीताम्बुपानाद् वृद्धिश्च,**

वातात्तृष्णायां क्षामतादैन्यादयः स्युः।

**पित्तान्मूर्छाऽऽस्यतिक्तता।**
**रक्तेक्षणत्वं प्रततं शोषो दाहोऽतिधूमकः॥ ५१॥**

पित्तात्तृष्णायां मूर्छादयः स्युः।

कफतृष्णामाह—

**कफो रुणद्धि कुपितस्तोयवाहिषु मारुतम्।**
**स्रोतःसु स कफस्तेन पङ्कवच्छोष्यते ततः॥ ५२॥**
**शूकैरिवाचितः कण्ठो निद्रा मधुरवक्त्रता।**
**आध्मानं शिरसो जाड्यं स्तैमित्यच्छर्द्यरोचकाः॥ ५३॥**
**आलस्यमविपाकश्च,**

कफः कुपितो जलवाहिषु स्रोतःसु यदा मारुतं रुणद्धि तदा स च कफस्तेन मरुता पङ्क इव शोष्यते। ततस्तस्मिन् कफे शुष्के सति कण्ठः शूकैरिवाचितो व्याप्तः स्यात्। तथा निद्रादयश्च स्युः।

**सर्वैः स्यात्सर्वलक्षणा ।**

सर्वैः सन्निपतितैः सर्वलिङ्गा तृष्णा स्यात् ।

**आमोद्भवा च भक्तस्य संरोधाद्वातपित्तजा ॥ ५४ ॥**

आमोद्भवा च तृष्णा भक्तस्याऽऽहारस्य संरोधात् स्यात् । सा च वातपित्तजा ।

**उष्णक्लान्तस्य सहसा शीताम्भो भजतस्तृषम् ।**
**ऊष्मा रुद्धो गतः कोष्ठं यां कुर्यात्पित्तजैव सा ॥ ५५ ॥**
**या च पानातिपानोत्था तीक्ष्णाग्नेः स्नेहजा च या ।**

उष्णेन म्लानस्य नरस्य सहसा झटित्येव शीतं जलं सेवमानस्योष्मा रुद्धः कोष्ठं गतो यां तृषं तृष्णां कुर्यात् सा पित्तजैव तृष्णा नत्वन्या बोध्या । या च तृट् पानस्य मद्यस्यातिपानोद्भवा या च तीक्ष्णाग्नेः पुरुषस्य स्नेहजा तृट् सापि पित्तजैव ।

**स्निग्धगुर्वम्ललवणभोजनेन कफोद्भवा ॥ ५६ ॥**

स्निग्धादिगुणयुक्तेन भोजनेन या तृट् स्यात् सा कफसम्भवा बोध्या ।

**तृष्णा रसक्षयोक्तेन लक्षणेन क्षयात्मिका ।**

रसक्षयोक्तेन लक्षणेन 'रसे रौक्ष्यं श्रम' इत्यादिग्रन्थनिर्दिष्टेन लक्षणेन क्षयात्मिका तृष्णा बोध्या ।

**शोषमोहज्वराद्यन्यदीर्घरोगोपसर्गतः ।**
**या तृष्णा जायते तीव्रा सोपसर्गात्मिका स्मृता ॥ ५७ ॥**

शोषमोहाद्यपरदीर्घरोगोपसर्गाद्दीर्घकालानुबन्धाद्वा तृष्णा स्यात् सोपसर्गात्मिका स्मृता मुनीन्द्रैरिति शेषः ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां राजयक्ष्मनिदानं नाम पञ्चमोऽध्यायः ॥ ५ ॥



# षष्ठोऽध्यायः ।

राजयक्ष्मनिदानादनन्तरं मदात्ययनिदानारम्भो यतो यथा राजयक्ष्मा दोषत्रयजस्तथा मदात्ययोऽपि । वक्ष्यति हि तत्र 'सर्वेऽपि सर्वैर्जायन्ते व्यपदेशस्तुभूयसेति' । तस्मान्मदात्ययनिदानमुच्यत इत्याह—

**अथाऽतो मदात्ययनिदानं व्याख्यास्यामः ।**

पूर्ववद्व्याख्या ।

मदात्ययस्य निदानमुच्यत इत्याह—

**तीक्ष्णोष्णरूक्षसूक्ष्माम्लं व्यवाय्याशुकरं लघु ।**
**विकाशि विशदं मद्यमोजसोऽस्माद्विपर्ययः ॥ १ ॥**

तीक्ष्णोष्णादिगुणं मद्यमस्मान्मद्यादोजसो विपर्ययो वैपरीत्यम् । यथा मन्दशीतस्निग्धसान्द्रमधुरस्थिरचिरकृद्गुरुश्लक्ष्णपिच्छिलत्वम् ।



**तीक्ष्णादयो विषेऽप्युक्ताश्चित्तोपप्लाविनो गुणाः ।**
**जीवितान्ताय जायन्ते विषे तूत्कर्षवृत्तितः ॥ २ ॥**

एते च तीक्ष्णादयो दश गुणा विषेऽप्युक्ताः । चित्तमुपप्लावितुं शीलं येषां ते चित्तोपप्लाविनश्चित्तविभ्रमकारिणः । न केवलं मद्य इत्यपिशब्दार्थः । ननु यदि त एव तीक्ष्णादयो गुणा विषे त एव मद्ये तत्कथं विषस्था एव तीक्ष्णादयो मारयन्ति न मद्यस्था इत्यत्र युक्तिमाह–'जीवितान्तायेत्यदि' । विषस्थास्तीक्ष्णादयो ये गुणास्ते मारणाय सम्पद्यन्ते । उत्कर्षवृत्तित उत्कर्षवर्तनात् ।

कथं कृत्वा मद्यं चेतो विकारं नयति ? इत्याह—

**तीक्ष्णादिभिर्गुणैर्मद्यं मन्दादीनोजसो गुणान् ।**
**दशभिर्दश संक्षोभ्य चेतो नयति विक्रियाम् ॥ ३ ॥**
**आद्ये मदे,**

मद्यं, हृदयमोजसःस्थानं द्रव्यप्रभावादाविश्य तीक्ष्णादिभिर्गुणैर्मन्दादीनोजसः सम्बन्धिनो गुणान् संक्षोभ्य सन्तादृदुष्टतामापाद्य चेतो विक्रियां विकारं नयत्याद्ये मदे तनुमदे । ननु तीक्ष्णादिभिर्मन्दादीनित्येतावदेवास्तु किं दशभिर्दशेत्यनेन, पाठादेव हि दशसंख्या च गमिष्यते ? अस्त्येवैतत्, किं तु सर्वैरेव तीक्ष्णादिभिः सर्वानपि मन्दादीन्संक्षोभ्य चेतो विक्रियां मद्यं नयति, नतु कियद्भिरपि तीक्ष्णादिभिः कियन्त एव मन्दादीनिति प्रतिपादनाय सङ्ख्याग्रहणम् । उत्कर्षतारतम्यकृतस्त्वस्त्येव विशेषः । तेन सर्वत्र मदेनैव तुल्यः क्षोभ इति बोध्यम् । आद्ये च मदे यथास्वं प्रबोधजनके पुमान् स्थितो मद्यपानात्तादात्विकं सुखं समधिगच्छतीत्यनुक्तमपि सम्भाव्यते । तथा च मुनिः–"पञ्चस्वर्थेषु कान्तेषु या रतिः प्रथमे मदे। यूनां वा स्थविराणां वा तस्य नास्त्युपमा भुवीति" ।

**द्वितीये स प्रमादायतने स्थितः ।**
**दुर्विकल्पहतो मूढः सुखमित्यधिमुच्यते ॥ ४ ॥**

अनन्तरं द्वितीये मदे स्थितः प्राप्तः स्वार्थैर्दुष्टैस्तैस्तैर्विकल्पैर्हतः पुरुषार्थाद्विनष्टोऽत एत मूढः कार्याकार्यानभिज्ञः सुखमित्यधिमुच्यते सुखमिति ज्ञानेन प्रथममदोत्पन्नेन तदानीमधिमुच्यतेऽधिकं कृत्वा तेन सुखेन परित्यज्यते । तादात्विकमप्येकं तत्सुखं नानुभवति । ओजसो विहतत्वात् । अन्ये त्वाहुः । अधिमुच्यते निश्चिनोति सुखं भवेदित्यभिनिविशते । किम्भूते मदे स्थितः ? प्रमादायतने स्थितः प्रमादानां साहसानामिहामुत्र चाशुभहेतूनां स्थाने ।

**मध्यमोत्तमयोः सन्धि प्राप्य राजसतामसः ।**
**निरङ्कुश इव व्यालो न किञ्चिन्नाचरेज्जडः ॥ ५ ॥**

मध्यमोत्तमयोर्द्वितीयतृतीययोः सन्धिः प्राप्यान्तरं लब्ध्वा पुरुषो राजसतामसो किञ्चिदशुभं नाचरेदपि तु सर्वमशुभमाचरेत् । राजससहितस्तामसो

राजसतामसः । 'शाकपार्थिवादित्वान्मध्यमपदलोपी समासः' । राजसो वा तामसो वेत्यर्थः । राजसतामसग्रहणात्सात्विकः पुरुषो नेदृशीमवस्थामवाप्नोतीति गमयति । निरङ्कुश इव व्यालः । यथा व्यालो दुष्टो हस्ती जडो बधिरस्तथा निरङ्कुशो न किञ्चिदशुभं नाचरेदुन्मार्गप्रवृत्तत्वात् । तन्त्रान्तरे चैवमुक्तम्—"सात्विके शौचदाक्षिण्यहर्षमण्डनलालसः । गीताध्ययनसौभाग्यसुरतोत्साहकृन्मदः । राजसे दुःखशीलत्वमात्मत्यागंससाहसम् । कलहं सानुबन्धं च करोति पुरुषे मदः । अशौचनिद्रामात्सर्यागम्यागमनलोलताः । असत्यभाषणं चापि कुर्याद्वै तामसे मद इति" । व्यालग्रहणाद्यः शुद्धस्वभावो हस्ती स सृणिरहितोऽपि कदाचिद्धस्त्यारोहशब्दश्रवणात्कालोचितं सङ्केतमुपलभ्य युक्तमाचरत्येवेत्यतो व्यालो निरङ्कुश इति द्वयमुपन्यस्तम् । तेजसः किञ्चिच्छेषत्वान्निन्द्यामिमामवस्थां प्राप्तः ।

अत एवाह—

**इयं भूमिरवद्यानां दौःशील्यस्येदमास्पदम् ।**
**एकोऽयं बहुमार्गाया दुर्गतेर्देशिकः परम् ॥ ६ ॥**

अवद्यानां निन्द्यानामियं मदावस्था भूमिराकरः । तथा दौःशीलस्यासमाहितत्वस्य इदं मदावस्थान्तरमास्पदमावसथः । एकोऽयं मदविशेषो बहुमार्गाया अनेकमुखाया दुर्गतेः परं कृत्वा देशिक आचार्यः ।

**निश्चेष्टः शववच्छेते तृतीये तु मदे स्थितः ।**
**मरणादपि पापात्मा गतः पापतरां दशाम् ॥ ७ ॥**

तृतीये उत्तमे मदे स्थितो नरस्तेजसो विहतत्वान्निश्चेष्टश्चेष्टया कायवाङ्मनोलक्षणया रहितोऽत एव शववच्छेते मृतानुकल्पः स्वपिति । एवं च सत्यसौ पापात्मा मरणादपि पापतरामवस्थां प्राप्तः । यतो मृतो मरणात्समनन्तरमेव शरीरान्तरं प्राप्य सुखादीन् विन्दते । तृतीयां मदावस्थां प्राप्तस्तु पुरुषोऽपरशरीराप्राप्तेर्न कथञ्चित्सुखाद्यनुभवतीति मरणादप्यस्य निकृष्टत्वम् ।

**धर्माऽधर्मं सुखं दुःखमर्थानर्थं हिताऽहितम् ।**
**यदासक्तो न जानाति कथं तच्छीलयेद्बुधः ॥ ८ ॥**

यस्मिन्नासक्तो यदासक्तो धर्मादीन्न जानाति, तत्तथाविधं मद्यं बुधो मतिमान् कथं शीलयेदभ्यसेत् । अत्र धर्मो दानाध्ययनदेवगुरुपूजादिकः । अधर्मो हिंसादिः । सुखमाह्लादकोऽनुभवः । दुःखमुपतापः । अर्थ उभयलोकहितम् । अनर्थोऽहितम् । शीलयेदित्यनेन तत्र सक्तिं निषेधति नतु मद्यपानमपि ।

**मद्ये मोहो भयं शोकः क्रोधो मृत्युश्च संश्रिताः ।**
**सोन्मादमदमूर्च्छायाः सापस्मारापतानकाः ॥ ९ ॥**
**यत्रैकः स्मृतिविभ्रंशस्तत्र सर्वमसाधु यत् ।**

मद्येऽतिपीते मोहादयः संश्रिता आश्रिताः । मद्यातिपानादनन्तरं मोहादीनां

सम्भवात् । अथवा किमत्र बहुनाऽभिहितेन । यत्र यस्मिन्मद्ये स्मृतेर्विभ्रंशो लोपस्तत्र यत्किञ्चिद्विद्यते तत्सर्वमसाध्वशोभनम् । यत्रौजसो न विहतिर्हृत्प्रबोधिश्च स प्रथमो मदः । यत्राऽल्पा विहतिरोजसः स मध्यमः । यत्र समस्तौजोविहतिः स उत्तमः । तथा च मुनिः—" ओजस्यविहते पूर्वो हृदि च प्रतिबोधिते । मध्यमे विहतेऽल्पे तु विहते तूत्तमो मद " इति ।

**अयुक्तियुक्तमन्नं हि व्याधये मरणाय वा ॥ १० ॥**
**मद्यं त्रिवर्गधीधैर्यलज्जादेरपि नाशनम् ।**

यस्मादयुक्त्या योजितमन्नमपि यत्प्राणकरं तदपि कर्मवशाद्व्याधये मरणाय वा सम्पद्यते । मद्यं त्वयुक्तियोजितं त्रिवर्गादेरपि नाशनम् । युक्तिपीतं पुनस्तदेव त्रिवर्गादीनां साधनमित्यपिशब्देन द्योतयति ।

तामेव युक्तिं वक्ष्यमाणेन ग्रन्थेन प्रतिपादयन्नाह—

**नातिमाद्यन्ति बलिनः कृताहारा महाशनाः ॥ ११ ॥**
**स्निग्धाः सत्ववयोयुक्ता मद्यनित्यास्तदन्वयाः ।**
**मेदःकफाधिका मन्दवातपित्ता दृढाग्नयः ॥ १२ ॥**

यत एवंविधा नरा नातिमाद्यन्त्यतो बलवद्भिः पुरुषैः कृताहारैर्महाशनैः स्निग्धैः सत्वयुक्तैर्वयोयुक्तैर्मद्योचितैस्तदन्वयैर्मद्यपकुलप्रसूतैर्मेदोऽधिकैः कफाधिकैः स्वल्पवातपित्तैर्दृढाग्निभिर्मद्यं पेयं नातो विपर्यस्तैः । इत्यन्यतन्त्रकारकथिताया युक्तेरत्रैवान्तर्भावोऽनेन तन्त्रकृता कृतः ।

**विपर्ययेऽतिमाद्यन्ति विश्रब्धाः कुपिताश्च ये ।**
**मद्येन चाम्लरूक्षेण साजीर्णे बहुनाऽति च ॥ १३ ॥**

यथानिर्दिष्टाद्वैपरीत्येन यथा अबलिनो यावददृढाग्नय इति तथा विश्रब्धा अमृतमिवेदं स्पृहणीयं सुरेभ्योऽपि दीयतेऽस्माभिरिति तद्गतमनसो विश्वस्तास्तथा कुपिताः क्रुद्धा ये तेऽतिमाद्यन्ति । मद्येनेत्यादि । अम्लरूक्षेण च मद्येन पीतेन सर्व एवातिमाद्यन्ति । अत्र चात्यम्लेनेति वेद्यम् । मद्यस्य सर्वस्यैवाम्लत्वात् । रूक्षेण नत्वीषत्स्निग्धेन । तथा साजीर्णे । सशब्द ईषदर्थे । ईषदजीर्णे तस्मिन्नेव मद्ये पीतेऽतिमाद्यन्ति । तथा अतिबहुना पीतेन मद्येनातिमाद्यन्ति ।

**वातात्पित्तात्कफात्सर्वैश्चत्वारः स्युर्मदात्ययाः ।**
**सर्वेऽपि सर्वैर्जायन्ते व्यपदेशस्तु भूयसा ॥ १४ ॥**

वातपित्तादिभिः पृथक्स्थितैर्दोषैः सन्निपातेन चेति चत्वारो मदात्यया वस्तुस्वभावाज्जायन्ते । न्यूनाधिकाः सर्वेऽपि मदात्ययाः सर्वैरपि दोषैर्जायन्ते । भूयसा बाहुल्येन तु व्यपदेशः संज्ञा भवत्ययं वातमदात्ययो यावत्सन्निपातमदात्ययोऽयमिति ।

**सामान्यं लक्षणं तेषां प्रमोहो हृदयव्यथा ।**
**विड्भेदः प्रततं तृष्णा सौम्याग्नेयो ज्वरोऽरुचिः ॥ १५ ॥**

शिरः पार्श्वास्थिहृत्कम्पो मर्मभेदस्त्रिकग्रहः ।
उरोविबन्धस्तिमिरं कासः श्वासः प्रजागरः ॥ १६ ॥
स्वेदोऽतिमात्रं विष्टम्भः श्वयथुश्चित्तविभ्रमः ।
प्रलापश्छर्दिरुत्क्लेशो भ्रमो दुःस्वप्नदर्शनम् ॥ १७ ॥

तेषां मदात्ययानां सामान्यं लक्षणमविभागेन प्रमोहादिदुःस्वप्नदर्शनपर्यन्तम् ।

विशेषाज्जागरश्वासकम्पमूर्धरुजोऽनिलात् ।
स्वप्ने भ्रमत्युत्पतति प्रेतैश्च सह भाषते ॥ १८ ॥

वातेन मदात्यये जागरादिकं प्रेतैः सह भाषत इतिपर्यन्तं स्यात् ।

पित्ताद्दाहज्वरस्वेदमोहातीसारतृड्भ्रमाः ।
देहो हरितहारिद्रो रक्तनेत्रकपोलता ॥ १६ ॥

पित्तेन मदात्यये दाहादिकं रक्तनेत्रकपोलतापर्यन्तं स्यात् ।

श्लेष्मणश्छर्दिहृल्लासनिद्रोदर्दाऽङ्गगौरवम् ।

श्लेष्ममदात्यये छर्द्यादिकमङ्गगौरवपर्यन्तं स्यात् ।

सर्वजे सर्वलिङ्गत्वम्,

सर्वजे मदात्यये सर्वलिङ्गत्वं भवति ।

सम्प्रति ध्वंसकविक्षयौ लक्षयति—

मुक्त्वा मद्यं पिबेत्तु यः ॥ २० ॥
सहसाऽनुचितं वान्यत्तस्य ध्वंसकविक्षयौ ।
भवेतां मारुतात्कष्टौ दुर्बलस्य विशेषतः ॥ २१ ॥

उचितं मद्यं चिरकालं परित्यज्य यः पुरुषस्तदेव सहसाऽतिमात्रया पिबेदथवान्यन्मद्यं यदनुचितमसात्म्यं मद्यं तत्सहसाऽतिमात्रं पिबेत्तस्य पुरुषस्य ध्वंसकविक्षयौ व्याधी मारुताद्भवेतां जायेयाताम् । किम्भूतौ ? कष्टौ कृच्छ्रसाध्यत्वात् । दुर्बलस्य पुनः पुंसस्तौ विशेषेण भवेताम् ।

ध्वंसके श्लेष्मनिष्ठीवः कण्ठशोषोऽतिनिद्रता ।
शब्दासहत्वं तन्द्रा च,

ध्वंसके श्लेष्मनिष्ठीवादयः स्युः ।

विक्षयेऽङ्गशिरोऽतिरुक् ॥ २२ ॥
हृत्कण्ठरोगः सम्मोहः कासस्तृष्णा वमिर्ज्वरः ।

विक्षये अङ्गातिरुगाद्याः स्युः ।

निवृत्तो यस्तु मद्येभ्यो जितात्मा बुद्धिपूर्वकृत् ॥ २३ ॥
विकारैः स्पृश्यते जातु न स शारीरमानसैः ।

शारीरमानसानां रोगाणां मद्यं कारणमिति कृत्वा यः पुमान् जितात्मा मद्येभ्यो निवृत्तो बुद्धिपूर्वकृद्विमृश्यकारी स न कदाचिच्छारीरैर्मानसैर्वा विकारैः स्पृश्यते ।

अथ मद्यवच्चेतोविहृतिकारणसामान्यान्मदादीन् लक्षयति—

**रजोमोहाऽहिताहारपरस्य स्युस्त्रयो गदाः ॥ २४ ॥**
**रसासृक्चेतनावाहिस्रोतोरोधसमुद्भवाः ।**
**मदमूर्छायसन्यासा यथोत्तरबलोत्तराः ॥ २५ ॥**

रजःप्रधानस्य मोहप्रधानस्य तथाऽपथ्याहारपरस्य त्रयो गदाः स्युर्जायेरन्। किम्भूताः ? रसश्चासृक् च चेतना च ता वहन्ति यानि स्रोतांसि तेषां रोधः समुद्भवो हेतुर्येषां ते रसासृक्चेतनावाहिस्रोतोरोधसमुद्भवाः । मदमूर्छायसन्न्यासा एतत्संज्ञाः । ते च यथोत्तरबलोत्तराः । यथा उत्तरो यथोत्तरम् । बलस्योत्तरमुत्कर्षः । यथोत्तरं बलोत्तरं येषां त एवम् । मदान्मूर्छायो बलवांस्तस्मादपि सन्न्यास इत्यर्थः ।

**मदोऽत्र दोषैः सर्वैश्च रक्तमद्यविषैरपि ।**

अत्रैषु मदादिषु मध्ये मदः सप्तधा पृथग्दोषैः सन्निपातेन रक्तेन मद्येन विषेण च।

**सक्तानल्पद्रुताभाषश्चलः स्खलितचेष्टितः ॥ २६ ॥**
**रूक्षश्यावारुणतनुर्मदे वातोद्भवे भवेत् ।**

वातोद्भवे मदे सति पुमान् सक्तानल्पद्रुताभाषणादिलक्षणो भवति ।

**पित्तेन क्रोधनो रक्तपीताभः कलहप्रियः ॥ २७ ॥**

पित्तेन क्रोधनादिलक्षणः ।

**स्वल्पासम्बद्धवाक्पाण्डुः कफाद्ध्यानपरोऽलसः ।**

कफात् स्वल्पासम्बद्धवागादिलक्षणः ।

**सर्वात्मा सन्निपातेन,**

सर्वात्मा सर्वदोषलक्षणः सन्निपातेन ।

**रक्तात्स्तब्धाङ्गदृष्टिता ।**
**पित्तलिङ्गं च,**

रक्ताद्रक्तमदात्स्तब्धाङ्गत्वं स्तब्धदृष्टिता तथा पित्तमदलिङ्गं च स्यात् ।

**मद्येन विकृतेहास्वराङ्गता ।**

मद्येन मदे विकृता चेष्टा तथा स्वरस्य विकृतत्वमङ्गस्य च ।

**विषे कम्पोऽतिनिद्रा च सर्वेभ्योऽभ्यधिकस्तु सः ॥ २८ ॥**

विषे विषोत्थे मदे कम्पोऽतिनिद्रा च स्यात् । स च विषमदः सर्वेभ्यो मदेभ्योऽधिकः ।

**लक्षयेल्लक्षणोत्कर्षाद्वातादीन् शोणितादिषु ।**

शोणिताद्युत्थेषु मदेषु वातादीन् लक्षयेत् । कुतः ? लक्षणोत्कर्षात् स्वस्वलक्षणोत्कर्षेण ।

अथ मूर्छायं लक्षयति—

**अरुणं कृष्णनीलं वा खं पश्यन्प्रविशेत्तमः ॥ ३० ॥**



शीघ्रं च प्रतिबुध्येत हृत्पीडा वेपथुभ्रमः
कार्श्यं श्यावारुणा छाया मूर्च्छाये मारुतात्मके ॥ ३१ ॥

मारुतोद्भवे मूर्च्छाये, अरुणाद्यन्यतमवर्णमाकाशं पश्यन् पुमांस्तमः प्रविशन्मूढावस्थां प्राप्नोति । शीघ्रं च प्रतिबुध्येत संज्ञां लभेत । हृत्पीडा वेपथुर्भ्रमस्तथा कार्श्यादि च स्यात् ।

पित्तेन रक्तं पीतं वा नभः पश्यन् विशेत्तमः ।
विबुध्यते च सस्वेदो दाहतृट्तापपीडितः ॥ ३२ ॥
भिन्नविण्नीलपीताभो रक्तपीताकुलेक्षणः ।

पित्तेन मूर्च्छाये रक्तं पीतं वा नभः पश्यंस्तमः पुमान् विशेन्मूढावस्थां प्राप्नुयात् । सह स्वेदेन विबुध्यते सञ्ज्ञां लभते । तथा दाहादिपीडितस्तथा भिन्नविडादिकः ।

कफेन मेघसंकाशं पश्यन्नाकाशमाविशेत् ॥ ३३ ॥
तमश्चिराच्च बुध्येत सहृल्लासः प्रसेकवान् ।
गुरुभिः स्तिमितैरङ्गैरार्द्रचर्मावनद्धवत् ॥ ३४ ॥

कफेन मूर्च्छाये मेघाभमाकाशं पश्यंस्तम आविशेच्चिरेण च बुध्येत सञ्ज्ञां लभेत । हृल्लासादिमांस्तथाऽऽर्द्रेण चर्मणाऽवनद्धो वेष्टित इव ।

सर्वाकृतिस्त्रिभिर्दोषैरपस्मार इवाऽपरः ।
पातयत्याशु निश्चेष्टं विना बीभत्सचेष्टितैः ॥ ३५ ॥

त्रिभिर्दोषैर्यो मूर्च्छायः सर्वाकारः सोऽपरोऽपस्मार इवाशु शीघ्रं पुरुषं निश्चेष्टं पातयति । विना बीभत्सचेष्टितैरपस्मारोत्थानि निन्द्यानि चेष्टितानि वर्जयित्वा । अन्यत्सर्वं समानम् ।

इदानीं सन्न्यासं लक्षयितुमाह—

दोषेषु मदमूर्च्छायाः कृतवेगेषु देहिनाम् ।
स्वयमेवोपशाम्यन्ति सन्यासो नौषधैर्विना ॥ ३६ ॥

मदाश्च मूर्च्छायाश्च मदमूर्च्छायाः कृतवेगेषु दोषेषु सत्सु स्वयमेवौषधं विनाऽपि शाम्यन्ति । सन्न्यासः पुनरौषधैर्विना न शान्तिमेति ।

वाग्देहमनसां चेष्टामाक्षिप्यातिबला मलाः ।
सन्न्यासं सन्निपतिताः प्राणायतनसंश्रयाः ॥ ३७ ॥
कुर्वन्ति तेन पुरुषः काष्ठभूतो मृतोपमः ।
म्रियेत शीघ्रं शीघ्रं चेच्चिकित्सा न प्रयुज्यते ॥ ३८ ॥

वाक् च देहश्च मनश्च तेषां चेष्टां यथास्वलक्षणामाक्षिप्य मला वातपित्तकफाः सन्निपतिताः सन्तस्त्रय एककार्योद्यताः सन्न्यासं कुर्वन्ति । किम्भूताः ? अतिबला-





स्तथा प्राणायतनसंश्रया विशेषेण हृदयाश्रयाः । तेन सन्न्यासेन पुरुषः काष्ठभूतः स्थाणुकुड्यकल्पस्तथा मृतोपमस्तत्सदृशो भूत्वाऽनन्तरं शीघ्रं म्रियते । यदि शीघ्रं चिकित्सा न प्रयुज्यते । 'म्रियेत इति सम्भावनायां लिङ्।'

शीघ्रं चिकित्सनाज्जीवेदित्यत्रैवोदाहरणार्थमाह—

**अगाधे ग्राहबहुले सलिलौघ इवाऽतटे।**
**सन्न्यासे विनिमज्जन्तं नरमाशु निवर्तयेत्॥ ३९॥**

अगाधेऽतलस्पर्शे सलिलौघे तथा ग्राहबहुले मकरादिप्राणहरप्राणिभूयसि । तथाऽतटेऽरोधसि । यथा तस्मिन्निमज्जन्तं नरमाशु शीघ्रं निवर्तयेत्तस्मादुद्धरेदेवं सन्न्यासेऽपि निमज्जन्तं नरमाशु निवर्तयेत् । अनेनोदाहरणेन मदात्ययत्वमस्य व्याधेः प्रदर्शयन् स्वल्पकालहापनमप्यत्र व्याधौ न कार्यमिति द्योतयति ।

इदानीं मदात्ययनिदानत्वान्मद्यस्य मद्येनैवोपसंहारं कुर्वन्नाह—

**मदमानरोषतोषप्रभृतिभिररिभिर्निजैः परिष्वङ्गः।**
**युक्तायुक्तं च समं युक्तिवियुक्तेन मद्येन॥ ४०॥**

युक्तिवियुक्तेन मद्येन मदादिभिर्निजैः शत्रुभिर्दृष्टाऽदृष्टविनाशकारिभिः परिष्वङ्गोऽतिसंश्लेषो भवति । न केवलं मद्येन मदाद्यतिसङ्गो यावद्युक्तायुक्तं समं तुल्यं सम्पद्यते । युक्तमनुष्ठेयमयुक्तमननुष्ठेयम् । तदुभयं समानं जायते । यतश्चैवं ततो मद्यपाने युक्तेर्गरीयस्त्वम् । युक्तिश्च प्रागेव दर्शिता । 'आर्या' ।

पुनरपि युक्तिं प्रदर्शयन्नाह—

**बलकालदेशसात्म्यप्रकृतिसहायामयवयांसि।**
**प्रविभज्य तदनुरूपं यदि पिबति ततः पिबत्यमृतम्॥ ४१॥**

बलकालादीन् प्रविभज्य बुद्ध्या विमृश्य तदनुरूपं तद्योग्यं यदि पिबति ततोऽमृतं पिबति। मद्यव्याजेनामृतमास्वादयतीत्यर्थः। 'उपगीतिः'। 'द्वितीयदलभवलक्ष्म प्रतिनियतमवगम्य । उभयत्राप्युपगीतिं वदन्ति यत्यंशकैर्गदितैः' ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां मदात्ययनिदानं नाम षष्ठोऽध्यायः ।

---

## सप्तमोऽध्यायः।

मदात्ययनिदानानन्तरमर्शोनिदानारम्भो युक्तः । यतोऽ'रिभिर्निजैः परिष्वङ्गः'—इत्युक्तम् । अर्शांसि रिपुसदृशानीति च वक्ष्यति । तस्मादर्शोनिदानं प्रक्रम्यते ।

**अथाऽर्शसां निदानं व्याख्यास्यामः।**

व्याख्या पूर्ववत् ।

**अरिवत्प्राणिनो मांसकीलका विशसन्ति यत्।**



अर्शांसि तस्मादुच्यन्ते गुदमार्गनिरोधतः ॥ १ ॥
दोषास्त्वङ्मांसमेदांसि सन्दूष्य विविधाकृतान् ।
मांसाङ्कुरानपानादौ कुर्वन्त्यर्शांसि तान् जगुः ॥ २ ॥

अनेन सर्वेषामप्यर्शसां गुदमेढ्रादिजानां सामान्येन सम्प्राप्त्याकृती निरूपयति । दोषा वातादयस्त्वङ्मांसमेदांसि दूषयित्वाऽपानादौ यन्मांसाङ्कुरान् कुर्वन्ति तानर्शांसि जगुस्तन्त्रकृत इति शेषः । आदिशब्देन कर्णनासादीनां ग्रहणम् । किम्भूतान्मांसाङ्कुरान् ? विविधाकृतीन्नानासंस्थानान् ।

सहजन्मोत्तरोत्थानभेदाद् द्वेधा समासतः ।
शुष्कस्राविविभेदाच्च,

तानि च समासतः सङ्क्षेपतो द्वेधा द्विप्रकाराणि । कथमित्याह सहेत्यादि । सह जन्मना सहजन्म चोत्तरं च सहजन्मोत्तरे तयोरुत्थानं सहजन्मोत्तरोत्थानं तेन भेदो विशेषस्तस्मात् । कानिचिच्छरीरेण सह जातानि कानिचिज्जन्मोत्तरभावीनि तथा शुष्कस्राविविभेदाच्च द्वेधा । कानिचिच्छुष्काणि कानिचित्स्रावीणि ।

अपानादावित्युक्तमथ तदेव गुदापरपर्यायं लक्षयति—

गुदः स्थूलान्त्रसंश्रयः ॥ ३ ॥
अर्धपञ्चाङ्गुलस्तस्मिंस्तिस्रोऽध्यर्धाङ्गुलाः स्थिताः ।
वल्यः प्रवाहिणी तासामन्तर्मध्ये विसर्जनी ॥ ४ ॥
बाह्या संवरणी तस्या गुदोष्ठो बहिरङ्गुले ।
यवाध्यर्धप्रमाणेन रोमाण्यत्र ततः परम् ॥ ५ ॥

स्थूलान्त्रं संश्रय आश्रयो यस्य स एवंविधो गुदः । स्थूलं यदन्त्रं तत्र प्रतिबद्ध इत्यर्थः । किं प्रमाणोऽसौ ? अर्धपञ्चाङ्गुलः । अर्धेनोनानि पञ्च अर्धपञ्च । 'शाकपार्थिवादित्वात्समासः' । अर्धपञ्च अङ्गुलानि यस्य सोऽर्धपञ्चाङ्गुलः सार्धचतुरङ्गुलपरिमाणः ( इत्यर्थः ) । तस्मिन् गुदे तिस्रो वल्यस्त्रिसङ्ख्याः स्थिताः । किं परिमाणाः ? अध्यर्धाङ्गुलाः अधिकमर्धमङ्गुलं प्रत्येकं परिमाणं यासां ता एवम् । अथ तासां तिसृणामर्थानुगतानि नामान्याह । तत्र मलप्रवाहणादन्तः—अन्ते स्थिता वली प्रवाहिणीति कथ्यते । मध्ये मध्यस्थिता वली मलस्य प्रवहतो बहिर्विसर्जनाद्विसर्जनीति भण्यते । गुदस्य बाह्ये स्थिता मलस्य संवरणात्संवरणीत्युच्यते । तस्याः संवरणीसञ्ज्ञाया वलेरङ्गुले तत्परिमाणे बहिर्बाह्ये गुदोष्ठः स्थितः । प्रमाणेन परिमाणतो गुदोष्ठोऽध्यर्धो यवः सार्धयवप्रमाणः । ततो गुदोष्ठात्परं परतो बहिः रोमाण्यत्र गुदे जायन्ते ।

तत्र हेतुः सहोत्थानां वलीबीजोपतप्तता ।
अर्शसां बीजतप्तिस्तु मातापित्रपचारतः ॥ ६ ॥
दैवाच्च ताभ्यां कोपो हि सन्निपातस्य तान्यतः ।
असाध्यान्येवमाख्याताः सर्वे रोगाः कुलोद्भवाः ॥ ७ ॥



तत्रेति निर्धारणे। सहजोत्तरकालभाविष्वर्शःसु मध्ये सहोत्थानामर्शसां हेतुः वलीबीजोपतप्तता। वल्याः सम्बन्धि बीजं शुक्रार्तवांशो यस्मात्सा वली उत्पद्यते। उपतप्तस्य भावः उपतप्तता। अर्शोविकारकरणसमर्थैर्वातपित्तकफैः पीडनं वलीबीजस्योपतप्ततोच्येत। सा च बीजोपतप्तिर्बीजोपतापो मातापित्रपचारतः। माता च पिता च तौ, तयोरपचारोऽपराध आहारविहारादिकृतस्तस्मात्। तथा दैवात्प्राक्कृतादशुभकर्मणो बीजोपतप्तिः। ताभ्यां मातापित्रपचारदैवाभ्यां यस्मात्सन्निपातस्य कोपस्तस्मात्तान्यर्शांस्यसाध्यानि। एवमनेन पूर्वोक्तेन मार्गेण प्राणिनां सर्वे रोगाः कुलोद्भवा आख्याताः। बीजोपतप्तत्वादसाध्या इत्यर्थः।

**सहजानि विशेषेण रूक्षदुर्दर्शनानि च।**
**अन्तर्मुखानि पाण्डूनि दारुणोपद्रवाणि च॥ ८॥**

सहजान्यर्शांसि विशेषेण रूक्षादिगुणयुतानि भवन्ति। विशेषेणेत्यनेनैतद् द्योतयति। उत्तरजातान्यप्येवम्भूतानि भवन्तीति।

**षोढाऽन्यानि पृथग्दोषसंसर्गनिचयास्रतः।**

अन्यान्युत्तरजातान्यर्शांसि षट्प्रकाराणि पृथग्दोषैर्वातपित्तकफैस्त्रीणि तथा संसर्गेणैकं तथा निचयेन तथा रक्तेनेति षट्कम्। षोढाशब्दः पृषोदरादिः।

**शुष्काणि वातश्लेष्मभ्यामार्द्राणि त्वस्रपित्ततः॥ ९॥**

शुष्कस्राविविभेदाच्च द्विधेत्युक्तं तत्र शुष्काणिप्रायेण वातकफाभ्यां व्यस्तसमस्ताभ्याम्। यानि त्वार्द्राणि तान्यस्रपित्ततस्तथैव व्यस्तसमस्ताभ्यां भवन्ति।

**दोषप्रकोपहेतुस्तु प्रागुक्तस्तेन सादिते।**
**अग्नौ, मलेऽतिनिचिते पुनश्चातिव्यवायतः॥ १०॥**
**यानसङ्क्षोभविषमकठिनोत्कटकासनात्।**
**बस्तिनेत्राश्मलोष्ठोर्वीतलचैलादिघट्टनात्॥ ११॥**
**भृशं शीताम्बुसंस्पर्शात्प्रततातिप्रवाहणात्।**
**वातमूत्रशकृद्वेगधारणात्तदुदीरणात्॥ १२॥**
**ज्वरगुल्मातिसारामग्रहणीशोफपाण्डुभिः।**
**कर्शनाद्विषमाभ्यश्च चेष्टाभ्यो योषितां पुनः॥ १३॥**
**आमगर्भप्रपतनाद्गर्भवृद्धिप्रपीडनात्।**
**ईदृशैश्चापरैर्वायुरपानः कुपितो मलम्॥ १४॥**
**पायोर्वलीषु सन्धत्ते तास्वभिष्यण्णमूर्तिषु।**
**जायन्तेऽर्शांसि,**

पूर्वं सर्वरोगनिदाने दोषप्रकोपहेतुर्दर्शितस्तेन दोषप्रकोपकारणेन वह्नौ सादिते मन्दत्वं गमिते अग्निमान्द्यादाहारः सम्यक्पाकमगच्छन् भूयसा मलत्वेनैव सम्पद्यते। अत इदमाह—"मलेऽतिनिचिते"। मले पुरीषाख्येऽतिनिचिते प्रवृद्धे

मांसाङ्कुरजननयोग्यवायुरपानाख्यः पायुसम्बन्धिनीषु वलीषु तं मलं निचितं धत्ते, तद्देशे मलव्यातिसम्पर्कात्ता वलयोऽभिष्यण्णमूर्तयः प्रक्लिन्नदेहाः सम्पद्यन्ते तासु चाभिष्यण्णमूर्तिष्वर्शांसि जायन्ते । इत्युत्तरकालजानामर्शसां संप्राप्तिः। तथा च केन वायुः कुपितो मलं धत्त इत्याह—"पुनश्चातिव्यवायत इत्यादि" पुनरिति निर्देशात् पूर्वोक्तेन हेतुना वायुः कुपितस्तथातिव्यवायादिभिः कुपित इति गमयति बस्त्यादीनां घट्टनेन सम्बन्धः । प्रततातिप्रवाहणेन दोषादिवेगानां प्रवर्तनम् । वातमूत्रशकृतामुदीरणमिहोक्तमिति प्रवाहणोदीरणयोर्द्वयोरुपादानम् । ज्वरादिभिः कर्षणादिति योज्यम् । विषमाभ्यश्च चेष्टाभ्य इति—सहसाऽतिपादचारणादिकाभ्यः । योषितां पुनरिति पुनःशब्देन पूर्वोक्तेभ्यः प्रकारेभ्य प्रकारान्तरमामगर्भप्रपतनादि गृह्यते । ईदृशैरपरैरप्यनिर्दिष्टैरिह तत्प्रकोपहेतुभिर्वायुः कुपित इति योज्यम् ।

**तत्पूर्वलक्षणं मन्दवह्निता ॥ १५ ॥**
**विष्टम्भः सक्थिसदनं पिण्डकोद्वेष्टनं भ्रमः ।**
**सादोऽङ्गे नेत्रयोः शोफः शकृद्भेदोऽथवा ग्रहः ॥ १६ ॥**
**मारुतः प्रचुरो मूढः प्रायो नाभेरधश्चरन् ।**
**सरुक् सपरिकर्तश्च कृच्छ्रान्निर्गच्छति स्वनन् ॥ १७ ॥**
**अन्त्रकूजनमाटोपः क्षामतोद्गारभूरिता ।**
**प्रभूतं मूत्रमल्पा विट् अश्रद्धा वै धूमकोऽम्लकः ॥ १८ ॥**
**शिरःपृष्ठोरसां शूलमालस्यं भिन्नवर्णता ।**
**तथेन्द्रियाणां दौर्बल्यं क्रोधो दुःखोपचारता ॥ १९ ॥**
**आशङ्का ग्रहणीदोषपाण्डुगुल्मोदरेषु च ।**

तेषामर्शसां पूर्वलक्षणं तत्पूर्वलक्षणं मन्दवह्नितेत्यादिकं शकृद्ग्रहपर्यन्तम् । अत्र पूर्वलक्षणमध्ये शकृद्भेदोऽथवा ग्रह इति निर्दिष्टम् । कस्यचित्पुरुषस्योत्पित्सुष्वर्शःसु भिन्नवर्चस्त्वं कस्यचिद्बद्धवर्चस्त्वमित्यथवाशब्दस्यार्थः । मारुत इति सामर्थ्यादपानाख्यः प्रायो भूयिष्ठं कृत्वा नाभेरधश्चरन् गच्छन् प्रचुरो भवति तथा मूढ इव मूढः क्रियात्मकतां हित्वैव वर्तमानस्तथा सरुक् सशूलस्तथा सह परिकर्तेन वर्तते॰सपरिकर्तश्छिन्दन्निव कृच्छ्रान्निर्गच्छति स्वनन् शब्दायमानः । तथा अन्त्रकूजनादिकं भवति । तथा च ग्रहणीदोषादिष्वाशङ्का भवति ।

**एतान्येव विवर्धन्ते जातेषु हतनामसु ॥ २० ॥**

एतान्येव ग्रहणीदोषादीनि हतनामस्वर्शःसु जातेषु विवर्धन्ते वृद्धिमाप्नुवन्ति ।

**निवर्तमानोऽपानो हि तैरधोमार्गरोधतः ।**
**क्षोभयन्ननिलानन्यान् सर्वेन्द्रियशरीरगान् ॥ २१ ॥**
**तथा मूत्रशकृत्पित्तकफान् धातूंश्च साशयान् ।**



मृद्नात्यग्निं ततः सर्वो भवति प्रायशोऽर्शसः ॥
कृशो भृशं हतोत्साहो दीनः क्षामोऽतिनिष्प्रभः ।
असारो विगतच्छायो जन्तुजुष्ट इव द्रुमः ॥ २३ ॥
कृत्स्नैरुपद्रवैर्ग्रस्तो यथोक्तैर्मर्मपीडनैः ।
तथा कासपिपासास्यवैरस्यश्वासपीनसैः ॥ २४ ॥
क्लमाङ्गभङ्गवमथुक्षवथुश्वयथुज्वरैः ।
क्लैब्यबाधिर्यतैमिर्यशर्कराश्मरिपीडितः ॥ २५ ॥
क्षामभिन्नस्वरो ध्यायन्मुहुः ष्ठीवन्नरोचकी ।
सर्वपर्वास्थिहृन्नाभिपायुवंक्षणशूलवान् ॥ २६ ॥
गुदेन स्रवता पिच्छां पुलाकोदकसन्निभाम् ।
विबद्धमुक्तं शुष्कार्द्रं पक्वामं चान्तरान्तरा ॥ २७ ॥
पाण्डु पीतं हरिद्रक्तं पिच्छिलं चोपवेश्यते ।

तैरर्शोभिरधोमार्गरोधादपानो निवर्तमान ऊर्ध्वं प्रवृत्तः सर्वानानिलान् समानोदानव्यानप्राणान् सर्वेन्द्रियशरीरगान् प्रत्याहरणरूपतया क्षोभयन् संरम्भान् कुर्वंस्तथा मूत्रादींस्तथा धातून् रसादींश्च साशयान् सहाधारेण वर्तमानान् क्षोभयन्नग्निं मृद्नाति मन्दीकरोति। ततोऽग्निमर्दनादिकात् कारणात् प्रायेणार्शसो दुर्नामवान् कृशादिकः स्यात्। 'अर्शस इत्यत्रार्शआदित्वादच्'। विगतच्छायो द्रुमो जन्तुजुष्टः पत्रौघविरहाद्यथा छायारहितस्तथैवार्शसः शोभारहित इति ' श्लेषोपमालङ्कारः ' । तथेति। न केवलं पूर्वोक्तैरुपद्रवैर्ग्रस्तः कासादिभिरपीत्यर्थः। क्लैब्येत्यादि अश्मरिपीडित इत्यत्र ' ङ्यापोरित्यादिना बहुलवचनाद्ध्रस्वः '। अथवा अश्मनि पीडित इति पाठः। क्षामो भिन्नश्च स्वरो यस्य स एवम्। तथा ध्यायंश्चिन्ताव्याप्तः। तथा निष्ठीवनादिभिर्युतः। तथा गुदेन पिच्छां पुलाकोदकसन्निभां स्रवता विबद्धादिकमुपवेश्यते। अप्राप्तपाकं पुलाकशब्दवाच्यम्। आगमः-"धान्यं पुलाकोऽनिष्पन्नमिति"। अथवा पुलाकः कुत्सितं धान्यं, तस्योदकेन तुल्यम्। विबद्धमुक्तमिति कदाचिदुद्वृत्तं कदाचिदनुद्वृत्तं भवति।

वातार्शसां लक्षणमाह—

गुदाङ्कुरा बह्वनिलाः शुष्काश्चिमिचिमान्विताः ॥ २८ ॥
म्लानाः श्यावारुणाः स्तब्धा विषमाः परुषाः खराः ।
मिथो विसदृशा वक्रास्तीक्ष्णा विस्फुटिताननाः ॥ २९ ॥
बिम्बीकर्कन्धूखर्जूरकार्पासीफलसन्निभाः ।
केचित्कदम्बपुष्पाभाः केचित्सिद्धार्थकोपमाः ॥ ३० ॥
शिरःपार्श्वांसकट्यूरुवङ्क्षणाभ्यधिकव्यथाः ।
क्षवथूद्गारविष्टम्भहृद्ग्रहारोचकप्रदाः ॥ ३१ ॥



कासश्वासाग्निवैषम्यकर्णनादभ्रमावहाः ।
तैरार्तो ग्रथितं स्तोकं सशब्दं सप्रवाहिकम् ॥ ३२ ॥
रुक्फेनपिच्छानुगतं विबद्धमुपवेश्यते ।
कृष्णत्वङ्नखविण्मूत्रनेत्रवक्त्रश्च जायते ॥ ३३ ॥
गुल्मप्लीहोदराष्ठीलासम्भवस्तत एव च ।

वाताधिका गुदजाः शुष्कादिगुणयुक्ताः । विषमा विषमसंस्थाना ऊर्ध्वाधस्तिर्यगादिदुःसंस्थिताः । परुषाः शाकपत्रादितुल्यस्पर्शाः । मिथो विसदृशाः परस्परमतुल्यसन्निवेशाः । वक्रा धनुष्कोट्यादिवत् । तथा तीक्ष्णा दर्भाङ्कुरवत् । विस्फुटितं केसरादिवदाननं येषां त एवम् । बिम्ब्याद्यनेकोपमानोपादानं तेषां विचित्ररूपदर्शनार्थम् । शिरआदिष्वधिकव्यथाः । तथा त्ववथ्वादिप्रदाः । तथा कासादिकृतः । तैरार्तः पीडितो ग्रथितादिकमुपवेश्यते । कृष्णत्वगादिश्च स्यात् । तत एव गुदाङ्कुरेभ्यो गुल्मादिसम्भवः ।

पित्तोत्तरा नीलमुखा रक्तपीतासितप्रभाः ॥ ३४ ॥
तन्वस्रस्राविणो विस्रास्तनवो मृदवः श्लथाः ।
शुकजिह्वायकृत्खण्डजलौकोवक्त्रसन्निभाः ॥ ३५ ॥
दाहपाकज्वरस्वेदतृण्मूर्छारुचिमोहदाः ।
सोष्माणो द्रवनीलोष्णपीतरक्तामवर्चसः ॥ ३६ ॥
यवमध्या हरित्पीतहारिद्रत्वङ्नखादयः ।

पित्तार्शसां नीलमुखा इत्यादि लक्षणं हारिद्रत्वङ्नखादय इतिपर्यन्तम् । तन्वच्छमस्रं रक्तं नित्यं स्रवन्तीत्याभीक्ष्ण्ये णिनिः । तथा तनवो न घनाः श्लेष्मगुदाङ्कुरवत् । मृदवः शिरीषपुष्पादिवत् । श्लथाः स्विन्नमांसादिवत् । शुकजिह्वेत्यादि बहूपमात्वं पूर्ववत्संस्थानवर्णवैचित्र्यार्थम् । द्रवादीनां वर्चसा सम्बन्धः । यवमध्या यवमध्यसंस्थानाः । हरितो दूर्वावर्णाः । पीता हारिद्राश्च त्वगादयो येषु त एवम् । आदिशब्देन नयनविण्मूत्रादयो गृह्यन्ते ।

श्लेष्मोल्बणा महामूला घना मन्दरुजः सिताः ॥ ३७ ॥
उच्छूनोपचिताः स्निग्धाः स्तब्धवृत्तगुरुस्थिराः ।
पिच्छिलाः स्तिमिताः श्लक्ष्णाः कण्ड्वाढ्याः स्पर्शनप्रियाः ॥३८
करीरपनसास्थ्याभास्तथा गोस्तनसन्निभाः ।
वङ्क्षणानाहिनः पायुबस्तिनाभिविकर्तिनः ॥ ३९ ॥
सकासश्वासहृल्लासप्रसेकारुचिपीनसाः ।
मेहकृच्छ्रशिरोजाड्यशिशिरज्वरकारिणः ॥ ४० ॥
क्लैब्याग्निमार्दवच्छर्दिरामप्रायविकारदाः ।
वसाभाः सकफप्राज्यपुरीषाः सप्रवाहिकाः ॥ ४१ ॥



न स्रवन्ति न भिद्यन्ते पाण्डुस्निग्धत्वगादयः।

श्लेष्मार्शसां महामूलादिकं लक्षणं पाण्डुस्निग्धत्वगाद्यन्तम्। बहुनिद्रा इत्यनेन पित्तोल्बणा इत्यनेन च निर्देशेन सर्वेषामर्शसां त्रिदोषजत्वं द्योतयति। तेन सर्वाण्यर्शांसि त्रिदोषजानि भूयसा तु व्यपदेश इति वेद्यम्।

संसृष्टलिङ्गाः संसर्गात्,

संसर्गाद् गुदाङ्कुराः संसृष्टलिङ्गाः संसृष्टरूपाः स्युः।

निचयात्सर्वलक्षणाः ॥ ४२ ॥

निचयात्सन्निपातात् सर्वलक्षणा दोषत्रयलक्षणयुताः।

रक्तोल्बणा गुदे कीलाः पित्ताकृतिसमन्विताः।
वटप्ररोहसदृशा गुञ्जाविद्रुमसन्निभाः ॥ ४३ ॥
तेऽत्यर्थं दुष्टमुष्णं च गाढविट्प्रतिपीडिताः।
स्रवन्ति सहसा रक्तं तस्य चातिप्रवृत्तितः ॥ ४४ ॥
भेकाभः पीड्यते दुःखैः शोणितक्षयसम्भवैः।
हीनवर्णबलोत्साहो हतौजाः कलुषेन्द्रियः ॥ ४५ ॥

रक्तोल्बणा रक्ताधिका गुदे कीलाः पित्तस्याकृत्या लक्षणेन समन्विता इत्यादिकं कलुषेन्द्रिय इति यावदेषां लक्षणं बोध्यम्। गुदाङ्कुरा इति प्रकृतेऽपि गुदे कीलाः इत्युक्तं वैचित्र्यार्थम्। ते च गुदे कीला अतिदुष्टमुष्णं च सहसा अचिन्तितमेव शूलादिलिङ्गै रक्तं स्रवन्ति। गाढविट्प्रतिपीडिताः सन्तस्तस्य च रक्तस्यातिप्रवृत्तितो भेकाभो भवति। चोऽवधारणे। तस्यैव रक्तस्यातिप्रवर्तनान्मण्डूकाभः स्यान्न कारणान्तरेणेत्यर्थः। शोणितक्षयसम्भवैर्दुःखै रोगैः पीड्यते। रक्तेऽम्लशिशिरप्रीतिः सिराशैथिल्यरूक्षता इति रक्तक्षयजा उक्ताः। तथा हीनवर्णबलोत्साहादि स्यात्।

मुद्गकोद्रवजूर्णाह्वकरीरचणकादिभिः।
रूक्षैः सङ्ग्राहिभिर्वायुः स्वस्थाने कुपितो बली ॥ ४६ ॥
अधोवहानि स्रोतांसि संरुध्याऽधः प्रशोषयन्।
पुरीषं वातविण्मूत्रसङ्गं कुर्वीत दारुणम् ॥ ४७ ॥
तेन तीव्रा रुजा कोष्ठपृष्ठहृत्पार्श्वगा भवेत्।
आध्मानमुदरावेष्टो हृल्लासः परिकर्तनम् ॥ ४८ ॥
वस्तौ च सुतरां शूलं गण्डश्वयथुसम्भवः।
पवनस्योर्ध्वगामित्वं ततश्छर्द्यरुचिज्वराः ॥ ४९ ॥
हृद्रोगग्रहणीदोषमूत्रसङ्गप्रवाहिकाः।
बाधिर्यतिमिरश्वासशिरोरुक्कासपीनसाः ॥ ५० ॥
मनोविकारस्तृष्णास्रपित्तगुल्मोदरादयः।

१ जूर्णाह्वः–'ज्वार' इति हिन्दीभाषायाम्।



**ते ते च वातजा रोगा जायन्ते भृशदारुणाः ॥ ५१ ॥**
**दुर्नाम्नामित्युदावर्तः परमोऽयमुपद्रवः ।**
**वाताभिभूतकोष्ठानां तैर्विनाऽपि स जायते ॥ ५२ ॥**

आदिशब्देन मसूरादीनां ग्रहणम् । मुद्गादिभी रूक्षैः सङ्ग्राहिभिर्वायुरपानाख्यः स्वस्थाने बस्त्यादिलक्षणे कुपितोऽत एव बलवान् स्वस्थाने कुपितो बली स्यात्। बली पवनो वा वातादिसङ्गं कुर्वीत । किं कृत्वा ? अधोवहानि स्रोतांसि संरुध्य । किं कुर्वन् ? अधः पुरीषं प्रशोषयन् । तेन वातविण्मूत्रसङ्गेन हेतुना, तेन वा तथाविधेन वायुकोपेन तीव्रा दारुणा पीडा कोष्ठादिगा भवेत् । तथा आध्मानादयः स्युः परिकर्तनं च । बस्तौ चेति चशब्दो भिन्नक्रमः । शूलं चेत्यर्थः । गण्डयोः श्वयथुर्गण्डश्वयथुस्तस्य सम्भवः । पवनस्य प्रकृतत्वादपानाख्यस्योर्ध्वगामित्वं स्यात् । तत ऊर्ध्वगमनाच्छर्द्यादयः स्युः । तैरेव वातजा रोगा अनेके नखभेदादयो भृशदारुणा अतिदुःखावहा जायन्ते । दुर्नाम्नामित्येवं पूर्वोक्तेन प्रकारेणायं उदावर्तः परमो महानुपद्रवो स्मृतो मुनीन्द्रैरिति शेषः । वातेत्यादि । वातेनाभिभूतो व्याप्तः कोष्ठो येषां त एवं तेषां दुर्नामभिर्विनाऽपि स उदावर्तो जायते न केवलमेतैरित्यपिशब्दार्थः ।

अधुना साध्याऽसाध्यविभागमेषामाह—

**सहजानि त्रिदोषाणि यानि चाभ्यन्तरे वलौ ।**
**स्थितानि तान्यसाध्यानि याप्यन्तेऽग्निबलादिभिः ॥ ५३ ॥**

सहजान्यर्शांसि तथा त्रिदोषजानि यथोत्तरकालजान्यभ्यन्तरे वलौ यानि स्थितान्येकदोषजानि तान्यप्यसाध्यानि । 'वलिशब्दः पुंस्त्रीलिङ्गः' । अर्शसामसाध्यानां किं कार्यम् ? इत्याह । याप्यन्त इत्यादि । अग्निबलमादि येषां त एवं तैर्याप्यन्ते । अग्निबलेऽक्षीण आयुषि च । पादसम्पदि चेत्यर्थ ।

**द्वन्द्वजानि द्वितीयायां वलौ यान्याश्रितानि च ।**
**कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च ॥ ५४ ॥**

द्वन्द्वजानि सङ्करोत्पन्नानि यानि च द्वितीयायां वलौ संश्रितानि तानि कृच्छ्रसाध्यान्याहुर्मुनय इति शेषः । तथा परिसंवत्सराणि परिगतानि संवत्सरं परिसंवत्सराणि । ' प्रादिसमासः ' । वर्षातिक्रान्तानीत्यर्थः ।

**बाह्यायां तु वलौ जातान्येकदोषोल्बणानि च ।**
**अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च ॥ ५५ ॥**

बाह्यायां वलौ जातानि यानि तथैकदोषोल्बणानि च तथा नचिरोत्पतितानि संवत्सरादर्वाग्जातानि च सुखसाध्यानि ।

**मेढ्रादिष्वपि वक्ष्यन्ते यथास्वं,**





मेढ्रभगनासाकर्णादिषु चार्शांसि वक्ष्यन्ते । यथा स्वे स्वीयेऽध्याये गुह्यरोगविज्ञाने नासारोगविज्ञाने कर्णरोगविज्ञानादौ चेति ।

**नाभिजानि तु ।**
**गण्डूपदाऽऽस्यरूपाणि पिच्छिलानि मृदूनि च ॥ ५६ ॥**

नाभिजानि तु नाभौ जातानि पुनर्गण्डूपदास्यरूपाणि गण्डूपदानां किञ्चुलुकानामास्यं तदिव रूपं येषां तान्येवम् । पिच्छिलानि पिच्छावन्ति तथा मृदूनि च भवन्ति ।

चर्मकीलान्याह—

**व्यानो गृहीत्वा श्लेष्माणं करोत्यर्शस्त्वचो बहिः ।**
**कीलोपमं स्थिरखरं चर्मकीलं तु तं विदुः ॥ ५७ ॥**

व्यानाख्यो वायुः श्लेष्माणं गृहीत्वाऽर्शः करोति । क ? त्वचो बहिर्बाह्यप्रदेशे । किम्भूतम् ? कीलोपमं तथा स्थिरं खरं च । तं च श्लेष्माङ्कुरं चर्मकीलं विदुर्मुनय इति शेषः ।

**वातेन तोदः पारुष्यं पित्तादसितरक्तता ।**
**श्लेष्मणा स्निग्धता तस्य ग्रथितत्वं सवर्णता ॥ ५८ ॥**

वातेनाधिकेन तोदपारुष्ये भवतः । पित्तादसितरक्तता भवति । श्लेष्मणा तस्य चर्मकीलस्य स्निग्धतादिकं स्यात् । ग्रन्थिसदृशत्वम् । सवर्णता प्रकृतशरीरतुल्यवर्णता ।

**अर्शसां प्रशमे यत्नमाशु कुर्वीत बुद्धिमान् ।**
**तान्याशु हि गुदं बद्ध्वा कुर्युर्बद्धगुदोदरम् ॥ ५९ ॥**

अर्शसां प्रशमे शान्तौ सुमतिः शीघ्रं यत्नं कुर्वीत । किमिति च इत्याह । तानीत्यादि । यस्मात्तान्यर्शांसि गुदं बद्ध्वा निरुद्ध्य बद्धगुदोदरं शीघ्रं कुर्युरिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां निदानस्थानेऽर्शसां निदानं नाम सप्तमोऽध्यायः ॥ ७ ॥



# अष्टमोऽध्यायः ।

अर्शोनिदानानन्तरमतिसारग्रहणीरोगनिदानारम्भः । यतो वक्ष्यति—'अर्शोऽतिसारग्रहणीविकाराः प्रायेण चान्योन्यनिदानभूता इति' । तस्मादतिसारग्रहणीरोगनिदानं प्रक्रम्यत इत्याह—

**अथातोऽतीसारग्रहणीरोगयोर्निदानं व्याख्यास्यामः ।**

पूर्ववद्व्याख्या—

**दोषैर्व्यस्तैः समस्तैश्च भयाच्छोकाच्च षड्विधः ।**



अतीसारः,

दोषैर्व्यस्तैः पृथग्वातपित्तकफैः समस्तैः सन्निपातेन तथा भयाच्छोकाच्चेति षड्विधोऽतीसारः ।

स सुतरां जायतेऽत्यम्बुपानतः ॥ १ ॥
कृशशुष्कामिषासात्म्यतिलपिष्टविरूढकैः ।
मद्यरूक्षातिमात्रान्नैरर्शोभिः स्नेहविभ्रमात् ॥ २ ॥
कृमिभ्यो वेगरोधाच्च तद्विधैः कुपितोऽनिलः ।
विस्रंसयत्यधोऽब्धातुं हत्वा तेनैव चानलम् ॥ ३ ॥
व्यापद्यानुशकृत्कोष्ठं पुरीषं द्रवतां नयन् ।
प्रकल्पतेऽतिसाराय,

स च सुतरामत्यम्बुपानाज्जायते । कृशशुष्कामिषादिभिस्तथा स्नेहविभ्रमः स्नेहव्यापत्तिस्तद्विधैर्वातप्रकोपहेतुभिरिहानुक्तैरप्यनिलः कुपितोऽब्धातुं शरीरगतमधो विस्रंसयत्यधस्तान्नयति । तेनैवाऽब्धातुनाऽनलं जठराग्निं हत्वा मन्दत्वं नीत्वा तथा कोष्ठं व्यापद्य शून्यतां कोष्ठस्य कारयित्वाऽनुशकृच्छकृतः समीपे नतु सर्वं कोष्ठं पुरीषं च तेनैव धातुना द्रवतां नयन् प्रापयन्नतीसाराय कल्पते सम्पद्यते । अनिल इति योज्यम् ।

लक्षणं तस्य भाविनः ॥ ४ ॥
तोदो हृद्गुदकोष्ठेषु गात्रसादो मलग्रहः ।
आध्मानमविपाकश्च,

तस्यातिसारस्य भाविनो भविष्यतो लक्षणं तोदो हृदादिषु गात्रसादादि च ।

तत्र वातेन विड्जलम् ॥ ५ ॥
अल्पाल्पं शब्दशूलाढ्यं विबद्धमुपवेश्यते ।
रूक्षं सफेनमच्छं च ग्रथितं वा मुहुर्मुहुः ॥ ६ ॥
तथा दग्धगुडाभासं सपिच्छापरिकर्तिकम् ।
शुष्कास्यो भ्रष्टपायुश्च हृष्टरोमा विनिष्टनन् ॥ ७ ॥

तेषु षडतिसारेषु वातेनातिसारे विड्जलादिकं शुष्कमुखादिको नर उपवेश्यते । किं कुर्वन् ? विनिष्टनन् । कोऽर्थः ? आर्तशब्दं कुर्वन्नुपवेश्यते ।

पित्तेन पीतमसितं हरितं शाद्वलप्रभम् ।
सरक्तमतिदुर्गन्धं तृण्मूर्छास्वेददाहवान् ॥ ८ ॥
सशूलपायुसन्तापं पाकवान्,

पित्तेन तृडादिमान्नरः पीतादिकमुपवेश्यते पुरीषं त्यज्यते ।

श्लेष्मणा घनम् ।
पिच्छिलं तन्तुमच्छ्वेतं स्निग्धमामं कफान्वितम् ॥ ९ ॥



स्वदोषसंश्रयाख्येन का ोन गुल्मश्चिरेण कालेन पाकं भजेद्वे । एतच्च पित्तगुल्मं प्रति प्रायेण तथैकीयमतेनोक्तम् । अत एवाह नैव वेति । अथवा गुल्मः पाकं न भजत एव । विद्रधिस्तु शीघ्रमचिरेणैव कालेन पाकं भजतेऽत्यर्थं दुष्टरक्ताश्रयत्वात् । अतः शीघ्रविदाहित्वात्कारणादसौ विद्रधिरभिधीयते । तथा चागमः— "मांसशोणितभूयस्त्वात् पाकं गच्छति विद्रधिः । मांसशोणितहीनत्वाद् गुल्मः पाकं न गच्छति"। तथा प्रायेण वातात्मकः सर्वो गुल्मो जायते । वात एवामूर्तोऽपि मूर्तत्वमिव संश्रितो गुल्म इत्युच्यते । अत एव वातस्यैव सर्वगुल्मकारणं प्रति प्राधान्यम् । तस्माद् गुल्मस्य पाकानुपपत्तिः । अथ गुल्मस्य बाह्याभ्यन्तरलक्षणमाह । गुल्मेऽन्तराश्रयेऽभ्यन्तरे बस्त्यादिवेदनादयः स्युः । तथा अग्न्यादिभ्रंशो विनाशो वेगानां च प्रवर्तनं न भवति । अतोऽस्माद्बाह्ये विपर्ययो वैपरीत्यम् । यथाऽग्न्यादिभ्रंशाभावो वेगानां च प्रवर्तनं भवति तथा बस्तिहृदयादिषु कोष्ठाङ्गेष्वतिरुङ् न भवति यथान्तरे तथाऽवकाशस्य गुल्मप्रदेशस्य वैवर्ण्यं शरीरादन्यवर्णत्वम् । बहिर्बाह्यभाग उन्नतत्वमधिकं भवति ।

गुल्मानामानाहभूयिष्ठत्वादानाहलक्षणमाह—

**साटोपमत्युग्ररुजमाध्मानमुदरे भृशम् ॥ ५६ ॥**
**ऊर्ध्वाधो वातरोधेन तमानाहं प्रचक्षते ।**

ऊर्ध्वाधो वातरोधेन कारणभूतेनोदरे भृशमाध्मानं यत्तमानाहं प्रचक्षते । मुनय इति शेषः । किम्भूतम् ? साटोपं सशब्दं तथाऽत्युग्रा रुक् पीडा यत्र तदेवम् । सुश्रुतेन प्रत्याध्मानस्यापि लक्षणमभ्यधायि—" विमुक्तपार्श्वहृदयं तदेवामाशयोत्थितम् । प्रत्याध्मानं विजानीयात्कफव्याकुलितानिलमिति " ।

**घनोऽष्ठीलोपमो ग्रन्थिरष्ठीलोर्ध्वं समुन्नतः ॥ ६० ॥**
**अनाहलिङ्गस्तिर्यक्तु प्रत्यष्ठीला तदाकृतिः ।**

निबिडो यो ग्रन्थिरष्ठीलयोपमीयते तथोर्ध्वं समुन्नतस्तथानाहलिङ्गो यः स ग्रन्थिरानाहलिङ्गोऽष्ठीला भण्यते । तिर्यक् च यो ग्रन्थिर्नोर्ध्वं समुन्नतस्तदाकृतिरष्ठीलासदृशः स ग्रन्थिः प्रत्यष्ठीलोच्यते ।

तूनीप्रतून्यौ लक्षयति—

**पक्वाशयाद् गुदोपस्थं वायुस्तीव्ररुजः प्रयान् ।**
**तूनी प्रतूनी तु भवेत्स एवातो विपर्यये ॥ ६१ ॥**

गुदं चोपस्थश्च गुदोपस्थम् । पक्वाशयात्ततो देशाद्वायुस्तीव्ररुजः सन् गुदोपस्थं प्रयान् गच्छंस्तूनीत्युच्यते । स एव वायुरतो विपर्यये गुदोपस्थात्पक्वाशयं गच्छंस्तीव्ररुजः सन् प्रतूनीति गद्यते ।

**उद्गारबाहुल्यपुरीषबन्धतृप्त्यक्षमत्वान्त्रविकूजनानि ।**
**आटोपमाध्मानमपक्तिशक्तिमासन्नगुल्मस्य वदन्ति चिह्नम् ॥ ६२ ॥**

उद्गारबाहुल्यादीन्यासन्नगुल्मस्य चिह्नं लक्षणं वदन्ति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां निदानस्थाने विद्रधिगुल्मनिदानं नामैकादशोऽध्यायः॥ ११ ॥

# द्वादशोऽध्यायः।

अथोदरनिदानमारभ्यते। यतोऽनन्तरेऽध्याय आनाहलक्षणमुक्तम्। उदरं च कुक्षिमाध्माप्यानह्य दोषाः कुर्वते। तस्मादतोऽनन्तरमुदरनिदानमुच्यत इत्याह–

**अथाऽत उदरनिदानं व्याख्यास्यामः।**

**रोगाः सर्वेऽपि मन्देऽग्नौ सुतरामुदराणि तु।**
**अजीर्णान्मलिनैश्चान्नैर्जायन्ते मलसञ्चयात्॥ १॥**

सर्वेऽपि ज्वरातीसारादयो रोगा मन्देऽग्नौ सति जायन्तेऽतिशयेन पुनरुदराणि। अन्येभ्यश्चोदरहेतुभ्यो मन्दाग्नित्वं प्रधानमुदराणां कारणमिति मन्देऽग्नावित्यनेन प्रागुद्दिष्टेन द्योतयति। अजीर्णादित्यादि। चतुर्विधादजीर्णादामविष्टब्धरसशेषाख्यात्तथा। मलिनैश्चान्नैः पूतिपर्युषितसङ्कीर्णादिलक्षणैस्तथा मलसञ्चयाच्चिरकालसम्भृताद्दोषाणां प्रचयादुदराणि जायन्ते।

अधुना सम्प्राप्तिमेषामाह–

**ऊर्ध्वाधो धातवो रुद्ध्वा वाहिनीरम्बुवाहिनीः।**
**प्राणाग्न्यपानान् सन्दूष्य कुर्युस्त्वङ्मांससन्धिगाः॥ २॥**
**आध्माप्य कुक्षिमुदरम्,**

अम्बुवाहिनीर्वाहिनीर्जलवाहीनि स्रोतांस्यूर्ध्वाधो रुद्ध्वा धातवो वातादय उदरं कुर्युः। कीदृशाः? त्वक् च मांसं च त्वङ्मांसे, तयोः सन्धिरन्तरं तत्र गच्छन्तीति त्वङ्मांससन्धिगास्तत्स्था इत्यर्थः। किं कृत्वा? कुक्षिमाध्माप्यानह्य। तथा प्राणश्चाग्निश्चापानश्च तान् प्राणाग्न्यपानान् सन्दूष्य दूषयित्वा। प्रकृत्या मन्दोऽग्निः पुनर्वातादिभिः सन्दूषितो जठरं करोतीत्यर्थः।

**अष्टधा तच्च भिद्यते।**
**पृथग्दोषैः समस्तैश्च प्लीहबद्धक्षतोदकैः॥ ३॥**

तच्चोदरमष्टधा स्यात् पृथग्दोषैर्वातपित्तकफैस्त्रयः। समस्तैः सन्निपातेन चैकम्। प्लीहोदरं बद्धोदरं क्षतोदरं जलोदरमिति। वातादिकृतान्यपि प्लीहाद्युदराणि प्लीहादिनिमित्तसंज्ञयोक्तानि। यथा वृद्ध्याख्यो रोगः संज्ञाविशेषश्च चिकित्साविशेषप्रतिपत्त्यर्थः।

**तेनार्ताः शुष्कताल्वोष्ठाः शूनपादकरोदराः।**
**नष्टचेष्टाबलाहाराः कृशाः प्रध्मातकुक्षयः॥ ४॥**
**स्युः प्रेतरूपाः पुरुषाः,**



तेनोदरेणार्ताः पीडिताः पुरुषाः शुष्कताल्वोष्ठाः शूनपादादयो नष्टचेष्टादयः कृशादयश्च स्युः।

भाविनस्तस्य लक्षणम्।
क्षुन्नाशोऽन्नं चिरात्सर्वं सविदाहं च पच्यते॥ ५॥
जीर्णाऽजीर्णं न जानाति सौहित्यं सहते न च।
क्षीयते बलतः शश्वच्छ्वसित्यल्पेऽपि चेष्टिते॥ ६॥
वृद्धिर्विशोऽप्रवृत्तिश्च किञ्चिच्छोफश्च पादयोः।
रुग्बस्तिसन्धौ तता लघ्वल्पाभोजनैरपि॥ ७॥
राजीजन्म वलीनाशो जठरे,

तस्य भाविनो भविष्यतो लक्षणं क्षुन्नाशादिकं स्यात्। तथा बस्तिसन्धौ रुक् शूलं तथा लघुभोजनैरल्पभोजनैरभोजनैरपि बस्तिसन्धौ ततता विस्तीर्णता आध्माततेत्यर्थः। तथा राजीनां जन्म सम्भवो वलीनां च नाशो जठरे स्यात्।

जठरेषु तु।
सर्वेषु तन्द्रा सदनं मलसङ्गोऽल्पवह्निता॥ ८॥
दाहः श्वयथुराध्मानमन्ते सलिलसम्भवः।

जठरेषु जठराख्येषु सर्वेषु तु रोगेषु तन्द्राऽलस्यं तथा सदनं देहस्य भवति। तथा मलस्य सङ्गः पुरीषस्याऽप्रवृत्तिः। तथाऽल्पवह्नित्वम्। तथा दाहः श्वयथुराध्मानं च अन्तेऽवसाने सलिलसम्भवः।

अतोयमुदरं किंलक्षणमित्याह—

सर्वं त्वतोयमरुणमशोफं नातिभारिकम्॥ ९॥
गवाक्षितं सिराजालैः सदा गुडगुडायते।
नाभिमन्त्रं च विष्टभ्य वेगं कृत्वा प्रणश्यति॥ १०॥
मारुतो हृत्कटीनाभिपायुवङ्क्षणवेदनः।
सशब्दो निश्चरेद्वायुर्विड्बन्धो मूत्रमल्पकम्॥ ११॥
नातिमन्दोऽनलो लौल्यं न च स्याद्विरसं मुखम्।

सर्वमुदरमतोयं जलोदरतामप्राप्तं वर्णतोऽरुणं तथाऽशोफं शोफेनानाक्रान्तं तथा नातिभारिकं नातिशयेन गुरु, तथा सिराजालैः सिरासमूहैर्जालाकृतिभिर्गवाक्षितं निरन्तरमाक्रान्तं सदा सर्वकालं गुडगुडायते गुडगुड ईदृशमव्यक्तं शब्दमाचरति। तथा मारुतो नाभिं विष्टभ्य स्तब्धतां नीत्वा तथान्त्रं च विष्टभ्य वेगं कृत्वा हृत्कटीनाभिपायुवङ्क्षणवेदनेत्येवंरूपमात्मीयं संरम्भं प्रदर्श्यानन्तरं प्रणश्यति नोपलभ्यते। तथा सशब्दो वायुरन्तर्निश्चरेन्निर्याति। तथा विड्बन्धस्तथा मूत्रमतिशयेनाल्पं स्यान्नातिमन्दोऽग्निस्तथा लौल्यं गृद्धिर्नच विरसं मुखं स्याद्यत्र तदतोयसम्भवं वेद्यम्। अस्माच्च विपरीतलक्षणं सामर्थ्यात्सतोयम्।

तत्र वातोदरे शोफः पाणिपान्मुष्ककुक्षिषु ॥ १२ ॥
कुक्षिपार्श्वोदरकटीपृष्ठरुक् पर्वभेदनम् ।
शुष्ककासोऽङ्गमर्दोऽधोगुरुता मलसङ्ग्रहः ॥ १३ ॥
श्यावारुणत्वगादित्वमकस्माद् वृद्धिह्रासवत् ।
सतोदभेदमुदरं तनुकृष्णसिराततम् ॥ १४ ॥
आध्मातदृतिवच्छब्दमाहतं प्रकरोति च ।
वायुश्चात्र सरुक्शब्दो विचरेत्सर्वतोगतिः ॥ १५ ॥

तत्र तेषूदरेषु मध्ये वातोदरे शोफः पाण्यादिषु तथा कुक्ष्यादिरुक् पर्वभेदनं तथा शुष्ककासादयः स्युः । अकस्मान्निमित्तं विनोदरं वृद्धिह्रासयुतं स्यात्तथा सतोदभेदं तथा तनुकृष्णसिराभिस्ततं व्याप्तमाहतं च तदुदरमाध्मातदृतिरिव शब्दं करोति । अत्र च वातोदरे वायुः सरुक् सशब्दः सर्वतोगतिश्च सन् विचरेद्रमते ।

पित्तोदरे ज्वरो मूर्छा दाहस्तृट् कटुकास्यता ।
भ्रमोऽतीसारः पीतत्वं त्वगादावुदरं हरित् ॥ १६ ॥
पीतताम्रसिरानद्धं सस्वेदं सोष्म दह्यते ।
धूमायति मृदुस्पर्शं क्षिप्रपाकं प्रदूयते ॥ १७ ॥

पित्तोदरे ज्वरादयः स्युः । तथा त्वगादौ पीतत्वं भवति । जठरं हरिद्वर्णं तथा पीतताम्राभिः सिराभिर्नद्धं युक्तं सस्वेदं सोष्म च स्यात् । दह्यते तप्यते च । तथा धूमायति । तथा मृदुरकठिनः स्पर्शो यस्य तदेवम् । तथा क्षिप्रपाकं स्यात् । प्रदूयत उपतप्यते च ।

श्लेष्मोदरेऽङ्गसदनं स्वापश्वयथुगौरवम् ।
निद्रोत्क्लेशोऽरुचिः श्वासः कासः शुक्लत्वगादिता ।
उदरं स्तिमितं श्लक्ष्णं शुक्लराजीततं महत् ।
चिराभिवृद्धि कठिनं शीतस्पर्शं गुरु स्थिरम् ॥ १८ ॥

श्लेष्मोदरेऽङ्गसादादयः स्युः । तथोदरं स्तिमितं निश्चलं तथा श्लक्ष्णं कोमलस्पर्शं तथा शुक्लराजीभिस्ततं व्याप्तं तथा बृहत्तथा चिराभिवृद्धि कठिनं च तथा शीतस्पर्शं तथा गुरु स्थिरं न तु चलम् ।

अधुना सन्निपातोदरं लक्षयितुमाह—

त्रिदोषकोपनैस्तैस्तैः स्त्रीदत्तैश्च रजोमलैः ।
गरदूषीविषाद्यैश्च सरक्ताः सञ्चिता मलाः ॥ २० ॥
कोष्ठं प्राप्य विकुर्वाणाः शोषमूर्छाभ्रमान्वितम् ।
कुर्युस्त्रिलिङ्गमुदरं शीघ्रपाकं सुदारुणम् ॥ २१ ॥
बाधते तच्च सुतरां शीतवाताभ्रदर्शने ।





मला वातादयः सरक्ताः सञ्चितास्त्रिलिङ्गं त्रिदोषलक्षणं तथा शोषादियुक्तं तथा शीघ्रपाकमाशुजरणमुदरं कुर्युः । किम्भूतैः सञ्चिताः ? त्रिदोषकोपनैः सङ्कीर्णादिभोजनैस्तैस्तैः सर्वरोगनिदानोक्तैस्तथा स्त्रिया दत्तै रजोमलैः कार्मणापरपर्यायैर्वशीकरणैस्तथा गरेण दूषीविषाद्यैश्च आदिशब्देन विरुद्धाभ्यवहारादेर्ग्रहणम् । अनेनास्य हेतुविशेषकथनम् । कीदृशा दोषाः ? कोष्ठं प्राप्याश्रित्य विकुर्वाणा विक्रियां याताः । तच्च जठरं सुतरां शीतवाताभ्रदर्शने बाधते । इत्यनेनास्य विशेषलक्षणं कथितम् ।

प्लीहोदरादीन्यधुना लक्षयति—

**अत्याशितस्य सङ्क्षोभाद्यानयानादिचेष्टितैः ॥ २२ ॥**
**अतिव्यवायकर्माध्ववमनव्याधिकर्शनैः ।**
**वामपार्श्वाश्रितः प्लीहा च्युतः स्थानाद्विवर्धते ॥ २३ ॥**
**शोणितं वा रसादिभ्यो विवृद्धं तं विवर्धयेत् ।**
**सोऽष्ठीलेवाऽतिकठिनः प्राक् ततः कूर्मपृष्ठवत् ॥ २४ ॥**
**क्रमेण वर्धमानश्च कुक्षावुदरमावहेत् ।**
**श्वासकासपिपासाऽऽस्यवैरस्याध्मानरुग्ज्वरैः ॥ २० ॥**
**पाण्डुत्वच्छर्दिमूर्च्छातिदाहमोहैश्च संयुतम् ।**
**अरुणाभं विवर्णं वा नीलहारिद्रराजितम् ॥ २६ ॥**

अतितृप्तस्य नरस्य यानगमनादिचेष्टितैर्यः संक्षोभस्तस्मात्तथाऽतिव्यवायादिभिः कर्शनैः प्लीहा स्थानात् स्वाशयाच्च्युतो विवर्धते विशेषेण वृद्धिं गच्छति । किम्भूतः प्लीहा ? वामपार्श्वाश्रितः । अथवा रसादिभ्यो धातुभ्यः शोणितं विवृद्धं वृद्धिहेतुभिरधिकं कृत्वा वृद्धिं प्रापितं समनन्तरं तं प्लीहानं स्वस्थानच्युतमच्युतं वा विशेषेण वर्धयत्स्वप्रमाणादाधिक्यं जनयेत् । स प्लीहाऽष्ठीलेवाऽतिकठिनः प्राग्भूत्वा ततोऽनन्तरं कच्छपपृष्ठाकृतिः, क्रमेण शनैः शनैः, वर्धमान आधिक्यं गच्छन् कुक्षौ स्वीये स्थाने उदरं विदध्यात् । कीदृशम् ? श्वासादिभिर्दाहमोहपर्यन्तैः संयुतम्, तथाऽरुणाभमरुणवर्णमथवा विवर्णमनिश्चितवर्णं तथा नीलहारिद्रराजितम् । एवंविधा राजयो विद्यन्ते यस्मिंस्तदेवम् ।

**उदावर्तरुगानाहैर्मोहतृड्दहनज्वरैः ।**
**गौरवारुचिकाठिन्यैर्विद्यात्तत्र मलान् क्रमात् ॥ २७ ॥**

तत्र प्लीहोदरे पृथग्लक्षणलक्षितान्मलान् वातादीन् क्रमेणोदावर्तादिना विद्यात्, तत्रोदावर्तरुगानाहैर्वातं विद्यात्, मोहतृड्दहनज्वरैः पित्तं विद्यात् । गौरवारुचिकाठिन्यैः कफं विद्यात् ।

अथ यकृल्लक्षयति—

**प्लीहवद्दक्षिणात्पार्श्वात् कुर्याद्यकृदपि च्युतम् ।**



यथा पूर्वोक्तैर्हेतुभिः प्लीहा वामपार्श्वाच्च्युतो विवर्धते विवृद्धो भूत्वाऽनन्तरमुदरमावहेत्तद्वद्यकृदपि दक्षिणपार्श्वाच्च्युतं सद्वर्धते वृद्धं सदुदरं कुरुते । अथवा शोणितं स्वहेतुतो विवृद्धं यकृद्विवर्धयेत्। तच्च विवृद्धमुदरमावहेत्। इति प्लीहोदरयकृदुदरयोः सादृश्यम्।

अथ बद्धोदरं लक्षयति—

**पक्ष्मवालैः सहान्नेन भुक्तैर्बद्धायने गुदे ॥ २८ ॥**
**दुर्नामभिरुदावर्तैरन्यैर्वाऽन्त्रोपलेपिभिः।**
**वर्चःपित्तकफान् रुद्ध्वा करोति कुपितोऽनिलः ॥ २९ ॥**
**अपानो जठरं तेन स्युर्दाहज्वरतृड्क्षवाः।**
**कासश्वासोरुसदनं शिरोहृन्नाभिपायुरुक् ॥ ३० ॥**
**मलसङ्गोऽरुचिश्छर्दिरुदरं मूढमारुतम्।**
**स्थिरं नीलारुणसिराराजिनद्धमराजि वा ॥ ३१ ॥**
**नाभेरुपरि च प्रायो गोपुच्छाकृति जायते।**

पक्ष्माणि च वालाश्च पक्ष्मवालास्तैरन्नेन सह भुक्तैर्बद्धायने गुदे सत्यपानो वायुर्विगुणः कुपितो जठरं करोति। बद्धमयनं द्वारं पुरीषानिलवाहि यस्य तदेवंविधे गुदे। तथा दुर्नामभिर्गुदे बद्धायने तथोदावर्तैर्बद्धायने तथाऽन्यैर्वान्त्रोपलेपिभिरुपदेहिभिर्दध्योदनमाषोमादिभिर्गुदे बद्धायनेऽपानो जठरं करोति । किं कृत्वा? वर्चःपित्तकफान् रुद्ध्वाऽऽवृत्य। तद्बद्धोदरमुच्यते। तेन बद्धोदरेण दाहज्वरतृड्क्षवाः स्युः । तथा कासश्वासावूरुसदनं शिरोहृन्नाभिपायुरुक् स्यात् । तथा मलानां मूत्रपुरीषादीनां सङ्गोऽप्रवर्तनम्। अरुचिस्तथा छर्दिः स्यात्। तथोदरं मूढमारुतं भवेत्। मूढो बहिरनिःसरणरूपो मारुतो यस्मिंस्तदेवम्। मूढमारुतत्वस्य सामान्यलक्षणेनैव गृहीतत्वात्पुनर्ग्रहणमतिशयार्थम् । तथा स्थिरमचलम्। तथा नीलारुणसिराराजिभिर्नद्धं व्याप्तमथवाऽराजि स्यात्। तच्चोदरं प्रायो नाभेरुपरिष्टाद् गोपुच्छाकृति जायते। यथा यथोर्ध्वं तथातथा सूक्ष्ममित्यर्थः। अनेनास्य संस्थानमुक्तम्।

अधुना छिद्रोदरं लक्षयति—

**अस्थ्यादिशल्यैः सान्नैश्चेद् भुक्तैरत्यशनेन वा ॥ ३२ ॥**
**भिद्यते पच्यते वान्त्रं तच्छिद्रैश्च स्रवन्बहिः।**
**आम एव गुदादेति ततोऽल्पाल्पं स विड्रसः ॥ ३३ ॥**
**तुल्यः कुणपगन्धेन पिच्छिलः पीतलोहितः।**
**शेषश्चापूर्य जठरं जठरं घोरमावहेत् ॥ ३४ ॥**
**वर्धयेत्तदधो नाभेराशु चैति जलात्मताम्।**
**उद्रिक्तदोषरूपं च व्याप्तं च श्वासतृड्भ्रमैः ॥ ३५ ॥**
**छिद्रोदरमिदं प्राहुः परिस्रावीति चापरे।**



अस्थितृणकण्टकपाषाणधातुशृङ्गदार्वादिशल्यैः सान्नैः सहभोजनेन भुक्तैरथवाऽत्यशनेनातिमात्रभोजनेन यदन्त्रं भिद्यते सच्छिद्रं सम्पद्यतेऽथवा पच्यते पाकं याति तच्छिद्रैश्चान्त्रच्छिद्रैर्भेदोत्पन्नैः पाकतो वा बहिराम एवाऽऽमपरिपक्व एव स विड्रसः स्रवन्नल्पाल्प एव गुदादेत्यायाति। तुल्यः सदृशः कुणपगन्धेन शवगन्धेन तथा पिच्छिलः पीतलोहितश्च वर्णेन। शेषश्च रसो यो गुदान्नागच्छति स जठरमापूर्य पूरयित्वा घोरं कष्टतरं जठराख्यं व्याधिं कुर्यात्। तदुदरमधो नाभेर्वर्धयेद् वृद्धिं गच्छेत्। ' वधिश्चुरादिः '। तथा आशु शीघ्रमेव जलात्मतां जलोदरत्वमेति। उद्रिक्तदोषरूपं च—उद्रिक्तमधिकं दोषाणां वातपित्तकफानां रूपमाकृतिर्यस्य तदेवम्। तथा श्वासतृड्भ्रमैर्व्याप्तमिदमुदरं छिद्रोदरं प्राहुराचार्याः। अपरे त्वाचार्याः परिस्रावीत्याहुः।

अथोदकोदरदर्शनार्थमाह—

**प्रवृत्तस्नेहपानादेः सहसाऽऽमाम्बुपायिनः ॥ ३६ ॥**
**अत्यम्बुपानान्मन्दाग्नेः क्षीणस्यातिकृशस्य वा।**
**रुद्ध्वाऽम्बुमार्गाननिलः कफश्च जलमूर्छितः ॥ ३७ ॥**
**वर्धयेतां तदेवाम्बु तत्स्थानादुदराश्रितौ।**
**ततः स्यादुदरं तृष्णागुदस्रुतिरुजायुतम् ॥ ३८ ॥**
**कासश्वासारुचियुतं नानावर्णसिराततम्।**
**तोयपूर्णदृतिस्पर्शशब्दप्रक्षोभवेपथु ॥ ३९ ॥**
**दकोदरं महत्स्निग्धं स्थिरमावृतनाभि तत्।**

प्रवृत्तमारब्धं स्नेहपानादि येन स प्रवृत्तस्नेहपानादिः। आदिग्रहणाद्वमनादिकं कर्म पञ्चविधं गृह्यते। तस्य तथाभूतस्य सहसाऽऽमाम्बुपायिनः सहसैवापक्वपानीयपस्य तथा मन्दाग्नेर्नष्टवह्निस्तथा क्षीणस्य विशिष्टव्याध्याक्रान्ततया धात्वपचयतस्तथाऽतिकृशस्यानशनादिना क्षीणमेदोमांसस्यैवंविधस्य पुरुषस्यात्यम्बुपानादम्बुमार्गास्तोयवाहीनि स्रोतांसि रुद्ध्वाऽनिलः कफश्च। किम्भूतो जलमूर्छितस्तोयमिश्रितः। तावुभौ वातकफौ जलमूर्छितावुदराश्रितौ तदेवाम्बु तत्स्थानादुदकस्थानात् क्रमतो वर्धयेताम्। ततोऽनन्तरमुदरं तृष्णादियुतं स्यात्तथा कासादियुतं तथा नानावर्णाभिरनेकवर्णाभिः सिराभिस्ततं व्याप्तम्। तोयेत्यादि। शब्दस्य प्रक्षोभः संरम्भः। वेपथुः कम्पः। स्पर्शश्च शब्दप्रक्षोभश्च वेपथुश्च त एवम्। तोयेन पूर्णा तोयपूर्णा सा चासौ दृतिश्च तोयपूर्णदृतिस्तोयपूर्णदृतिवत् स्पर्शशब्दप्रक्षोभवेपथवो यस्मिन्नुदरे तत्तोयपूर्णदृतिस्पर्शशब्दप्रक्षोभवेपथु दकोदरं जलोदरं स्यात्। तच्च महदन्येभ्य उदरेभ्यो विस्तीर्णं तथा स्निग्धं तथा स्थिरमचलम्। आवृतनाभि तत्। आसमन्ताद् वृत्ता वर्तुला नाभिर्यस्य तदेवम्।

अधुना जठरेऽप्यवसाने यथा जलसम्भवः स्यात्तथाह–

**उपेक्षया च सर्वेषु दोषाः स्वस्थानतश्च्युताः ॥ ४० ॥**
**पाकाद् द्रवा द्रवीकुर्युः सन्धिस्रोतोमुखान्यपि ।**
**स्वेदश्च बाह्यस्रोतःसु विहतस्तिर्यगास्थितः ॥ ४१ ॥**
**तदेवोदकमाध्माप्य पिच्छां कुर्यात्तदा भवेत् ।**
**गुरूदरं स्थिरं वृत्तमाहतं च न शब्दवत् ॥ ४२ ॥**
**मृदु व्यपेतराजीकं नाभ्यां स्पृष्टं च सर्पति ।**
**तदनूदकजन्मास्मिन्कुक्षिवृद्धिस्ततोऽधिकम् ॥ ४३ ॥**
**सिरान्तर्धानमुदकजठरोक्तं च लक्षणम् ।**

उपेक्षयाऽचिकित्सनात्सर्वेषूदरेषु दोषा वातपित्तकफाः स्वस्थानत आत्मीयात् स्थानाच्च्युताः स्थानान्तरं गतास्तथा पाकाद्धेतोस्ते दोषा द्रवा अधिकं द्रवा द्रवीकुर्युः सन्धिस्रोतोमुखान्यपि । सन्धयश्च स्रोतोमुखानि च सन्धिस्रोतोमुखानि द्वाराणि । केवलं स्वयं दोषा द्रवत्वं गता यावत्सन्धिस्रोतोमुखान्यपि द्रवीकुर्युरित्यपिशब्दार्थः । स्वेदश्च बाह्यस्रोतःसु संवृतेषु विहतो निरुद्धस्तिर्यगास्थितस्तिर्यक् प्रवृत्तश्च तदेवोदकं प्राक् कुक्षौ वृद्धिं गतमाप्याय्य वृद्धिं गमयित्वा पिच्छां कुर्यात्तदा भवेद् गुरूदरं स्थिरमचलं वृत्तं वर्तुलं च तथाऽऽहतं च पाण्यादिना न शब्दवन्न शब्दयुक्तं तथा मृद्वकठिनं तथा व्यपेता राज्यो यस्माद्व्यपेतराजीकं स्यात् । नाभ्यां च स्पृष्टं सत् सर्पति प्रसारि सम्पद्यते । तदनु ततोऽनन्तरमस्मिन्नुदराख्ये व्याधावुदकजन्म जलसम्भवः । ततोऽनन्तरमधिकं कृत्वा कुक्षिवृद्धिर्भवेत्तथा सिरान्तर्धानं सिराणामदर्शनम् । किमेतदेव लक्षणम् ? नेत्याह । उदकजठरोक्तं च लक्षणम् । न केवलं यदधुनोक्तं लक्षणं यावज्जलोदरोक्तं चेति चशब्दस्यार्थः ।

इदानीमुदराणां सुखसाध्यत्वाभावात् कृच्छ्रसाध्यासाध्यत्वे वेदयति—

**वातपित्तकफप्लीहसन्निपातोदकोदरम् ॥ ४४ ॥**
**कृच्छ्रं यथोत्तरम्,**

वाताद्युद्भवमुदरं यथोत्तरं कृच्छ्रम् । तेन वातोदरात् पित्तोदरं यावदुदकोदरमत्यन्तं कृच्छ्रं कृच्छ्रसाध्यं स्यात् ।

**पक्षात्परं प्रायोऽपरे हतः ।**

पाठापेक्षया ये द्वे अपरे बद्धक्षतोदरे ते प्रायः पक्षात्परमनन्तरं हतो मारयतः । प्रायोग्रहणात्कदाचिन्नियतायुष्युत्पन्ने नैव मारयतः ।

**सर्वं च जातसलिलं रिष्टोक्तोपद्रवान्वितम् ॥ ४५ ॥**

किलोपेक्षया सर्वेषूदरेष्वन्ते सलिलसम्भव इत्युक्तम् । सर्वं च जठरं जातोदकं यद्वातादिसमुत्थं कृच्छ्रमुक्तं तदपि हन्त्येव । अत्राऽपि प्रायोग्रहणमनुवर्तनीयम् । कदाचिज्जातोदकमपि न मारयेदपि तु यापयत्येव । तथा रिष्टोक्तोपद्रवान्वितं

रिष्टाध्यायोक्तैरुपद्रवैर्युक्तं जठरं हन्ति । शूनाचं कुटिलोपस्थमित्यादिभिश्च तदपि हन्ति ;

जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतम् ।
बलिनस्तदजाताम्बु यत्नसाध्यं नवोत्थितम् ॥ ४६ ॥

जन्मनैव जात्यैव स्वभावेनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतं व्याधिस्वभावात् । प्रायोग्रहणात्किञ्चिदुदरं कृच्छ्रमेव भवति न कृच्छ्रतमम् । अत एवाह—'बलिन इत्यादि' । बलिनो बलवतस्तदुदरमुत्थितं नवमजातोदकं सयत्नसाध्यमिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां निदानस्थाने उदरनिदानं द्वादशोऽध्यायः ॥ १२ ॥

# त्रयोदशोऽध्यायः ।

उदरनिदानादनन्तरं पाण्डुशोफविसर्पनिदानमारभ्यते । यतो यथैवोदरं दोषसङ्घातजं तथैतेऽपीत्याह—

अथाऽतः पाण्डुरोगशोफविसर्पनिदानं व्याख्यास्यामः ।
पित्तप्रधानाः कुपिता यथोक्तैः कोपनैर्मलाः ।
तत्रानिलेन बलिना क्षिप्तं पित्तं हृदि स्थितम् ॥१ ॥
धमनीर्दश सम्प्राप्य व्याप्नुवत्सकलां तनुम् ।
श्लेष्मत्वग्रक्तमांसानि प्रदूष्यान्तरमाश्रितम् ॥ २ ॥
त्वङ्मांसयोस्तत्कुरुते त्वचि वर्णान् पृथग्विधान् ।
पाण्डुहारिद्रहरितान् पाण्डुत्वं तेषु चाधिकम् ॥ ३ ॥
यतोऽतः पाण्डुरित्युक्तः स रोगः,

यत्र मला वातादयः पित्तप्रधाना यथोक्तैः सर्वरोगनिदानाद्युक्तैः कोपनैः कुपिताः क्रुद्धाः पाण्डुरोगहेतवः । कथमित्याह । तत्रेत्यादि । तेषु तथाभूतेषु सत्सु वातेन बलिना बलवता क्षिप्तं पित्तं हृदि स्थितमनन्तरं तत्पित्तं धमनीर्दश हृदाश्रिताः सम्प्राप्याऽऽश्रित्य सकलां तनुं व्याप्नुवदश्नुवानम् । सकलशब्दोपादानं मूत्रपुरीषादीनामपि ग्रहणार्थम् । अत एवाख्यास्यति । कृष्णरूक्षारुणसिरानखविण्मूत्रनेत्रतेति । तथा श्लेष्मत्वग्रक्तमांसानि प्रदूष्य । किम्भूतं पित्तम् ? त्वङ्मासयोरन्तरं मध्यमाश्रितम् । तत्पित्तं त्वचि वर्णान् पृथग्विधान्नानाप्रकारान् पाण्डुहारिद्रहरितान् कुरुते । एतेषु वर्णेषु मध्ये यतो यस्मादतिशयेन पाण्डुत्वमधिकमतोऽस्मात्स रोगः पाण्डुरित्युक्तः संज्ञितः । ननु पित्तप्रधाना इति कथमुक्तम् ? यावता वायोर्बलीयस्त्वाद्वातप्रधाना इति वक्तुं युक्तं स्यात् । बलीयस्त्वं चानन्तरमेव प्रतिपादितं तत्राऽनिलेन बलिना क्षिप्तमिति ? असदेतत् । यतो नाऽत्र बलीयस्त्वाबलीयस्त्वकृते प्राधान्याप्राधान्ये विवक्षिते, किं तर्हि पाण्डुरोगकरणं प्रति कर्तृत्वाऽकर्तृत्वे ।

श्वेत रक्त स्तु पांडुर

पित्तस्य च पाण्डुरोगकरणं प्रति मुख्यं कर्तृत्वमतः पित्तप्रधाना इति युक्तमुक्तम् । ननु यदि त्रयो दोषाः पाण्डुरोगहेतवः ? कथं तर्हि वक्ष्यति—' स पञ्चधा पृथग्दोषैः समस्तैर्मृत्तिकादनादिति ' ? उच्यते—सर्वः पाण्डुरोगस्त्रिदोषज एव, किन्तु दोषहेतुविशेषैर्यो रूपभेदस्तेन पञ्चात्मकः शोफवदिति न किञ्चिदत्राऽयुक्तम् ।

तेन गौरवम् ।
धातूनां स्याच्च शैथिल्यमोजसश्च गुणक्षयः ॥ ४ ॥
ततोऽल्परक्तमेदस्को निःसारः स्याच्छ्लथेन्द्रियः ।
मृद्यमानैरिवाङ्गैर्ना द्रवता हृदयेन च ॥ ५ ॥
शूनाक्षिकूटः सदनः कोपनः ष्ठीवनोऽल्पवाक् ।
अन्नद्विट् शिशिरद्वेषी शीर्णरोमा हतानलः ॥ ६ ॥
सन्नसक्थो ज्वरी श्वासी कर्णक्ष्वेडी भ्रमी श्रमी ।

तेन पाण्डुरोगेण धातूनां रसरुधिरादीनां गौरवं शैथिल्यं च स्यात् । तथौजसो गुणक्षयो माधुर्यशैत्यादीनामोजोगुणानां विनाशः । तत एवौजोगुणक्षयात्पाण्ड्वामयी नरोऽल्परक्तमेदस्कः । अल्पे रक्तमेदसी यस्य स एवम् । तथा निःसारो निर्बलः स्यात् । तथा श्लथेन्द्रियः । शिथिलानीन्द्रियाणि वाक्पाणिपादपायूपस्थरूपाणि यस्यासौ श्लथेन्द्रियः । तथेन्द्रियशब्देन बुद्धीन्द्रियाणां चक्षुरादीन्यधिष्ठानान्युपलक्ष्यन्ते । ननु पित्तप्रधानाः कुपिता इति पित्तवृद्धिरुक्ता । पित्तवृद्ध्या च रक्तवृद्ध्या भवितव्यम् । तत्कथमुक्तमल्परक्ततेति ? अत्रोच्यते—दोषाणामन्योन्यदूषणाद् दूष्यस्य च दोषैर्दूषितत्वात्प्रसादपरम्परयाऽपुष्टौ सत्यां किट्टबाहुल्यात् पित्ताधिक्यं न रक्तस्य प्रसादात्मकस्येति पित्ताधिक्यमल्परक्तता चेत्युपपन्नम् । तथा अङ्गैरवयवैर्मृद्यमानैरिवासौ नर उपलक्षितः । तथा हृदयेन द्रवता च तथा शूनावक्षिकूटौ यस्य स एवम् । तथा सदनोऽङ्गसादवान् तथा कोपनादिकः स्यात् ।

स पञ्चधा पृथग्दोषैः समस्तैर्मृत्तिकादनात् ॥ ७ ॥

स पाण्डुरोगः पञ्चधा स्यात् । कथमित्याह । पृथग्दोषैः सन्निपातेन मृद्भक्षणाच्च । ननु मृत्तिकादनात् पाण्डुरोगः पृथग् न वाच्यः । पृथग्वातादिदोषजे पाण्डुरोगेऽन्तर्भूतत्वात् । मृदा हि वातादिप्रकोपो विधीयते तिक्तोषणादिभिरिव । वातादिप्रकोपश्च पाण्डुरोगकृत् । तस्मात्पृथङ्मृदो न युक्तो निर्देशः ? अत्र ब्रूमः—मृदोऽन्ये ये वातादिप्रकोपहेतवः पाण्डुरोगसम्पादने सम्भावनयोग्यास्ते पाण्डुरोगं सम्पाद्य हेतुस्वरूपसतया विनिवर्तन्ते । मृत्तिका तु तीक्ष्णैः संशोधनैर्विना पाण्डुरोगं यावत्काये बेभिद्यते, इत्ययं वातादिकोपहेतुभ्योऽन्येभ्यो मृदः पाण्डुरोगं प्रति विशेषः । तस्मात्पृथक् पृथक् पाण्डुरोगो वक्तुं न्याय्यः ।

प्राग्रूपमस्य हृदयस्पन्दनं रूक्षता त्वचि ।
अरुचिः पीतमूत्रत्वं स्वेदाभावोऽल्पवह्निता ॥ ८ ॥



**सादः श्रमः,**

अस्य पाण्डुरोगस्य हृदयस्पन्दनादि प्राग्रूपम्।

**अनिलात्तत्र गात्ररुक्तोदकम्पनम्।**
**कृष्णरूक्षारुणसिरानखविण्मूत्रनेत्रता ॥ ९ ॥**
**शोफानाहास्यवैरस्य विट्शोषाः पार्श्वमूर्धरुक्।**

तत्र तेषु पाण्डुरोगेषु मध्ये वातात्पाण्डुरोगे गात्ररुगादयः स्युः।

**पित्ताद्धरितपीताभसिरादित्वं ज्वरस्तमः ॥ १० ॥**
**तृट्स्वेदमूर्छाशीतेच्छा दौर्गन्ध्यं कटुवक्त्रता।**
**वर्चोभेदोऽम्लको दाहः,**

पित्ताद्धरितपीताभसिरादित्वं स्यात्।

**कफाच्छुक्लसिरादिता ॥ ११ ॥**
**तन्द्रा लवणवक्त्रत्वं रोमहर्षः स्वरक्षयः।**
**कासश्छर्दिश्च,**

कफाच्छुक्लसिरादिता च स्यात्।

**निचयान्मिश्रलिङ्गोऽतिदुःसहः ॥ १२ ॥**

निचयात्सन्निपातात् मिश्रलिङ्गः पाण्डुरोगः सोऽतिदुःसहो घोरतमः।

**मृत्कषायाऽनिलं पित्तमूषरा मधुरा कफम्।**
**दूषयित्वा रसादींश्च रौक्ष्याद् भुक्तं विरूक्ष्य च ॥ १३ ॥**
**स्रोतांस्यपक्वैवापूर्य कुर्याद् रुद्ध्वा च पूर्ववत्।**
**पाण्डुरोगं ततः शूननाभिपादास्यमेहनः ॥ १४ ॥**
**पुरीषं कृमिमन्मुञ्चेद्भिन्नं सासृक्कफं नरः।**

मृद्भक्षिता कषायरसा वातं दूषयित्वा पाण्डुरोगं कुर्यात्। ऊषरा सक्षारा मृत्तिका पित्तं दूषयित्वा पाण्डुरोगं कुर्यात्। मधुरा मृत्तिका कफं दूषयित्वा पाण्डुरोगं कुर्यात्। तथा रसादींश्च धातून् दूषयित्वा रौक्ष्याच्च हेतोर्भुक्तं विरूक्षयति। यतः स्वभावत एव मृत्तिका रूक्षा तस्माद् भुक्तं विरूक्षयति। स्रोतांसि चापूर्य रुद्ध्वाऽपक्वैव सती पाण्डुरोगं पूर्ववत् पित्तप्रधानाः कुपिता इत्यादिना न्यायेन कुर्यात्। मृत्तिकाया दुष्पाकत्वात्पाकाभावः। अथवा अशब्दोऽत्रेषदर्थे। अलोम्निका एलाकृतिर्यथा। तेन किञ्चित्पक्वेति गम्यते। ततस्तेन पाण्डुरोगेण शूननाभ्यादिकः सन् कृम्यादियुतं पुरीषं मुञ्चेत्।

अथ प्रतिज्ञावाक्येऽनुक्तामपि कामलां तुल्यहेत्वादिकत्वात्प्रदर्शयन्नाह—

**यः पाण्डुरोगी सेवेत पित्तलं तस्य कामलाम् ॥ १५ ॥**
**कोष्ठशाखाश्रयां पित्तं दग्ध्वाऽसृङ्मांसमावहेत्।**
**हारिद्रनेत्रमूत्रत्वङ्नखवक्त्रशकृत्तया ॥ १६ ॥**



**दाहाऽविपाकतृष्णावान् भेकाभो दुर्बलेन्द्रियः ।**

यो नरः पाण्डुरोगी सन् पित्तलं मरिचकादिद्रव्यमत्यर्थं सेवेतापयुङ्क्ते तस्य पाण्डुरोगिणः पित्तं कर्तृ कामलामावहेत् । कीदृशीम् ? कोष्ठशाखाश्रयाम् । कोष्ठो महास्रोतः । शाखा रक्तादयस्त्वक् चेत्येतदुक्तमाश्रयो यस्यास्ताम् । किं कृत्वा ? रक्तं मांसं च दग्ध्वा । कथम् ? हारिद्रनेत्रमूत्रत्वङ्नखवक्त्रशकृत्तया । तदा च पुरुषो दाहादिमान्मण्डूकच्छायो दुर्बलेन्द्रियश्च स्यात् । दुर्बलानि स्वविषयेष्वशक्तानीन्द्रियाणि यस्य स एवम् ।

किं पाण्डुरोगिण एव पित्तलान्यासेवमानस्य कामला भवेदुतापाण्डुरोगिणोऽपीत्याह—

**भवेत्पित्तोल्बणस्याऽसौ पाण्डुरोगादृतेऽपि च ॥ १७ ॥**

पाण्डुरोगमन्तरेणापि पित्ताधिकस्य नरस्य पित्तलान्यासेवमानस्यासौ कोष्ठशाखाश्रया कामला स्यान्न केवलं पाण्डुरोगिणः ।

**उपेक्षया च शोफाढ्या सा कृच्छ्रा कुम्भकामला ।**

उपेक्षया चिकित्सां विना सैव कामला यदा शोफाढ्या श्वयथुबाहुल्या स्यात्तदा कुम्भकामलेत्युच्यते । सा कृच्छ्रसाध्या ।

हलीमकं लक्षयति—

**हरितश्यावपीतत्वं पाण्डुरोगे यदा भवेत् ॥ १८ ॥**
**वातपित्ताद्भ्रमस्तृष्णा स्त्रीष्वहर्षो मृदुर्ज्वरः ।**
**तन्द्रा बलानलभ्रंशो लोढरं तं हलीमकम् ॥ १९ ॥**
**अलसं चेति शंसन्ति,**

पाण्डुरोगे सति यदा हरितश्यावपीतता भ्रमादयश्च वातपित्तात्स्युः, अतश्च तं हलीमकं शंसन्ति । मुनय इति शेषः । तं च हलीमकं लोढरं तथा अलसं चाचक्षते ।

**तेषां पूर्वमुपद्रवाः ।**
**शोफप्रधानाः कथिताः स एवाऽतो निगद्यते ॥ २० ॥**

तेषां पाण्डुरोगप्रकाराणां पूर्वमुपद्रवा यतः शोफप्रधानाः कथिताः अतोऽस्माद्धेतोः पाण्डुरोगनिदानादनन्तरं शोफ एव भण्यते न विसर्पः । शोफः, प्रधानः प्रथमो येषां त एवं कथिताः । क ? इहैव । यथोक्तम्—'शूनाक्षिकूट' इत्यादि तथा 'शूननाभिपादास्यमेहन' इति ।

**पित्तरक्तकफान्वायुर्दुष्टो दुष्टान् बहिःसिराः ।**
**नीत्वा रुद्धगतिस्तैर्हि कुर्यात्त्वङ्मांससंश्रयम् ॥ २१ ॥**
**उत्सेधं संहतं शोफं तमाहुर्निचयादतः ।**

सर्वम्,

बहिर्भूताः सिरा बहिः सिरा बाह्याः सिराः। वायुः पित्तरक्तकफान् कर्मभूतान्, बहिःसिराः कर्मभूता(श्च)नीत्वोत्सेधं कुर्यात् । 'नयतेर्द्विकर्मकत्वात्पित्तादयो बहिःसिराश्च कर्म । यथा अजां नयति ग्राममिति' । तेनायमर्थोऽवतिष्ठते बहिःसिराः पित्तादीन्नीत्वेति । किम्भूतो वायुः ? दुष्टः सन् कोपनैः कुपितः । किम्भूतमुत्सेधम् ? त्वक् च मांसं च त्वङ्मांसे ते संश्रय आश्रयो यस्य तमेवम् । तैर्हीति हिशब्दोऽवधारणे । तैरेव बहिःसिराः प्राप्तैः पित्तरक्तकफै रुद्धगतिः । अत एव संहतं समन्ताद्धतं निश्चलमिव सम्पन्नमुत्सेधम् । यतश्चैवं वातपित्तकफैः शोफः सञ्जायते तस्मात्सर्वं शोफं निचयाद्दोषत्रयादाहुः ।

नन्वेवं सतीदं विरुध्यते दोषैः पृथग्द्वयैः सर्वैरित्यत आह—

**हेतुविशेषैस्तु रूपभेदान्नवात्मकम् ॥ २२ ॥**
**दोषैः पृथग्द्वयैः सर्वैरभिघाताद्विषादपि ।**
**द्विधा वा निजमागन्तुं सर्वाङ्गैकाङ्गजं च तम् ॥ २३ ॥**
**पृथून्नतग्रथितताविशेषैश्च त्रिधा विदुः ।**

तुशब्दो विशेषार्थे । यद्यपि सर्वस्त्रिदोषजः शोफस्तथाऽपि हेतुविशेषैर्यो रूपभेदस्तस्मान्नवात्मकं शोफमाहुः । तथा हि । योऽयं सन्निपातः शोफहेतुरेष कदाचित्समं कृत्वा कुप्यति कदाचिद्विषमं कृत्वैकदोषद्विदोषत्रिदोषस्वरूपतया । एवं च हेतुविशेषैया लक्षणभेदस्तस्मान्नवप्रकारत्वं शोफस्य न्याय्यमेव । लक्षणभेदश्चैषां स्पष्ट एव । तथा चाभिघाताद्धेतोश्च यथावदन्यल्लक्षणं विषाद्धेतोरन्यल्लक्षणं तद्वत् पृथग्वातजैश्च यथावदन्यद् द्वन्द्वजे चान्यत्सन्निपातजे चान्यदिति । एवं लक्षणविशेषान्नवात्मकमाहुः । उपलक्षणं चेदम् । चिकित्साविशेषादपि हि नवात्मक एव शोफः । अथवा निजागन्तुभेदेन द्विधा श्वयथुमाहुः । तथा तं शोफं सर्वाङ्गजं सर्वशरीरजमेकाङ्गजमेकावयवजं चेति पुनर्द्विःप्रकारमाहुः । पृथुश्चोन्नतश्च ग्रथितश्च तेषां भावः पृथून्नतग्रथितता तया विशेषास्तैस्त्रिधा त्रिप्रकारं शोफं विदुः । 'विदुरिति विद ज्ञान इत्यस्मादुसादेशः' । पृथुत्वेन विस्तीर्णकृतत्वेन विशेषेण तथोन्नतत्वेन विशेषेण तथा ग्रथिततविशेषेण स्वरूपत्वेनेति योज्यम् ।

**सामान्यहेतुः शोफानां दोषजानां विशेषतः ॥ २४ ॥**

वक्ष्यमाणो गुर्वम्लस्निग्धादिको वर्गः श्वयथूनां निजानामागन्तूनां च सामान्यहेतुरुत्पत्तौ कारणम् । दोषजानां श्वयथूनां पुनरतिशयेन हेतुर्न तथाऽऽगन्तूनामिति विशेषशब्देन द्योतयति ।

**व्याधिकर्मोपवासादिक्षीणस्य भजतो द्रुतम् ।**
**अतिमात्रमथान्यस्य गुर्वम्लस्निग्धशीतलम् ॥ २५ ॥**
**लवणक्षारतीक्ष्णोष्णं शाकाम्बु स्वप्नजागरम् ।**



स्वप्नग्राम्यमांसवल्लूरमजीर्णश्रममैथुनम् ॥ २६ ॥
पदातेर्मार्गगमनं यानेन क्षोभिणाऽपि वा ।
श्वासकासातिसारार्शोजठरप्रदरज्वराः ॥ २७ ॥
विषूच्यलसकच्छर्दिगर्भवीसर्पपाण्डुताः ।
अन्ये च मिथ्योपक्रान्तास्तैर्दोषा वक्षसि स्थिताः ॥ २८ ॥
ऊर्ध्वं शोफमधो बस्तौ मध्ये कुर्वन्ति मध्यगाः ।
सर्वाङ्गगाः सर्वगतः प्रत्यङ्गेषु तदाश्रयाः ॥ २९ ॥

व्याधिकर्मोपवासादिभिः क्षीणस्य, व्याधिना ज्वरादिना क्षीणस्य, तथा कर्मणा पञ्चविधेन वमनविरेचननिरूहानुवासननस्याख्येन तथोपवासेन । आदिग्रहणादन्येन च कर्मादिना क्षीणस्य द्रुतं कृत्वा सहसैव गुर्वादिकं भजतः । अथेति समुच्चये । व्याध्यादिक्षीणलक्षणेभ्यः सकाशादन्यस्य स्वस्थादेरप्यतिमात्रं मात्रामतिक्रम्य भजतो दोषा वक्षसि स्थिता ऊर्ध्वं शोफं कुर्वन्ति प्रकृतत्वाद्वक्षस ऊर्ध्वम् । वस्तौ स्थिता अधः शोफं कुर्वन्ति । मध्ये स्थिता दोषा मध्ये शोफं कुर्वन्ति । ग्राम्याणां चटककुक्कुटादीनां मांसं ग्राम्यमांसम् । वल्लूरं शुष्कमांसम् । स्वप्नोऽत्राहःस्वप्नो जागरश्च रात्रिजागरो बोध्यः । यानेन तुरगादिना क्षोभिणा शरीरसंरम्भजनकेन । तथा श्वासादयः पाण्डुपर्यन्ता रोगाः प्राधान्येन तथाऽन्येऽपि श्वासकासादिव्यतिरिक्ता रोगा मिथ्योपक्रान्ता मिथ्योपचरिता अयथाशास्त्रमुपक्रान्ताः शोफहेतवः । एतैरपि दोषा वक्षसि स्थिता ऊर्ध्वं शोफं कुर्वन्ति । बस्तौ स्थिता अधो मध्यगा मध्ये सर्वाङ्गगाः सर्वगतं प्रत्यङ्गेषु तदाश्रया दोषाः शोफं कुर्वन्ति ।

तत्पूर्वरूपं दवथुः सिरायामोऽङ्गगौरवम् ।

तस्य श्वयथोः पूर्वरूपं तत्पूर्वरूपम् । दवथुश्चक्षुरादिषु यस्तीव्र ऊष्मा स भण्यते । यदुक्तम्—'दवथुश्चक्षुरादिभ्यस्तीव्रमूष्मप्रवर्तनमिति' । तथा सिरायामो यत्र प्रदेशो श्वयथुरुद्बुभूषुस्तत्र सिराणां दैर्ध्यमिव । तथाङ्गगौरवं स्यात् ।

वाताच्छोफश्चलो रूक्षः खररोमारुणासितः ॥ ३० ॥
सङ्कोचस्पन्दहर्षार्तितोदभेदप्रसुप्तिमान् ।
क्षिप्रोत्थानशमः शीघ्रमुन्नमेत्पीडितस्तनुः ॥ ३१ ॥
स्निग्धोष्णमर्दनैः शाम्येद्रात्रावल्पो दिवा महान् ।
त्वक् च सर्षपलिप्तेव तस्मिंश्चिमिचिमायते ॥ ३२ ॥

वाताच्छोफश्चलादिलक्षणः ।

पीतरक्तासिताभासः पित्तादाताम्ररोमकृत् ।
शीघ्रानुसारप्रशमो मध्ये प्राग्जायते तनुः ॥ ३३ ॥
सतृड्दाहज्वरस्वेददवक्लेदमदभ्रमः ।
शीताभिलाषी विड्भेदी गन्धी स्पर्शासहो मृदुः ॥ ३४ ॥



पित्ताच्छोफः पीतरक्तासिताभासादिलक्षणः। स च मध्ये मध्यप्रदेशे प्राक् पूर्वं जायते। प्राग्ग्रहणं पश्चात्सकलेऽपि देहदेशे स्यादिति द्योतयति.।

कण्डूमान् पाण्डुरोमत्वक्कठिनः शीतलो गुरुः।
स्निग्धः श्लक्ष्णः स्थिरः स्त्यानो निद्राच्छर्द्यग्निसादकृत्॥ ३५॥
आक्रान्तो नोन्नमेत्कृच्छ्रशमजन्मा निशाबलः।
स्रवेन्नासृक् चिरात्पिच्छां कुशशस्त्रादिविक्षतः॥ ३६॥
स्पर्शोष्णकाङ्क्षी च कफात्,

कफाच्छोफः कण्डूयुतादिलक्षणः स्यात्तथाऽऽक्रान्तः पीडितः सन् वातिक इव नोन्नमेत्। तथा कृच्छ्रेण शमजन्मनी यस्य स एवम्। तथा निशाबलो रात्रावधिक इत्यर्थः। तथा कुशशस्त्रादिभिर्विक्षतः स शोफो न रक्तं स्रवेत्, किं तर्हि चिरेण पिच्छां लसीकापरपर्यायां स्रवेत्। तथा स्पर्शोष्णाभिलाषी च स्यात्।

यथास्वं द्वन्द्वजास्त्रयः।
सङ्कराद्धेतुलिङ्गानाम्,

हेतवश्च लिङ्गानि च तेषां सङ्करात् सङ्कीर्णत्वेन यथास्वं द्वन्द्वजास्त्रयः शोफाः स्युरिति शेषः।

निचयान्निचयात्मकः॥ ३७॥

निचयात्मको दोषत्रयजः शोफो निचयाद्धेतुलिङ्गनिचयात्स्यात्।

अभिघातेन शस्त्रादिच्छेदभेदक्षतादिभिः।
हिमानिलोदध्यनिलैर्भल्लातकपिकच्छुजैः॥ ३८॥
रसैः शूकैश्च संस्पर्शाच्छ्वयथुः स्याद्विसर्पवान्।
भृशोष्मा लोहिताभासः प्रायशः पित्तलक्षणः॥ ३९॥

तथा शस्त्रादिच्छेदभेदक्षतादिभिर्यः शोफः सोऽभिघातेन वेद्य इति शेषः। तथा हिमं च हिमानिलश्चोदध्यनिलश्च तैस्तथा रसैः शूकैश्च भल्लातकपिच्छुजैः संस्पर्शाच्छ्वयथुर्विसर्पवान् भवेत्। स च भृशोष्मा लोहिताभासश्च बाहुल्येन च पित्तलक्षणः स्यात्। पित्तशोफस्य लक्षणं पित्तशोफलक्षणमिव लक्षणं यस्य स पित्तलक्षणः। 'सप्तम्युपमानपूर्वस्येति बहुव्रीहिरुत्तरपदलोपश्च'।

विषजः सविषप्राणिपरिसर्पणमूत्रणात्।
दंष्ट्रादन्तनखापातादविषप्राणिनामपि॥ ४०॥
विण्मूत्रशुक्रोपहतमलवद्वस्त्रसङ्करात्।
विषवृक्षानिलस्पर्शाद्गरयोगावचूर्णनात्॥ ४१॥
मृदुश्चलोऽवलम्बी च शीघ्रो दाहरुजाकरः।

विषजः शोफः सविषाणां प्राणिनामङ्गे परिसर्पणाद्गमनात्तथा तेषामेव मूत्रणात्तथा दंष्ट्रादन्तनखानामापातादविषप्राणिनामपि दंष्ट्रादिपातात् शोफः

स्यात् अपिशब्दान्न केवलं सविषप्राणिनां तथा विण्मूत्रशुक्रैरुपहतं तत्स्पर्शदूषितमप्रशस्तम्। विण्मूत्रशुक्रोपहतं च तन्मलवच्च विण्मूत्रशुक्रोपहतमलवत्तथाविधं च तद्वस्त्रं च तस्य सङ्करः संस्पर्शस्तस्मादपि शोफः स्यात्। तथा विषवृक्षाणामनिलस्तत्संस्पर्शात्तथा गरयोगस्यावचूर्णनमवध्वंसनं तस्माच्च मृद्वादिगुणयुक्तः श्वयथुः स्यात्।

**नवोऽनुपद्रवः शोफः साध्योऽसाध्यः पुरेरितः॥ ४२॥**

नवोऽचिरोत्पन्नस्तथाऽनुपद्रव उपद्रवरहितः शोफः साध्यः। असाध्यः पुरा विकृतिविज्ञानीयेऽभिहितः। यथोक्तम्—"अनेकोपद्रवयुतः पादाभ्यां प्रसृतो नरम्। नारीं शोफो मुखाद्धन्ति कुक्षिगुह्यादुभावपीति"।

श्वयथुंवद्दोषैर्दूष्यैश्च यतो विसर्पो भवत्यतस्तन्निदानं प्रक्रम्यते—

**स्याद्विसर्पोऽभिघातान्तैर्दोषैर्दूष्यैश्च शोफवत्।**

विसर्पः सर्व एव शोफवद्दोषैः पृथग्वातपित्तकफैर्द्वयैः समस्तैस्तथा अभिघातादेव मभिघातोत्पन्नैर्दोषैः शोफवद्विसर्पसम्भवः। दूष्यैरपि शोफवत्। एवं पित्तरक्तफान् वायुरित्यादिरपि ग्रन्थोऽत्र योज्यः।

**त्र्यधिष्ठानं च तं प्राहुर्बाह्यान्तरुभयाश्रयात्॥ ४३॥**
**यथोत्तरं च दुःसाध्याः,**

तं च विसर्पं त्र्यधिष्ठानं प्राहुरात्रेयादय इति शेषः। बाह्यान्तरुभयाश्रयात्। पूर्वार्जितकर्मवशात्कदाचिद्बाह्याश्रयो विसर्पो जायते। बाह्य आश्रयो यस्य स तथा। एवं कदाचिदन्तराश्रयः। कदाचिदुभयाश्रयः। ते च बाह्यान्तरुभयाश्रया विसर्पा यथोत्तरं दुसाध्या दुःखेन साध्यन्त इति दुःसाध्याः।

**तत्र दोषा यथायथम्।**
**प्रकोपनैः प्रकुपिता विशेषेण विदाहिभिः॥ ४४॥**
**देहे शीघ्रं विसर्पन्ति तेऽन्तरन्तःस्थिता बहिः।**
**बहिस्था द्वितये द्विस्थाः,**

तस्मिन् विसर्पे यथायथं प्रकोपनैस्तिक्तोषणादिभिः प्रकुपिता विशेषेण पुनर्विदाहिभिरत्यर्थं कृत्वा प्रकुपिता देहे शीघ्रमाश्वेव विसर्पन्ति। तेऽन्तःस्थिता अन्तर्विसर्पन्ति। बहिस्था दोषा बहिर्विसर्पन्ति। द्वितये द्वयेऽन्तर्बहीरूपे द्विस्था उभयस्थाः सन्तो विसर्पन्ति।

**विद्यात्तत्रान्तराश्रयम्॥ ४५॥**
**मर्मोपतापात्सम्मोहादयनानां विघट्टनात्।**
**तृष्णातियोगाद्वेगानां विषमं च प्रवर्तनात्॥ ४६॥**
**आशु चाग्निबलभ्रंशादतो बाह्यं विपर्ययात्।**

तत्र तेषु विसर्पेषु मध्येऽन्तराश्रयं विसर्पं मर्मोपतापादिभिर्विद्यात्। मर्मणां

हृदयादीनामुपतापो दुःखं तस्मात्। तथा सम्मोहान्मूर्छोद्भवात्। अयमानां कर्ण-नासादीनां विघट्टनाद्विशेषेण चलनादतिशयेन परिस्फुरणादित्यर्थः। तथा तृष्णायां अतियोगात् तथा वेगानां नानारूपाणां विषमं कृत्वा विच्छिद्य विच्छिद्य कृत्वा प्रवर्तनात्। आशु च शीघ्रमेवाग्निबलयोर्भ्रंशाद्विनाशात्। अतो लक्षणैर्विपर्ययस्मा-द्बाह्यं विसर्पं विद्यात्।

**तत्र वातात्परीसर्पो वातज्वरसमव्यथः॥ ४७॥**
**शोफस्फुरणनिस्तोदभेदाऽऽयामार्तिहर्षवान्।**

तेषु विसर्पेषु मध्ये वाताद्यो विसर्पः स वातज्वरतुल्यव्यथः स्याच्छोफादियुतश्च।

**पित्ताद् द्रुतगतिः पित्तज्वरलिङ्गोऽतिलोहितः॥ ४८॥**

पित्ताद्विसर्पो द्रुतगतिः शीघ्रव्यापी तथा पित्तज्वरलिङ्गोऽतिलोहितश्च स्यात्। पित्तज्वरलिङ्गानीव लिङ्गानि यस्येति 'सप्तम्युपमानपूर्वस्येत्यादिना बहुव्रीहि-रुत्तरपदलोपश्च'।

**कफात्कण्डूयुतः स्निग्धः कफज्वरसमानरुक्।**

कफाद्विसर्पः कण्डूमान् स्निग्धः कफज्वरतुल्यरुक्। वातादिज्वरलक्षणं यथो-क्तम्—' तत्र तत्राङ्गे तास्ताः स्युर्वेदनाश्चला इत्यादि '।

**स्वदोषलिङ्गैश्चीयन्ते सर्वे स्फोटैरुपेक्षिताः॥ ४९॥**
**ते पक्वभिन्नाः स्वं स्वं च बिभ्रति व्रणलक्षणम्।**

सर्वे च विसर्पा उपेक्षिता उपक्रमरहिता स्फोटैश्चीयन्ते व्याप्यन्ते। किम्भूतैः? स्वदोषलिङ्गैर्यथायथं स्वदोषलक्षणैः। तथा पक्वभिन्नाः स्वस्वमात्मीयममात्मीयं दोषं व्रणलक्षणं बिभ्रति धारयन्ति। पूर्वं पक्वाः पश्चाद्भिन्नाः पक्वभिन्नाः। 'पूर्व-कालेत्यादिना समासः'। तत्र मारुताच्छ्यावकृष्णारुणेत्यादिग्रन्थनिर्दिष्टं व्रण-लक्षणम्। पित्तेन क्षिप्ररुज इत्यादिग्रन्थनिर्दिष्टम्। एवं कफादिलक्षणमपि बोध्यम्।

अथ द्वन्द्वजं लक्षयति—

**वातपित्ताज्ज्वरच्छर्दिमूर्छातीसारतृड्भ्रमैः॥ ५०॥**
**अस्थिभेदाग्निसदनतमकारोचकैर्युतः।**
**करोति सर्वमङ्गं च दीप्ताङ्गारावकीर्णवत्॥ ५१॥**
**यं यं देशं विसर्पश्च विसर्पति भवेत्स सः।**
**शान्ताङ्गारासितो नीलो रक्तो वाशु च चीयते॥ ५२॥**
**अग्निदग्ध इव स्फोटैः शीघ्रगत्वाद् द्रुतं च सः।**
**मर्मानुसारी वीसर्पः स्याद्वातोऽतिबलस्ततः॥ ५३॥**
**व्यथेताङ्गं हरेत्संज्ञां निद्रां च श्वासमीरयेत्।**
**हिध्मां च स गतोऽवस्थामीदृशीं लभते न ना॥ ५४॥**
**क्वचिच्छर्मारतिग्रस्तो भूमिशय्यासनादिषु।**



चेष्टमानस्ततः क्लिष्टो मनोदेहश्रमोद्भवाम् ॥ ५५ ॥
दुष्प्रबोधोऽश्नुते निद्रां सोऽग्निवीसर्प उच्यते ।

वातपित्ताद्विसर्पो ज्वरादिभिर्युतः सकलमङ्गं च दीप्ताङ्गारावकीर्णवज्ज्वलिताङ्गारव्याप्तसंदंशं करोति । यं यं च शरीरदेशं विसर्पो विसर्पति प्रसरति, स स शान्ताङ्गारासितो नीलो रक्तो वा भवेत् । तथा स विसर्पो द्रागेवाग्निदग्ध इव स्फोटैश्चीयते व्याप्यते । स च विसर्पः शीघ्रगत्वात्तत्स्वभाववशान्मर्मानुसारी द्रुतं त्वरितं कृत्वा स्यात् । तत एव च वातोऽतिबलो बलीयान् अङ्गं शरीरं व्यथेत पीडयेत् । संज्ञां संविदं हरेन्नाशयेत् । निद्रां च हरेत् । श्वासमीरयेत् कुर्यात् तथा हिध्मां च । स विसर्पी पुरुष ईदृशीमवस्थां गतः प्राप्तश्चेतोऽनवस्थालक्षणयाऽरत्या ग्रस्तोऽभिभूतो न क्वचिद् भूमिशय्यासनादिषु शर्म सुखं लभते । 'अरतिग्रस्त इति हेतौ प्रथमा' । अरतिग्रस्तत्वादित्यर्थः । एवं क्वचिदपि सुखालाभाद् भूम्यादिषु चेष्टमानः परिलुठंस्ततः क्लिष्टो मनसा कायेन च मनोदेहश्रमोद्भवां तदुत्थां निद्रामश्नुते । किम्भूतः ? दुष्प्रबोधः । दुःखेन प्रबोधो निद्रापगमो यस्य स एवम् । एष चाग्न्याख्यो विसर्प उच्यते ।

कफेन रुद्धः पवनो भित्त्वा तं बहुधा कफम् ॥ ५६ ॥
रक्तं वा वृद्धरक्तस्य त्वक्सिरास्नावमांसगम् ।
दूषयित्वा च दीर्घाणुवृत्तस्थूलखरात्मनाम् ॥ ५७ ॥
ग्रन्थीनां कुरुते मालां रक्तानां तीव्ररुग्ज्वराम् ।
श्वासकासातिसारास्यशोषहिध्मावमिभ्रमैः ॥ ५८ ॥
मोहवैवर्ण्यमूर्छाङ्गभङ्गाग्निसदनैर्युताम् ।
इत्ययं ग्रन्थिवीसर्पः कफमारुतकोपजः ॥ ५९ ॥

कफेन पवनो रुद्धस्तमेव कफं बहुधा भित्वा ग्रन्थीनां मालां कुरुते । रक्तं च वृद्धरक्तस्य नरस्य दूषयित्वा गन्थीनां मालां कुरुते । किम्भूतं रक्तम् ? त्वक्सिरास्नावमांसगम् । किम्भूतानां ग्रन्थीनाम् ? दीर्घाणुवृत्तस्थूलखरस्वभावानां तथा रक्तवर्णानाम् । किम्भूतां मालाम् ? तीव्ररुग्ज्वराम् । तीव्रौ रुग्ज्वरौ यस्यास्तां तथा श्वासादिभिर्युताम् । इत्ययमनन्तरोक्तो ग्रन्थिवीसर्प उच्यते । कफवातकोपजश्चायं वेद्यः ।

कफपित्ताज्ज्वरः स्तम्भो निद्रातन्द्राशिरोरुजः ।
अङ्गावसादविक्षेपप्रलापारोचकभ्रमाः ॥ ६० ॥
मूर्छाग्निहानिर्भेदोऽस्थ्नां पिपासेन्द्रियगौरवम् ।
आमोपवेशनं लेपः स्रोतसां स च सर्पति ॥ ६१ ॥
प्रायेणाऽऽमाशये गृह्णन्नेकदेशं न चातिरुक् ।
पिटकैरवकीर्णोऽतिपीतलोहितपाण्डुरैः ॥ ६२ ॥



**मेचकाभोऽसितस्निग्धो मलिनः शोफवान् गुरुः ।**
**गम्भीरपाकः प्राज्योष्मा स्पृष्टः क्लिन्नोऽवदीर्यते ॥ ६३ ॥**
**पङ्कवच्छीर्णमांसश्च स्पष्टस्नायुसिरागणः ।**
**शवगन्धिश्च वीसर्पं कर्दमाख्यमुशन्ति तम् ॥ ६४ ॥**

कफपित्तात्कर्दमाख्यो जायते । तत्र च ज्वरादयः स्युः । स च विसर्पः प्रायेण बाहुल्येनामाशये नाभिस्तनान्तरमध्य एकदेशं गृह्णन्नाक्रामन्ननन्तरं सर्पति व्याप्नोति । न चातिरुक् स्यात् । तथा पिटकैरवकीर्णो व्याप्तः स्यात् । मेचको मयूरकण्ठसदृशो वर्णः । तं तादृशं विसर्पं कर्दमाख्यं कर्दमसंज्ञमुशन्ति मुनय इति शेषः । अस्मिन् मांसकोथत्वेन वेदनातिशयराहित्यम् ।

**सर्वजो लक्षणैः सर्वैः सर्वधात्वतिसर्पणः ।**

सर्वैस्त्रिभिर्दोषैर्जातः सर्वजः सन्निपातोद्भवो वीसर्पः सर्वैर्लक्षणैरुपलक्षितः स च सर्वान् धातूनतिशयेन सर्पति सर्वधात्वतिसर्पणः स्यात् ।

**बाह्यहेतोः क्षतात्क्रुद्धः सरक्तं पित्तमीरयन् ॥ ६५ ॥**
**विसर्पं मारुतः कुर्यात् कुलत्थसदृशैश्चितम् ।**
**स्फोटैः शोफज्वररुजादाहाढ्यं श्यावलोहितम् ॥ ६६ ॥**

मारुतो वातः क्षताद्बाह्यकारणात्क्रुद्धः सन् विसर्पं कुर्यात् । किं कुर्वन् ? पित्तं सह रक्तेन प्रेरयन् । तथा स्फोटैः पिटकैश्चितं व्याप्तम् । किम्भूतैः ? कुलत्थसदृशैः । तथा शोफादिभिराढ्यमतिशयेन युतम् । तथा श्यावलोहितं वर्णेन ।

**पृथग्दोषैस्त्रयः साध्या द्वन्द्वजाश्चानुपद्रवाः ।**
**असाध्यौ क्षतसर्वोत्थौ सर्वे चाक्रान्तमर्मकाः ॥ ६७ ॥**
**शीर्णस्नायुसिरामांसाः प्रक्लिन्नाः शवगन्धयः ।**

पृथग्दोषैर्वातपित्तकफैः केवलैस्त्रयो विसर्पाः साधयितुं शक्याः । द्वन्द्वजाश्चानुपद्रवाः कासवैवर्ण्यज्वरादिभिरुपद्रवै रहितास्त्रयः साध्याः । क्षतसर्वोत्थौ द्वौ विसर्पावसाध्यौ । तथा स्वभावत्वात्सर्वे विसर्पाश्चाक्रान्तमर्मकाश्चासाध्याः । तथा शीर्णानि स्नायुसिरामांसानि यैस्तेऽप्यसाध्याः । तथा प्रकर्षेणातिशयेन क्लिन्नास्तथा शवगन्धयः कुणपगन्धतुल्यास्तेऽप्यसाध्याः । ' शवस्येव गन्धो येषामित्युपमानाच्चेति गन्धस्येदादेशः ' ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां निदानस्थाने पाण्डुकामलाशोफविसर्पनिदानं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

# चतुर्दशोऽध्यायः ।

विसर्पनिदानादनन्तरं तुल्यहेत्वादिकत्वात्कुष्ठनिदानमारभ्यते—

अथाऽतः कुष्ठश्वित्रक्रिमिनिदानं व्याख्यास्यामः।

मिथ्याहारविहारेण विशेषेण विरोधिना।
साधुनिन्दावधाऽन्यस्वहरणाद्यैश्च सेवितैः॥ १॥
पाप्मभिः कर्मभिः सद्यः प्राक्तनैः प्रेरिता मलाः।
सिराः प्रपद्य तिर्यग्गास्त्वग्लसीकासृगामिषम्॥ २॥
दूषयन्ति श्लथीकृत्य निश्चरन्तस्ततो बहिः।
त्वचः कुर्वन्ति वैवर्ण्यं दुष्टाः कुष्ठमुशन्ति तत्॥ ३॥

मिथ्याहारादिना तथा साधुनिन्दावधादिभिः पाप्मभिः कर्मभिः सद्यः सेवितरनुष्ठितैः प्राक्तनैर्वाऽन्यजन्माचरितैः। सेवितग्रहणेन सातत्यानुष्ठानं द्योतयति। तेन कदाचित्करणत्वमेषां न कुष्ठहेतुत्वमिति गम्यते। तैस्तथाभूतैः कर्मभिर्मिथ्याहारादिना च प्रेरिता दुष्टा मला वातपित्तकफाः सिरास्तिर्यग्गामिनीः प्रपद्याश्रित्य त्वग्लसीकासृगामिषं दूषयन्ति। तदेव च त्वगादिकं शिथिलीकृत्य ततोऽनन्तरं बहिर्निश्चरन्तो बाह्यदेशे प्रसरन्तस्त्वचो वैवर्ण्यं कुर्वन्ति तत्कुष्ठमुशन्ति मुनय इति शेषः।

कुतोऽस्य रोगस्य कुष्ठमिति संज्ञेत्याह—

कालेनोपेक्षितं यस्मात्सर्वं कुष्णाति तद्वपुः।
प्रपद्य धातून्व्याप्याऽन्तः सर्वान् सङ्क्लेद्य चावहेत्॥ ४॥
सस्वेदक्लेदसङ्कोथान् कृमीन्सूक्ष्मान्सुदारुणान्।
रोमत्वक्स्नायुधमनीतरुणास्थीनि यैः क्रमात्॥ ५॥
भक्षयेद्,

यतोऽस्माद्धेतोरुपेक्षितमनुपक्रान्तं सत् कालेन सर्वं वपुः शरीरं कुष्णाति तस्मात्तत्कुष्ठमित्युच्यते। तच्च कुष्ठं धातून्सर्वान्प्रपद्य प्राप्यानन्तरमन्तर्व्याप्य प्रकृतत्वात्तेषामेवान्तरं व्याप्य तथा सर्वांस्तानेव धातून् सङ्क्लेद्य सङ्क्लेदयित्वा कृमीनावहेत्कुर्यात्। किम्भूतान्? स्वेदादिभिर्युतान्। तथा सुदारुणान् दुश्चिकित्स्यान्। यैः कृमिभिस्तत्कुष्ठं लोमादीन् भक्षयेत्।

श्वित्रमस्माच्च कुष्ठं बाह्यमुदाहृतम्।

श्वित्रस्येदृग् रूपता न विद्यते या कुष्ठस्योक्ता। अस्माच्च कारणाच्छ्वित्रं कुष्ठं बाह्यमुदाहृतम्। कुष्ठं बाह्यं त्वग्गतमात्रमेवोक्तमित्यर्थः।

कुष्ठानि सप्तधा दोषैः पृथङ्मिश्रैः समागतैः॥ ६॥

कुष्ठानि सप्तधा सप्तप्रकाराणि। कथमित्याह। पृथग्वातपित्तकफैः। तैरेव च मिश्रैर्वातपित्ताभ्यां वातकफाभ्यां पित्तकफाभ्याम्। तैरेव दोषैः समागतैः सन्निपतितैः।

नन्वेवं सत्येकदोषजं द्विदोषजं कुष्ठं न सर्वं त्रिदोषजं स्यादित्याशङ्क्याह—

सर्वेष्वपि त्रिदोषेषु व्यपदेशोऽधिकत्वतः।





सर्वेष्वपि कुष्ठेषु त्रिदोषेषु सन्निपातजेष्वप्यधिकत्वेन व्यपदेशः। सन्निपातस्य समविषमात्मकत्वात्।

अत आह—

वातेन कुष्ठं कापालं, पित्तादौदुम्बरं, कफात्-॥ ७ ॥
मण्डलाख्यं विचर्ची च, ऋक्षाख्यं वातपित्तजम्, ।
चर्मैककुष्ठं किटिभसिध्माऽलसविपादिकाः ॥ ८ ॥
वातश्लेष्मोद्भवाः, श्लेष्मपित्ताद्दद्रुशतारुषी ।
पुण्डरीकं सविस्फोटं पामा चर्मदलं तथा, ॥
सर्वैः स्यात्काकणं, पूर्वं त्रिकं दद्रु सकाकणम् ।
पुण्डरीकर्क्षजिह्वे च महाकुष्ठानि सप्त तु ॥ १० ॥

वातोल्बणेन सन्निपातेन कापालं नाम कुष्ठं भवति। पित्तात्पित्ताधिकात्सन्निपातादौदुम्बरं नाम कुष्ठं जायते। कफात् कफाधिकात्सन्निपातान्मण्डलाख्यं कुष्ठं जायते। तथा विचर्ची च कफादेवेति चार्थः। ऋक्षाख्यं कुष्ठं वातपित्तजम्। ऋक्षजिह्व प्रकाशखरा आकृतिर्यस्य ऋक्षजिह्वस्य तथैवम्। वातपित्तोल्बणात्सन्निपाताज्जातम्। एवमग्रेऽपि योज्यम्। चर्मैककुष्ठं किटिभसिध्मालसविपादिका वातश्लेष्मोद्भवाः। श्लेष्मपित्ताद्दद्रुशतारुषी द्वे कुष्ठे। न केवलं दद्रु शतारुश्च श्लेष्मपित्तात्। यावत्पुण्डरीकं तथा विस्फोटस्तथा पामा तथा चर्मदलं जायते। सर्वैस्त्रिभिरेव समैर्दोषैः काकणं नाम कुष्ठमुत्पद्यते। एवमेतान्यष्टादश कुष्ठानि भवन्ति। पूर्वं त्रिकं कापालोदुम्बरमण्डलाख्यं तथा दद्रुः काकणं पुण्डरीकमृक्षजिह्वं चेति महाकुष्ठानि सप्त स्युः।

अतिश्लक्ष्णखरस्पर्शखेदाऽस्वेदविवर्णताः ।
दाहः कण्डूस्त्वचि स्वापस्तोदः कोठोन्नतिः श्रमः ॥ ११ ॥
व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः ।
रूढानामपि रूक्षत्वं निमित्तेऽल्पेऽपि कोपनम् ॥ १२ ॥
रोमहर्षोऽसृजः कार्ष्ण्यं कुष्ठलक्षणमग्रजम् ।

अतिश्लक्ष्णादिकं कुष्ठलक्षणमग्रजं प्राग्रूपमित्यर्थः।

अधुनैतेषां लक्षणान्याह—

कृष्णारुणकपालाभं रूक्षं सुप्तं खरं तनु ॥ १३ ॥
विस्तृताऽसमपर्यन्तं दूषितैर्लोमभिश्चितम् ।
तोदाढ्यमल्पकण्डूकं कापालं शीघ्रसर्पि च ॥ १४ ॥

कृष्णारुणकपालाभमित्यादिकं कापालस्य लक्षणम्।

पक्वोदुम्बरताम्रत्वग्रोमगौरसिराचितम् ।
बहलं बहुलक्लेदं रक्तं दाहरुजाधिकम् ॥ १५ ॥



आहुस्तथानावदरणकृमि विद्यादुदुम्बरम्।
पक्वोदुम्बरताम्रेत्यादिकमुदुम्बरस्य लक्षणम्।

स्थिरं स्त्यानं गुरु स्निग्धं श्वेतरक्तमनाशुगम्॥ १६॥
अन्योन्यसक्तमुत्सन्नं बहुकण्डूस्रुतिक्रिमि।
श्लक्ष्णपीताभपर्यन्तं मण्डलं परिमण्डलम्॥ १७॥

स्थिरं स्त्यानमित्यादिकं मण्डलस्य लक्षणम्।

सकण्डूपिटिका श्यावा लसीकाढ्या विचर्चिका।

सकण्डूपिटिकेत्यादिकं विचर्चिकाया लक्षणम्।

परुषं तनु रक्तान्तमन्तःश्यावं समुन्नतम्॥ १८॥
सतोददाहरुक्क्लेदं कर्कशैः पिटिकैश्चितम्।
ऋक्षजिह्वाकृति प्रोक्तमृक्षजिह्वं बहुक्रिमि॥ १६॥

परुषमित्यादिकं ऋक्षजिह्वस्य लक्षणम्।

हस्तिचर्मखरस्पर्शं चर्म,

हस्तिचर्मखरस्पर्शं चर्माख्यं कुष्ठम्।

एकाख्यं महाश्रयम्।
अस्वेदं मत्स्यशकलसन्निभम्,

एकसंज्ञं कुष्ठं महाश्रयं विस्तीर्णाशयम्। तथा अस्वेदं स्वेदरहितम्। तथा मत्स्यशकलसंनिभं मत्स्यत्वक्खण्डसदृशम्। सुश्रुते त्वेककुष्ठस्यैवं लक्षणमभ्यधायि— "कृत्स्नो देहो यस्य रक्तोऽरुणो वा तदेकाख्यं कुष्ठमाहुः सकुष्ठमिति"। खरनादेऽप्युक्तम्—"महदस्वेदनं मत्स्यशकलाकारमेकजमिति"।

किटिभं पुनः॥ २०॥
रूक्षं किणखरस्पर्शं कण्डूमत्परुषाऽसितम्।

किटिभं तु रूक्षं किणखरस्पर्शं कण्डूमत्परुषाऽसितम्।

सिध्मं रूक्षं बहिःस्निग्धमन्तर्घृष्टं रजः किरेत्॥ २१॥
श्लक्ष्णस्पर्शं तनु श्वेतताम्रं दौग्धिकपुष्पवत्।
प्रायेण चोर्ध्वकाये स्यात्,

सिध्मं नाम कुष्ठं बही रूक्षम्। अन्तः स्निग्धम्। घृष्टं सद्रजः किरेत्क्षिपेत्। तथा श्लक्ष्णस्पर्शम्। तथा तनु। वर्णेन श्वेतताम्रं दौग्धिकपुष्पवदलाबुकुसुमाभम्। तच्च प्रायेण बाहुल्येनोर्ध्वकाये स्यात्। खरनादेऽप्युक्तम्—"अलाबुपुष्पवत्सिध्मं घृष्टं यच्चोद्वमेद्रज इति"।

गण्डैः कण्डूयुतैश्चितम्॥ २२॥
रक्तैरलसकम्,

अलसकं नाम कुष्ठं गण्डै रक्तवर्णैः कण्डूयुतैश्च व्याप्तं भवेत्।



पाणिपाददार्यो विपादिकाः ।
तीव्रार्त्यो मन्दकण्ड्वश्च सरागपिटिकाचिताः ॥ २३ ॥

विपादिकाः पाणिपाददार्यः स्युः। तथा तीव्रार्त्योऽत्यन्तपीडया युताः। तथा मन्दकण्ड्वोऽल्पखर्जूकाः। तथा सरागपिटिकाचिताश्च। 'पाणिपादौ दारयन्तीति कर्मण्यणन्तान्ङीप्'।

दीर्घप्रताना दूर्वावदतसीकुसुमच्छविः।
उत्सन्नमण्डला दद्रूः कण्डूमत्यनुषङ्गिणी ॥ २४ ॥

दूर्वावद्दीर्घप्रताना दद्रूः। तथाऽतसीपुष्पाभा। तथोत्सन्नमण्डला च। तथा कण्डूमती। तथाऽनुषङ्गिणी प्रसक्तानुप्रसक्तया संश्लेषवती शरीरमनुधावतीति।

स्थूलमूलं सदाहार्ति रक्तश्यावं बहुव्रणम्।
शतारुः क्लेदजन्त्वाढ्यं प्रायशः पर्वजन्म च ॥ २५ ॥

शतारुर्नाम कुष्ठं स्थूलमूलादिलक्षणं यावत् प्रायशः पर्वजन्म चेति।

रक्तान्तमन्तरा पाण्डु कण्डूदाहरुजान्वितम्।
सोत्सेधमाचितं रक्तैः पद्मपत्रमिवांशुभिः ॥ २६ ॥
घनभूरिलसीकासृक्प्रायमाशु विभेदि च।
पुण्डरीकम्,

पुण्डरीकं नाम कुष्ठं रक्तपर्यन्तम्। तथाऽन्तरा मध्ये पाण्डु। तथा कण्डूदाहरुजायुतं तथोन्नतियुक्तम्। तथा रक्तैरंशुभि सूक्ष्मरेखाभिरिवाचितं व्याप्तं पद्मपत्रमिव। तथा घनभूरिलसीकासृक्प्रायम् आशु च विभेदि।

तनुत्वग्भिश्चितं स्फोटैः सितारुणैः ॥ २७ ॥
विस्फोटम्,

विस्फोटं नाम कुष्ठं तनुत्वग्भिः स्फोटैश्चितं व्याप्तम्। किम्भूतैः? सितारुणैः श्वेतलोहितैः।

पिटिकाः पामा कण्डूक्लेदरुजाधिकाः।
सूक्ष्माः श्यावारुणा बह्व्यः प्रायःस्फिक्पाणिकूर्परे ॥ २८ ॥

पिटिकाः कण्डूक्लेदरुजाधिकाः पामेत्युच्यते। किम्भूताः? सूक्ष्माः श्यावारुणाः बह्व्यश्च प्रायो बाहुल्येन सा च पामा स्फिजोः पाण्योः कूर्परयोश्च स्यात्।

सस्फोटमस्पर्शसहं कण्डूषातोददाहवत्।
रक्तं दलच्चर्मदलम्,

चर्मदलं नाम कुष्ठं स्फोटवत् तथा स्पर्शाक्षमम्। तथा कण्ड्वादियुतम्। तथा रक्तं वर्णेन। तथा दलत्स्फुटत्।

काकणं तीव्रदाहरुक् ॥ २९ ॥
पूर्वं रक्तं च कृष्णं च काकणन्तीफलोपमम्।



कुष्ठलिङ्गैर्युतं सर्वैर्नैकवर्णं ततो भवेत् ॥ ३० ॥

काकणं नाम कुष्ठं तीव्रदाहरुक् । तथा पूर्वं प्रथमं रक्तं तथा कृष्णं काकणन्तीफलोपमं गुञ्जाफलसदृशम् । ततोऽनन्तरं सर्वैः कुष्ठलिङ्गैर्युतम् । नैकवर्णमपि तु श्वेतपीतादिवर्णमपि स्यादित्यर्थः । सुश्रुते तु मण्डलशतारुर्विपादिकाऽलसकचर्मदलविस्फोटाख्यानि नोदितानि । स्थूलारुष्कमहाकुष्ठपरीसर्पविसर्परकसारुणाख्यानि तत्रोक्तानि । एषां च तल्लक्षणम् । "यत्र स्थूलमूलान्यरूंषि जायन्ते सन्धिषून्नाणि तत् स्थूलारुष्कं कुष्ठम् । उत्पद्यन्ते सर्वदेहे महाख्ये त्वक्सङ्कोचस्वापतोदाङ्गसादाः । यस्मिन् दीर्घाः स्फोटिकाः स्राववत्यः संसर्पेयुस्तं परीसर्पमाहुः । तुल्यः सर्पेणो विसर्पेण शीघ्रं त्वग्रक्तादीन् व्याप्य स स्याद्विसर्पः । कृत्स्ने देहे स्फोटिकाः स्रावहीनाः कण्डूप्रायाः राकसास्ताः प्रदिष्टाः । अरुणानि तनूनि विसर्पीणि तापयुतान्यरुणानीति" । तदेतेषु कुष्ठभेदेषु यथा नामविपर्ययस्तथा लक्षणविपर्ययोऽपि, किन्त्वेतेऽपि कुष्ठभेदा दृश्यन्त एवेत्येतदपि लक्षणमादरणीयमेवेति मन्यामहे ।

कुष्ठेषु दोषजेषु सत्स्विदं वाताधिकं कुष्ठमिदं पित्ताधिकं कुष्ठमिदं कफाधिकं कुष्ठमिति कथं ज्ञातव्यमित्याह—

**दोषभेदीयविहितैरादिशेल्लिङ्गकर्मभिः ।**
**कुष्ठेषु दोषोल्बणताम् ,**

कुष्ठेषु दोषोल्बणतां दोषाधिक्यं दोषभेदीयविहितैर्यथायथं लिङ्गकर्मभिरादिशेत् । लिङ्गानि च तानि कर्माणि च लिङ्गकर्माणि यथा वायोः स्रंसादीनि, पित्तस्य रागदाहादीनि, श्लेष्मणः स्नेहकाठिन्यादीनि, यथायथमात्मीयैरेव कर्मभिर्यतस्ते लिङ्ग्यन्ते लक्ष्यन्ते ततस्तेषां दोषाणां कर्माण्येव लिङ्गान्युच्यन्ते । अत एव च स्रंसादीनि कर्माणि दोषाणामुक्त्वेदमनन्तरमुवाच—"इत्यशेषामयव्यापि यदुक्तं दोषलक्षणम् । दर्शनाद्यैरवहितस्तत्सम्यगुपलक्षयेदिति" ।

**सर्वदोषोल्बणं त्यजेत् ॥ ३१ ॥**
**रिष्टोक्तं यच्च यच्चाऽस्थिमज्जशुक्रसमाश्रयम् ।**

सर्वदोषोल्बणं सन्निपातजं कुष्ठं त्यजेन्न चिकित्सेत् । रिष्टोक्तमिति । यच्च विकृतिविज्ञानीये कथितं कुष्ठं विशीर्यमाणाङ्गमित्यादि तच्च नोपक्रमेत् । यच्च कुष्ठमस्थिमज्जशुक्रसमाश्रयं तच्च त्यजेत् ।

**याप्यं मेदोगतम् ,**

मेदोगतं कुष्ठं याप्यं पथ्यादिना यापयितुं शक्यम् ।

**कृच्छ्रं पित्तद्वन्द्वास्रमांसगम् ॥ ३२ ॥**

पित्तस्य द्वन्द्वं पित्तद्वन्द्वम् । पित्तद्वन्द्वगं तथा रक्तगं मांसगं च कुष्ठं कृच्छ्रं कृच्छ्रसाध्यम् ।

**अकृच्छ्रं कफवाताढ्यं त्वक्स्थमेकमलं च यत् ।**



कफवाताढ्यमकृच्छ्रं सुखसाध्यम्। तथा त्वक्स्थं तथा एकदोषाधिकं च यत्कुष्ठं तच्च सुखसाध्यम्।

**तत्र त्वचि स्थिते कुष्ठे तोदवैवर्ण्यरूक्षताः, ॥ ३३ ॥**
**स्वेदस्वापश्वयथवः शोणिते, पिशिते पुनः—।**
**पाणिपादाश्रिताः स्फोटाः क्लेदः सन्धिषु चाधिकम्, ।**
**कौण्यं गतिक्षयोऽङ्गानां दलनं स्याच्च मेदसि, ।**
**नासाभङ्गोऽस्थिमज्जस्थे नेत्ररागः स्वरक्षयः ॥ ३५ ॥**
**क्षते च कृमयः, शुक्रे स्वदारापत्यबाधनम्।**

तत्र तेषु कुष्ठेषु मध्ये त्वचि प्राप्ते कुष्ठे तोदादयः स्युः। रक्तस्थे कुष्ठे स्वेदाद्याः स्युः। मांसस्थे कुष्ठे पाणिपादश्रिताः स्फोटाः स्युः, सन्धिषु चातिशयेन क्लेदो भवति। मेदसि स्थिते कुष्ठे कौण्यं कुणिता तथा गतिक्षयः, अङ्गानां दलनं छेदनमिव स्यात्। अस्थिमज्जस्थे कुष्ठे नासाया घ्राणस्य भङ्गस्तथा नेत्रयो रागः स्वरस्य च क्षयः स्यात् क्षते च कृमयः स्युः। शुक्रस्थे कुष्ठे दाराणामपत्यानां च बाधनमुपद्रवैः स्वेदादिभिः पीडनं स्यात्।

**यथापूर्वं च सर्वाणि स्युर्लिङ्गान्यसृगादिषु ॥ ३६ ॥**

असृगादिषु धातुषु कुष्ठाक्रान्तदेहानां नराणां यानि लिङ्गान्युक्तानि तानि यथापूर्वं स्युः। यथा स्वेदादीनि रक्तस्थे कथितानि तानि पाण्याद्याश्रिताः स्फोटादयश्च मांसस्थे स्युः। एवं मेदःप्रभृतिषु योज्यम्। एवं च स्वेदस्वापादीनि सर्वाण्यपि शुक्रस्थे कुष्ठे दाराणामपत्यानां च स्युरिति यथापूर्वं शब्दस्यार्थः।

कुष्ठनिदानादनन्तरं श्वित्रस्योच्यते, कुष्ठश्वित्रयोरेककारणत्वादत एवाह—

**कुष्ठैकसम्भवं श्वित्रं किलासं दारुणं च तत्।**
**निर्दिष्टमपरिस्राविं त्रिधातूद्भवसंश्रयम् ॥ ३७ ॥**

कुष्ठानामेकः समानः सम्भवो यस्य तच्छ्वित्रं कुष्ठैकसम्भवं किलासं दारुणं च तन्निर्दिष्टं न केवलं श्वित्रमिति। तच्चापरिस्रावि न कुष्ठवत् स्रवति। उद्भवो जन्म संश्रय आश्रयः। उद्भवश्च संश्रयश्चोद्भवसंश्रयौ। धातुशब्देनोभयं परिगृह्यते। वातादयस्त्रयो दोषास्तथा रक्तादयस्त्रयो धातवः। धातवश्च धातवश्च धातवः। त्रयो धातवो यथाक्रममुद्भवसंश्रयौ यस्य तत्त्रिधातूद्भवसंश्रयम्।

**वाताद् रूक्षारुणं पित्तात्ताम्रं कमलपत्रवत्।**
**सदाहं रोमविध्वंसि कफाच्छ्वेतं घनं गुरु ॥ ३८ ॥**
**सकण्डु च क्रमाद्रक्तमांसमेदःसु चादिशेत्।**

वाताद्रूक्षारुणं श्वित्रं स्यात्। पित्तात्कमलपत्रमिव ताम्रं वर्णेन तथा सदाहम्। तथा रोमविध्वंसि रोमशातनस्वभावम्। कफाच्छ्वेतम्। तथा घनम्। तथा गुरु अङ्गेनानुभूयते। तथा सह कण्ड्वा वर्तते इति सकण्डु। क्रमाद्यथाक्रमं वाता-

युद्भवं श्वित्रं रक्तमांसमेदःसु चादिशेत् । तत्र वातोद्भवं श्वित्रं रक्ताश्रयम् । पित्तोद्भवं मांसाश्रयम् । मेदोधात्वाश्रयं कफोद्भवमिति क्रमशब्दस्यार्थः ।

**वर्णेनैवेदृगुभयं कृच्छ्रं तच्चोत्तरोत्तरम् ॥ ३९ ॥**

एवेति चार्थे । उभयं दोषोद्भवं रक्ताद्याश्रयं श्वित्रं वर्णेन चेदृगरुणं ताम्रं श्वेतं यथाक्रमम् । न पुनर्वाताद्युद्भवत्वादन्यवर्णं रक्तादिसंश्रयत्वादन्यवर्णमित्यर्थः । तच्च श्वित्रं वातोद्भवं रक्तसंश्रयं चोत्तरोत्तरं कृच्छ्रसाध्यमादिशेदिति प्रकृतम् । रक्ताश्रयाद्वातजात्कृच्छ्रान्मांसाश्रयं पित्तजं कृच्छ्रतरं ततोऽपि मेदःसंश्रितं कफजं कृच्छ्रतममिति ।

अधुना साध्यासाध्यविभागार्थमाह—

**अशुक्लरोमाऽबहुलमसंसृष्टं मिथो नवम् ।**
**अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा ॥ ४० ॥**
**गुह्यपाणितलौष्ठेषु जातमप्यचिरन्तनम् ।**

अशुक्लरोम यच्छ्वित्रं तथा मिथः परस्परमसंसृष्टममिलितं तथा नवमवर्षातिक्रान्तं तथाऽनग्निदग्धजमग्निदग्धजं यन्न भवति तच्च साध्यम् । वर्ज्यमतोऽन्यथा शुक्लरोम श्वित्रं बहुलं तथा परस्परसंसृष्टं तथा चिरकालोत्पन्नमग्निदग्धजं च तच्चासाध्यम् । गुह्यपाणितलौष्ठेषु जातमचिरन्तनमप्यचिन्त्यप्रभावत्वेन वर्ज्यम् ।

**स्पर्शैकाहारशय्यादिसेवनात्प्रायशो गदाः ॥ ४१ ॥**
**सर्वे सञ्चारिणो नेत्रत्वग्विकारा विशेषतः ।**

सर्वे रोगाः प्रायशो बाहुल्येन सञ्चारिणः सञ्चरणशीलाः । कुतः ? एके च त आहारशय्यादयश्चैकाहारशय्यादयः । आदिशब्देनाऽऽसनादीनां ग्रहणम् । स्पर्शः संश्लेषः । स्पर्शश्च एकाहारशय्यादयश्च तेषां सेवनं भजनं तस्मात् । नेत्रे च त्वक् च नेत्रत्वक् तत्र विकारा गदास्ते विशेषेण सञ्चारिणः ।

अधुना क्रमप्राप्तान् कृमीनधिकृत्याह—

**कृमयस्तु द्विधा प्रोक्ता बाह्याभ्यन्तरभेदतः ॥ ४२ ॥**

कृमयो द्विधा प्रोक्ताः । मुनिभिरिति शेषः । तुरवधारणे । द्विधैवेत्यर्थः । कथम् ? इत्याह । बाह्याभ्यन्तरभेदतः । एके बाह्या ये केशवस्त्रादिजा यूकालिक्षादयः । अन्य आन्तरा यथाऽन्त्रादादयः ।

जन्मभेदेन चतुःप्रकारा इत्याह—

**बहिर्मलकफासृग्विड्जन्मभेदाच्चतुर्विधाः ।**
**नामतो विंशतिविधाः,**

बहिर्मलजन्मानः केशवस्त्रेभ्यः शरीरबाह्येभ्य उत्पन्नत्वात्तथा कफजन्मानो रक्तजन्मानो विड्जन्मानश्चेति चतुर्धा । विट् पुरीषम् । नामतो नामभेदात्कृमयो विंशतिप्रकाराः ।

बाह्यास्तत्राऽसृगुद्भवाः ॥ ४३ ॥
तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः ।
बहुपादाश्च सूक्ष्माश्च यूका लिक्षाश्च नामतः ॥ ४४ ॥
द्विधा ते कोठपिटिका कण्डूगण्डान् प्रकुर्वते ।

तत्र तेषु बाह्याभ्यन्तरेषु कृमिषु मध्येऽसृगुद्भवा असृजा रक्तेन बाह्यमलरूपेणोत्पन्ना बाह्याः । ते च तिलानामिव प्रमाणसंस्थानवर्णा येषां त एवम् । केशा वस्त्रं वाश्रयो येषां त एवम् । तथा बहुपादाः सूक्ष्माश्च । नामतो नाम्ना यूका लिक्षाश्चेति द्विधा । ते च कोठादीन् विदधति ।

कुष्ठैकहेतवोऽन्तर्जाः श्लेष्मजास्तेषु चाधिकम् ॥ ४५ ॥
मधुरान्नगुडक्षीरदधिसक्तुनवोदनैः ।

अन्तर्जा आन्तराः कृमयः कुष्ठैकहेतवः कुष्ठेन सहैकस्तुल्यो हेतुर्निदानं मिथ्याहारविरुद्धभोजनादिकं येषां त एवम् । तेष्वेवान्तर्जेषु कृमिषु मध्ये श्लेष्मजा अधिकमतिशयेन मधुरान्नादिभिः स्युः ।

रक्तजानां निदानविशेषो वक्ष्यमाण इति पुरीषोत्थाँस्तावदाह—

शकृज्जा बहुविड्धान्यपर्णशाकोलकादिभिः ॥ ४६ ॥

शकृज्जाः शकृदुद्भूतास्ते कुष्ठैकहेतुसामान्येऽप्यधिकं बहुविड्धान्यैर्यवमाषादिभिर्बहुविड्भिरेव पर्णशाकैः पालक्यादिभिस्तथोलकादिभिः । उलकः-स्वेदपर्यायः । अपरे तु उलुकादिभिरिति जगुः । उलुकं हरितावस्थं शिम्बीधान्यमिति व्याचक्षते ।

कफादामाशये जाता वृद्धाः सर्पन्ति सर्वतः ।
पृथुब्रध्ननिभाः केचित् केचिद्गण्डूपदोपमाः ॥ ४७ ॥
रूढधान्याङ्कुराकारास्तनुदीर्घास्तथाऽणवः ।
श्वेतास्ताम्रावभासाश्च, नामतः सप्तधा तु ते ॥ ४८ ॥
अन्त्रादा उदरावेष्टा हृदयादा महागुहाः ।
चुरवो दर्भकुसुमाः सुगन्धास्ते च कुर्वते ॥ ४९ ॥
हृल्लासमास्यस्रवणमविपाकमरोचकम् ।
मूर्छाछर्दिज्वरानाहकार्श्यक्षवथुपीनसान् ॥ ५० ॥

कफादामाशये जाता न पक्वाशये । तत्र हि पृथगध्येष्यते 'पक्वाशये पुरीषोत्थाः' इति । ते च वृद्धाः सन्तः सर्वतः सर्वस्मिन् उदरे सर्पन्ति प्रसरन्ति । 'सर्वत इत्याद्यादित्वात्तसिः' । पृथुब्रध्ननिभा इत्यादिना संस्थानकथनम् । श्वेता इत्यादिना वर्णकथनम् । नामतो नाम्ना च सप्तधा ते सप्तप्रकाराः । तुश्चाथ । तान्येव सप्त नामान्याह । अन्त्रादा इत्यादिना अन्त्राण्यदन्तीत्यन्त्रादाः, इत्यादीन्यर्थानुगतानि नामानि । कानिचिद्यादृच्छिकानि चुरव इत्यादीनि । ते च कफजाः

कृमयो हृल्लासादिकं कुर्वन्ति।

अधुना रक्तजानाह—

रक्तवाहिसिरोत्थाना रक्तजा जन्तवोऽणवः।
अपादा वृत्तताम्राश्च सौक्ष्म्यात्केचिददर्शनाः॥ ५१॥
केशादा लोमविध्वंसा लोमद्वीपा उदुम्बराः।
षट् ते कुष्ठैककर्माणः सहसौरसमातरः॥ ५२॥

रक्तजाः कृमयो रक्तवाहिसिरोत्थानाः स्युः। तथा अपादा वृत्तास्ताम्रवर्णाश्च। सौक्ष्म्यात्सूक्ष्मत्वात्कारणात्केचिददर्शनाः प्रत्यक्षप्रमाणासमधिगम्याः कार्येणैवानुमीयन्ते। तेषां नामान्याह। केशादा लोमविध्वंसा लोमद्वीपा उदुम्बरा इति। तथा सहसौरसमातरः। सह सौरसमातृभ्यां वर्तन्त इति सहसौरसमातरः। सौरसमातृसंज्ञं नामद्वयम्। एवं षडेते रक्तजाः कृमयः। अन्ये त्वेवं पठन्ति। सहजा रसमातर इति। सह शरीरेण जायन्त इति सहजाः। रसो माता जननी येषां तत्प्रभवत्वात्ते रसमातर इति। कुष्ठेन सहैकं कर्म रोमहर्षकण्डूतोदादिकं केशलोमध्वंसादिकं त्वक्सिरास्नायुमांसतरुणास्थिभक्षणं वा येषां त एवम्।

पक्वाशये पुरीषोत्था जायन्तेऽधोविसर्पिणः।
वृद्धास्ते स्युर्भवेयुश्च ते यदाऽऽमाशयोन्मुखाः॥ ५३॥
तदास्योद्गारनिःश्वासा विड्गन्धानुविधायिनः।
पृथुवृत्ततनुस्थूलाः श्यावपीतसितासिताः॥ ५४॥
ते पञ्च नाम्ना कृमयः ककेरुकमकेरुकाः।
सौसुरादाः सलूनाख्या लेलिहा जनयन्ति च॥ ५५॥
विड्भेदशूलविष्टम्भकार्श्यपारुष्यपाण्डुताः।
रोमहर्षाग्निसदनगुदकण्डूर्विनिर्गमात्॥ ५६॥

पुरीषोत्थाः पक्वाशय एव जायन्ते। पुरीषस्य पक्वाशयस्थत्वात्। ते चाधोविसर्पिणः स्युर्नोर्ध्वगाः। वृद्धाः सन्तो वृद्धिं गता यदाऽऽमाशयोन्मुखास्ते स्युस्तदाऽस्य कृमिमतो रोगिण उद्गारनिःश्वासा विड्गधानुविधायिनः पुरीषगन्धानुकारिणो भवेयुः। तथा ते पृथुवृत्ततनुस्थूलाः संस्थानेन श्यावपीतसितासिता वर्णेन। तथा नाम्ना पञ्च संख्यया। तान्येव नामान्याह। ककेरुकेत्यादिना। ते च विनिर्गमाद्धेतोर्विड्भेदादीन् जनयन्ति।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां निदानस्थाने कुष्ठश्वित्रकृमिनिदानं नाम चतुर्दशोऽध्यायः॥ १४॥





# पञ्चदशोऽध्यायः।

कुष्ठनिदानानन्तरं वातव्याधिनिदानमारभ्यते। वातरोगाणां कुष्ठवद्बहुप्रकारत्वाद्विविधदुःखदायित्वाच्चेत्यत आह—

**अथाऽतो वातव्याधिनिदानं व्याख्यास्यामः।**

**सर्वार्थानर्थकरणे विश्वस्यास्यैककारणम्।**

**अदुष्टदुष्टः पवनः शरीरस्य विशेषतः॥ १॥**

अर्थाश्चानर्थाश्चार्थानर्थाः शुभाशुभाः। सर्वे च तेऽर्थानर्थाश्च सर्वार्थानर्थास्तेषां करणं निर्वृत्तिस्तस्मिन्, विश्वस्य जगत एकं प्रधानं कारणम्। वातः किम्भूतः? अदुष्टो यथाक्रमं सर्वार्थकरणे जगतः स्थितिलक्षणे वायुः प्रधानं कारणम्। सर्वानर्थकरणे जगद्विनाशकरणलक्षणे दुष्टः पवनः प्रधानं हेतुः। शरीरस्य पुनर्विशेषतोऽतिशयेनार्थानर्थकरणे प्रधानं कारणमिति शेषः। पञ्चधात्वं गतेन प्राणादितया शरीरजननाद्धारणाच्चाऽतस्तददुष्टौ यतितव्यमिति सम्बन्धः।

कथं वायुः कारणमित्यवगम्यत? इत्याह—

**स विश्वकर्मा विश्वात्मा विश्वरूपः प्रजापतिः।**

**स्रष्टा धाता विभुर्विष्णुः संहर्ता मृत्युरन्तकः॥ २॥**

**तददुष्टौ प्रयत्नेन यतितव्यमतः सदा।**

यतोऽसौ वायुर्विश्वकर्मा विश्वानि शरीरजननवर्धनधारणभञ्जनशोषणादीन्यर्थानर्थकरणानि कर्माणि यस्य स विश्वकर्मा। कस्माद्विश्वकर्मेत्याह। विश्वात्मा विश्वेषां शुभानामात्मा हेतुः। हेत्वर्थोऽत्रात्मशब्दः। ननु विश्वात्मेति कथं ज्ञायते? —इत्याह—'विश्वरूप इति'। यतो विश्वं रूपं बाह्याध्यात्मिकं स्वभावाख्यं यस्य स एवम्। तथा प्रजापतिः प्रजानां पालकः। तथा स्रष्टा प्रकृतत्वाद्विश्वस्य। तथा धाता विश्वस्य धारकः। यथा हि बाह्यो लोको वायुमण्डलेन धार्यते। (तथा) सत्यलोकोऽपि प्राणापानादिभिः। कस्माद्विश्वरूपः? यस्माद्विभुः। अतस्तदर्थानर्थकरणे प्रभुरित्यर्थः। कस्मात्प्रजापतिः? यस्माद्विष्णुर्व्यापी। 'विष्लृ व्याप्तावित्यस्यौणादिके कुप्रत्यये विष्णुशब्दः'। संहर्ता बाह्याध्यात्मिकसर्गसंहरणात्। मृत्युर्यमरूपस्तत्कार्यकरणात्। तथाऽन्तको यमो मारक एव साक्षात्। यतश्चैवमतस्तददुष्टौ तस्याऽप्रकोपे सदा सर्वकालं यतितव्यम्।

**तस्योक्तं दोषविज्ञाने कर्म प्राकृतवैकृतम्।**

**समासाद्व्यासतो दोषभेदीये नाम धाम च।**

**प्रत्येकं पञ्चधा चारो व्यापारश्च,**

तस्य पवनस्य कर्मोक्तम्। क? दोषविज्ञाने दोषविज्ञानीयाध्याये। किम्भूतं कर्म? प्राकृतवैकृतम्। प्रकृतौ भवं प्राकृतं स्वाभाविकमुत्साहोच्छ्वासादिलक्षणम्। वैकृतं तु वृद्धस्तु कुरुतेऽनिलः कार्श्यकार्ण्योष्णेत्यादिग्रन्थनिर्दिष्टम्। एतत्समा-

सात्संक्षेपतो वायोः कर्म । व्यासतो विस्तरतः पुनर्दोषभेदीये. नाम धाम चोक्तमित्यनुवर्तनीमम्। प्रत्येकं पञ्चधा। एकमेकं प्रति प्रत्येकं नाम धाम च प्राणादिभेदेन नाम पञ्चधा धाम स्थानमपि पञ्चधा मूर्धादिभेदेन। प्राणस्य मूर्धा स्थानम्। प्राणोऽत्र मूर्धग इति वचनात्। तथा उरः स्थानमुदानस्येति। तथा व्यानो हृदि स्थित इति। तथा समानाऽग्निसमीपस्थ इति। तथाऽपानोऽपानग इति। तथा चारोऽपि पञ्चधा। चरणं चारो गतिः। तथा चोक्तम्। प्राण उरःकण्ठचरः। उदानो नासानाभिगलचरः। व्यानः कृत्स्नदेहचरः। समानः कोष्ठचरः। अपानो बस्तिमेढ्रोरुगोचर इति। व्यापारोऽपि वायोः प्राणादिभेदेन पञ्चधा। तत्र प्राणस्य व्यापारो बुद्धिहृदयेन्द्रियचित्तधृगित्यादिः। उदानस्य व्यापारो वाक्प्रवृत्तिरित्यादिः। व्यानस्य व्यापारो गत्यपक्षेपणोत्क्षेपणादिकः। समानस्य व्यापारोऽन्नग्रहणादिकः। अपानस्य व्यापारः शुक्रार्तवादीनां निष्क्रमणरूपः। एवं विस्तरेण दोषभेदीये वातः प्राणादिभेदेन पञ्चधा नामादिभिरुक्तः।

**इह वैकृतम्॥ ४॥**

**तस्योच्यते विभागेन सनिदानं सलक्षणम्।**

इहास्मिन्नध्याये तस्य वातस्य वैकृतं कर्म विभागेन पृथक्पृथक्तयोच्यते। किम्भूतम्? सनिदानं सलक्षणं सह निदानेन सनिदानं तथा सह लक्षणेन सलक्षणम्।

वायोश्चोभयथाऽपि कोपः सम्भवति तमिदानीं दर्शयन्नाह—

**धातुक्षयकरैर्वायुः कुप्यत्यतिनिषेवितैः॥ ५॥**
**चरन् स्रोतःसु रिक्तेषु भृशं तान्येव पूरयन्।**
**तेभ्योऽन्यदोषपूर्णेभ्यः प्राप्य वाऽऽवरणं बली॥ ६॥**

धातुक्षयकरैराहारविहारादिभिरतिनिषेवितैरतिमात्रसेवितैश्चिरकालसेवितैश्च पवनः कुप्यति। किं कुर्वन्? स्रोतःसु रिक्तेषु चरन्। धातुक्षयकरैरतिसेवनाद्यतस्तदानीं स्रोतसां शून्यता भवति। तथाभूतेषु स्रोतःसु प्रभञ्जनस्तदन्तः प्रवेशात्तान्येव स्रोतांसि रिक्तानि भृशं पूरयन्नेवं धातुक्षयात् कुप्यति मरुत्। तथा तेभ्यः स्रोतोभ्योऽन्यदोषपूर्णेभ्य आवरणं वा प्राप्य बली वायुरेव कुप्यति।

**तत्र पक्वाशये क्रुद्धः शूलानाहाऽन्त्रकूजनम्।**
**मलरोधाऽश्मवर्ध्माऽर्शस्त्रिकपृष्ठकटीग्रहम्॥ ७॥**
**करोत्यधरकायेषु तांस्तान्कृच्छ्रानुपद्रवान्।**

एवमुभयथा वायुः पक्वाशये क्रुद्धः शूलानाहान्त्रकूजनादींश्च करोति तथाऽधरकाये च शरीरस्याधस्तान्नानाविधानुपद्रवान् व्याधीन् कृच्छ्रान् कृच्छ्रसाध्यान् करोति। 'कायस्याधर इति पूर्वापरेत्यादिना समासः'।

**आमाशये तृड्वमथुश्वासकासविसूचिकाः॥ ८॥**



**कण्ठोपरोधमुद्गारान् व्याधीनूर्ध्वं च नाभितः।**
आमाशये क्रुद्धस्तृडादींस्तथाऽन्यानप्यनुक्तान् व्याधीन्नाभेरूर्ध्वकाये करोति।

**श्रोत्रादिष्विन्द्रियवधं,**
श्रोत्रादिष्विन्द्रियाधारेषु क्रुद्धः इन्द्रियाणां वधं विनाशं करोति।

**त्वचि स्फुटनरूक्षणे॥ ९॥**
त्वचि क्रुद्धस्तस्यास्त्वचः स्फुटनं रूक्षतां च करोति।

**रक्ते तीव्रा रुजः स्वापं तापं रोगं विवर्णताम्।**
**अरूंष्यन्नस्य विष्टम्भमरुचिं कृशतां भ्रमम्॥ १०॥**
रक्ते क्रुद्धस्तीव्रा रुजस्तथा स्वापादीन् करोति।

**मांसमेदोगतो ग्रन्थींस्तोदाढ्यान् कर्कशान् भ्रमम्।**
**गुर्वङ्गं चातिरुक्स्तब्धमुष्टिदण्डहतोपमम्॥ ११॥**
मांसमेदोगतस्तत्रस्थः क्रुद्धो ग्रन्थींस्तोदादियुतांस्तथा भ्रमादींश्च करोति। सुश्रुते चाऽत्र विशेष उक्तः। तथा च तद्ग्रन्थः—"कर्कशांस्तोदबहुलान् ग्रन्थीन्मांससमाश्रितः। वायुर्मेदोयुतः कुर्याद् ग्रन्थीन्मन्दरुजो नृणामिति।"

**अस्थिस्थः सक्थिसन्ध्यस्थिशूलं तीव्रं बलक्षयम्।**
अस्थिस्थः क्रुद्धः सक्थिसन्ध्यस्थिशूलं तीव्रं दारुणं बलक्षयं च करोति।

**मज्जस्थोऽस्थिषु सौषिर्यमस्वप्नं स्तब्धतां रुजम्॥ १२॥**
मज्जस्थः क्रुद्धोऽस्थिसौषिर्यादीन् करोति।

**शुक्रस्य शीघ्रमुत्सर्गं सङ्गं विकृतिमेव च।**
**तद्वद्गर्भस्य शुक्रस्थः,**
शुक्रस्थः क्रुद्धः शुक्रस्य शीघ्रमुत्सर्गं सङ्गादीन्वा करोति। तद्वत्तथैव गर्भस्यापि। तथाभूतबीजोत्पन्नत्वाच्छीघ्रोत्सर्गादीन्करोति।

**सिरास्वाध्मानरिक्तते॥ १३॥**
**तत्स्थः,**
तत्स्थः सिरास्थितः क्रुद्धस्तास्वेव सिरास्वाध्मानरिक्तते करोति।

**स्नावस्थितः कुर्याद् गृध्रस्यायामकुब्जताः।**
स्नावस्थितः क्रुद्धो गृध्रस्यादीन् करोति।

**वातपूर्णदृतिस्पर्शं शोफं सन्धिगतोऽनिलः॥ १४॥**
**प्रसारणाऽकुञ्चनयोः प्रवृत्तिं च सवेदनाम्।**
सन्धिगतोऽनिलः क्रुद्धः शोफं कुर्यात्। किम्भूतम्? वातपूर्णदृतिस्पर्शं तत्तुल्यम्। तथा प्रसारण आकुञ्चने च सवेदनां प्रवृत्तिं करोति।

सर्वाङ्गसंश्रयस्तोदभेदस्फुरणभञ्जनम् ॥ १५ ॥
स्तम्भमाक्षेपणं स्वापं सन्ध्याकुञ्चनकम्पनम् ।

सर्वाङ्गसंश्रयोऽनिलस्तत्रस्थः क्रुद्धस्तोदं करोति ।

यदा तु धमनीः सर्वाः क्रुद्धोऽभ्येति मुहुर्मुहुः ॥ १६ ॥
तदाङ्गमाक्षिपत्येष व्याधिराक्षेपकः स्मृतः ।

यदा तु सर्वा धमनीर्वायुः क्रुद्धोऽभ्येत्याभिमुख्येनागच्छति पुनःपुनस्तदाङ्गं शरीरमाक्षिपत्याक्रमति । एष वातव्याधिराक्षेपकः स्मृतः ।

अथाऽपतन्त्रकं लक्षयति—

अधः प्रतिहतो वायुर्व्रजत्यूर्ध्वं हृदाश्रिताः ॥ १७ ॥
नाडीः प्रविश्य हृदयं शिरः शङ्खौ च पीडयन् ।
आक्षिपत्परितो गात्रं धनुर्वच्चास्य नामयेत् ॥ १८ ॥
कृच्छ्रादुच्छ्वसिति स्तब्धस्रस्तमीलितदृक्ततः ।
कपोत इव कूजेत्स निःसञ्ज्ञः सोऽपतन्त्रकः ॥ १९ ॥
स एव चापतानाख्यो मुक्ते तु मरुता हृदि ।
अश्नुवीत मुहुः स्वास्थ्यं मुहुरस्वास्थ्यमावृते ॥ २० ॥

अधः प्रतिहत ऊर्ध्वं व्रजन्मारुतो हृदाश्रिता हृदयस्थिता नाडीरन्तः प्रविश्य हृदयं तथा शिरश्च शङ्खौ च पीडयन् आक्षिपेत् परितोगात्रं समन्तात्कायमाक्षिपेत्संहरेत् । तथा धनुर्वच्चास्य नामयेत् । प्रकृतत्वाद्गात्रमेवास्यापतन्त्रकवतो नरस्य नामयेत् । तथा स पुमान् कृच्छ्रादुच्छ्वसिति । दृक् चक्षुरिन्द्रियाधिष्ठानं दृक्शब्देनेह गृह्यते । स्तब्धा स्रस्ता मीलिता च दृग्यस्यासौ स्तब्धस्रस्तमीलितदृक् । ततोऽनन्तरं कपोत इव कूजेदव्यक्तं शब्दं विदध्यात् । तथा निःसंज्ञो विचेतनः सम्पद्यते । स एवंरूपो वातव्याधिरपतन्त्रको भण्यते । स एव चापतानकसंज्ञो निगद्यते । मुक्ते त्वित्यादि । वायुनाऽनाक्रान्ते हृदये क्षणं स्वास्थ्यमाप्नुयात् । मुहुरस्वास्थ्यं तेनावृते ह्यस्वास्थ्यमाप्नुयात्

गर्भपातसमुत्पन्नः शोणितातिस्रवोत्थितः ।
अभिघातसमुत्थश्च दुश्चिकित्स्यतमो हि सः ॥ २१ ॥

स चाकालगर्भपातात्समनन्तरं योषितां प्रायो जायते । कदाचिच्छोणितातिस्रवात् स्त्रीणां पुरुषाणां चाभिघाताच्च स्यात् । सोऽपतन्त्रको गर्भपातनिमित्तोत्पन्नो दुश्चिकित्स्यः स्यात् । शोणितातिस्रवोत्थितो दुश्चिकित्स्यतरः । अभिघातसमुत्थो दुश्चिकित्स्यतमः ।

मन्ये संस्तभ्य वातोऽन्तरायच्छन् धमनीर्यदा ।
व्याप्नोति सकलं देहं जत्रुरायम्यते तदा ॥ २२ ॥
अन्तर्धनुरिवाङ्गं च वेगैः स्तम्भं च नेत्रयोः ।



**करोति जृम्भां दशनं दशनानां कफोद्गमम् ॥ २३ ॥**
**पार्श्वयोर्वेदनां वाक्यहनुपृष्ठशिरोग्रहम्।**
**अन्तरायाम इत्येषः,**

मन्ये द्वे ग्रीवापार्श्वाश्रिते नाड्यौ वायुः संस्तभ्यान्तरायच्छन् धमनीर्गृह्णन् सकलं देहं व्याप्नोति तदा जत्रुरायम्यते वक्रीक्रियते । 'जत्रुशब्दस्य पुंस्त्वं लोकाश्रयत्वाल्लिङ्गस्येति'। यथान्तर्मुखतो भागादङ्गं शरीरं च धनुरिवायम्यत इति चार्थः। वेगैरुच्छ्रित्य पुनरुद्धवैर्भज्यत इव त्रुट्यत इति नानाव्यथारूपैः। तथा स्तम्भं च नेत्रयोः करोति। तथा जृम्भाम्। तथा दशनानां दन्तानां दशनं खादनम्। 'दशनमित्यत्र दाम्नीशसयुयुजेत्यादौ दंशेरनुनासिकलोपनिर्देशो ज्ञापनार्थः कृतोऽन्यस्मिन्नपि प्रत्यये लोपो भवतीति तेन ल्युट्यपि भवति'। 'दशनमिति वचनादत्र नलोपः। प्रायिकं चैतज्ज्ञापकमिति "हितं कीटैश्च दंशनम्" इत्यपि भवति'। तथा कफस्योद्गमम्। तथा पार्श्वयोर्द्वयोर्वेदनां शूलम्। तथा वाक्यादीनां ग्रहं स्तम्भम्। इत्येष वातव्याधिरन्तरायामसंज्ञोऽङ्गस्यान्तरायमनाद्वक्रीकरणादुच्यत इति शेषः।

**बाह्यायामश्च तद्विधः ॥ २४ ॥**
**देहस्य बहिरायामात्पृष्ठतो नीयते शिरः।**
**उरश्चोत्क्षिप्यते तत्र कन्धरा चावमृद्यते ॥ २५ ॥**
**दन्तेष्वास्ये च वैवर्ण्यं प्रस्वेदः स्रस्तगात्रता।**
**बाह्यायामं धनुष्कम्भं ब्रवते वेगिनं च तम् ॥ २६ ॥**

बाह्यायामश्च तद्विधस्तादृशो देहस्य बहिरायामादङ्गस्य धनुर्वद्बहिर्वक्रीकरणाद्बहिरायाम उच्यत इति शेषः। तमेव प्रदर्शयितुमाह। पृष्ठत इत्यादि। शिरः पृष्ठाभिमुखं नीयते। तथा तत्र बाह्यायाम उरो वक्ष उत्क्षिप्यत उन्नतिं नीयते। तथा कन्धरा ग्रीवा चाऽवमृद्यते क्षुद्यते। तथा दन्तेषु वक्त्रे च वैवर्ण्यं प्रकृतावर्णाद्वर्णान्तरापत्तिः। तथा प्रकर्षेण स्वेदः। तथा स्रस्तगात्रता श्लथाङ्गता। तं तथाभूतं वातव्याधिं बाह्यायामं धनुष्कम्भं च ब्रवते। तमेव केचिद्वेगिनमित्याचक्षते।

अधुना व्रणायाममाह—

**व्रणं मर्माश्रितं प्राप्य समीरणसमीरणात्।**
**व्यायच्छन्ति तनुं दोषाः सर्वामापादमस्तकम्॥ २७ ॥**
**तृष्यतः पाण्डुगात्रस्य व्रणायामः स वर्जितः।**

दोषा व्रणं मर्माश्रितं प्राप्यानन्तरं समीरणस्य समीरणात्प्रेरणात्सर्वां तनुं सकलं देहमापादमस्तकं व्यायच्छन्ति विशेषेणाक्रामन्ति। एष व्रणायामस्तृष्यतस्तथा पाण्डुगात्रस्य नरस्य वर्जितोऽसाध्यत्वात्।

**गते वेगे भवेत्स्वास्थ्यं सर्वेष्वाक्षेपकेषु च ॥ २८ ॥**

सर्वेष्वाक्षेपकेषु यदा तु धमनीः सर्वा इत्यादिग्रन्थनिर्दिष्टेषु व्रणायामपर्यन्तेषु

वेगे गते सति वेगानां शान्तौ सत्यां स्वास्थ्यं भवेन्नान्यदा।

जिह्वातिलेखनात् शुष्कभक्षणादभिघाततः।
कुपितो हनुमूलस्थः स्रंसयित्वाऽनिलो हनू॥ २९॥
करोति विवृतास्यत्वमथवा संवृतास्यताम्।
हनुस्रंसः स तेन स्यात्कृच्छ्राच्चर्वणभाषणम्॥ ३०॥

जिह्वातिलेखनादिभिः कुपितो हन्वोर्मूले स्थितो वायुर्हनू स्रंसयित्वा स्थानाच्चालयित्वा विवृतास्यत्वं प्रसारितमुखत्वमथवा संवृतास्यत्वं करोति। स एवम्भूतो हनुस्रंस उच्यते। तेन च हनुस्रंसेन कृच्छ्रात्कथमपि चर्वणं भाषणं च स्यात्।

वाग्वाहिनीसिरासंस्थो जिह्वां स्तम्भयतेऽनिलः।
जिह्वास्तम्भः स तेनाऽन्नपानवाक्येष्वनीशता॥ ३१॥

वाग्वाहिनीसिरासंस्थो वायुर्जिह्वां स्तम्भयते। स एव जिह्वास्तम्भ उच्यते। तेन जिह्वास्तम्भेनाऽन्नपानवाक्येष्वनीशताऽसमर्थता भवति।

शिरसा भारहरणादतिहास्यप्रभाषणात्।
उत्त्रासवक्त्रक्षवथुखरकार्मुककर्षणात्॥ ३२॥
विषमादुपधानाच्च कठिनानां च चर्वणात्।
वायुर्विवृद्धस्तैस्तैश्च वातलैरूर्ध्वमास्थितः॥ ३३॥
वक्रीकरोति वक्त्रार्धमुक्तं हसितमीक्षितम्।
ततोऽस्य कम्पते मूर्धा वाक्सङ्गः स्तब्धनेत्रता॥ ३४॥
दन्तचालः स्वरभ्रंशः श्रुतिहानिः क्षवग्रहः।
गन्धाऽज्ञानं स्मृतेर्मोहस्त्रासः सुप्तस्य जायते॥ ३५॥
निष्ठीवः पार्श्वतो यायादेकस्याऽक्ष्णो निमीलनम्।
जत्रोरूर्ध्वं रुजा तीव्रा शरीरार्धेऽधरेऽपि वा॥ ३६॥
तमाहुरर्दितं केचिदेकायाममथापरे।

शिरसा भारहरणादिभिर्वायुर्विवृद्धो विशेषेण वृद्धिं गतस्तथा तैस्तैश्च वातलैः सर्वरोगनिदानायुक्तैरूर्ध्वमास्थितः शरीरस्योपरिभागे आसमन्तात्स्थितो वक्त्रार्धं वक्रीकरोति। तथा उक्तं हसितमीक्षितं च वक्रीकरोति। ततोनन्तरमस्य नरस्य मूर्धा कम्पते। तथा वाक्सङ्गो जायते। तथा स्तब्धनेत्रतादयश्च। तथा निष्ठीवो निष्ठीवनं पार्श्वे गच्छेत्। एकस्य चाक्ष्णो निमीलनं स्यात्। जत्रोरूर्ध्वं तीव्रा रुजा दारुणा पीडा भवति। शरीरार्धेऽधरेऽपि वाऽधस्ताद्वा तमीदृशं वातव्याधिं केचिदर्दितमाहुः। अपरे तन्त्रकृत एकायामं वदन्ति।

रक्तमाश्रित्य पवनः कुर्यान्मूर्धधराः सिराः॥ ३७॥
रूक्षाः सवेदनाः कृष्णाः सोऽसाध्यः स्यात्सिराग्रहः।

पवनो रक्तमाश्रित्य श्रयित्वा मूर्धाश्रिताः सिरा रूक्षादिगुणयुक्ताः कुर्यात्।

स सिराग्रह उच्यते । स चासाध्यः ।

**गृहीत्वाऽर्धं तनोर्वायुः सिराः स्नायूर्विशोष्य च ॥ ३८ ॥**
**पक्षमन्यतरं हन्ति सन्धिबन्धान् विमोक्षयन् ।**
**कृत्स्नोऽर्धकायस्तस्य स्यादकर्मण्यो विचेतनः ॥ ३९ ॥**
**एकाङ्गरोगं तं केचिदन्ये पक्षवधं विदुः ।**

वायुस्तनोः शरीरस्यार्धं गृहीत्वा सिराः स्नायूश्च विशोष्य ततोऽन्यतरं क्षामं दक्षिणं वा पक्षं हन्ति । किं कुर्वन् ? सन्धीनां बन्धान् विमोक्षयन्विघट्टयन् । तस्यैव च व्याधिमतः कृत्स्नः सर्वोऽर्धकाय अकर्मण्यः क्रियायामशक्तो विचेतनश्च स्यात् । तमीदृशं वातव्याधिं केचिदेकाङ्गरोगं वदन्ति । अन्ये पक्षवधमाहुः । 'अर्धकाय इत्यर्धं नपुंसकमिति समासः ।'

**सर्वाङ्गरोगं तद्वच्च सर्वकायाश्रितेऽनिले ॥ ४० ॥**

सर्वकायाश्रिते वायौ तेन पूर्वोक्तेनैकाङ्गरोगोक्तेन लक्षणेन तुल्यं वर्तते तद्वत् सर्वाङ्गरोगमप्याहुः ।

**शुद्धवाताहतः पक्षः कृच्छ्रसाध्यतमो मतः ।**
**कृच्छ्रस्त्वन्येन संसृष्टो विवर्ज्यः क्षयहेतुकः ॥ ४१ ॥**

शुद्धवातेन हतः पक्ष एकाङ्गरोगः कृच्छ्रसाध्यतमो मतोऽतिशयेन कृच्छ्रसाध्यः । अन्येन संयुक्तः पक्षः कृच्छ्रसाध्यः । क्षयहेतुकः पक्षी विवर्ज्यः स नोपक्रम्योऽसाध्यत्वात् ।

**आमबद्धायनः कुर्यात्संस्तभ्याऽङ्गं कफान्वितः ।**
**असाध्यं हतसर्वेहं दण्डवद्दण्डकं मरुत् ॥ ४२ ॥**

आमेन बद्धानि स्थगितान्ययनानि द्वाराणि प्रकृतत्वात् स्रोतसां येन स आमबद्धायनः कफान्वितो मारुतोऽङ्गं संस्तभ्य स्तम्भयित्वा दण्डवद्दण्डकाख्यं वातव्याधिविशेषं कुर्यात् । तमसाध्यं, तथा हताः सर्वा ईहाश्चेष्टा यस्मिंस्तमेवम्भूतम् ।

**अंसमूलस्थितो वायुः सिराः सङ्कोच्य तत्रगाः ।**
**बाहुप्रस्पन्दितहरं जनयत्यवबाहुकम् ॥ ४३ ॥**

वायुरंसमूले स्थितस्तत्रगा अंसमूलस्थिताः सिराः सङ्कोच्याऽवबाहुकाख्यं वातव्याधिं जनयति । किम्भूतम् ? बाहुप्रस्पन्दितं हरतीति बाहुप्रस्पंदितहरम् । 'हरतेरनुद्यमनेऽजित्यच् ।'

**तलं प्रत्यङ्गुलीनां या कण्डरा बाहुपृष्ठतः ।**
**बाहुचेष्टापहरणी विश्वाची नाम सा स्मृता ॥ ४४ ॥**

तलं हस्ततलं प्रति तल्लक्षणं कृत्वा । या कण्डरा सुमहान् स्नायुसङ्घातः बाहुपृष्ठतो गता सा मारुतार्दिता वातेन पीडिता सती बाहुचेष्टां भुजव्यापारमपहरति बाहुचेष्टापहरणी । 'बाहुलकादत्र कर्तरि ल्युट् स्त्रीत्वं च' । एवम्भूता

विश्वाचीसंज्ञा स्मृता मुनिभिरिति शेषः ।

**वायुः कट्यां स्थितः सक्थ्नः कण्डरामाक्षिपेद्यदा ।**
**तदा खञ्जो भवेज्जन्तु पङ्गुः सक्थ्नोर्द्वयोरपि ॥ ४५ ॥**

कट्यां स्थितो मारुतो यदा सक्थ्न ऊरो सम्बन्धिनीं कण्डरामाक्षिपेदाकर्षेत्तदा प्राणी खञ्जो भवेत् । द्वयोरपि सक्थ्नोः सम्बन्धिन्यौ कण्डरे यदाऽऽक्षिपेत्तदा पङ्गुः स्यात् ।

**कम्पते गमनारम्भे खञ्जन्निव च याति यः ।**
**कलायखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम् ॥ ४६ ॥**

तथा यो गमनारम्भे कम्पते वेपते खञ्जन्निव च याति । कडायखञ्जाख्यं तमेवम्भूतं व्याधिं विद्यात् । किम्भूतम् ? मुक्तं सन्धिप्रबन्धनं यत्र तं तथाभूतम् ।

**शीतोष्णद्रवसंशुष्कगुरुस्निग्धैर्निषेवितैः ।**
**जीर्णाजीर्णे तथाऽऽयाससङ्क्षोभस्वप्नजागरैः ॥ ४७ ॥**
**सश्लेष्ममेदःपवनमाममत्यर्थसञ्चितम् ।**
**अभिभूयेतरं दोषमूरू चेत्प्रतिपद्यते ॥ ४८ ॥**
**सक्थ्यस्थिनी प्रपूर्यान्तः श्लेष्माणा स्तिमितेन तत् ।**
**तदा स्कभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ ॥ ४९ ॥**
**परकीयाविव गुरु स्यातामतिभृशव्यथौ ।**
**ध्यानाङ्गमर्दस्तैमित्यतन्द्राछर्द्यरुचिज्वरैः ॥ ५० ॥**
**संयुतौ पादसदनकृच्छ्रोद्धरणसुप्तिभिः ।**
**तमूरुस्तम्भमित्याहुराढ्यवातमथापरे ॥ ५१ ॥**

जीर्णेन सहितमजीर्णं जीर्णाजीर्णं पक्वापक्वमाहारकदम्बकं केनचिन्निमित्तेन जाठराग्निसंयोगादाहारराशेः कश्चिद्भागः पक्वः कश्चिद्विदग्ध इति जीर्णाजीर्णं तस्मिन्सति शीतोष्णादिभिस्तथाऽऽयाससङ्क्षोभादिभिर्निषेवितश्चिरमभ्यस्तस्तैराममत्यर्थं सञ्चितं बहु सम्भृतमूरू यदि प्रतिपद्यत उभावाश्रित्यास्ते तदा तस्मिन्काले तेन यथोक्तेन हेतुना तावूरू स्कभ्नाति स्तम्भयति । किम्भूतमामम् ? सश्लेष्ममेदःपवनम् । सह श्लेष्मणा मेदसा पवनेन च वर्तत इति सश्लेष्ममेदःपवनं न तु केवलमेव । तथेतरं दोषं वातश्लेष्मापेक्षया पित्ताख्यमभिभूयाक्रम्य वातं कफं वा । तेन हि तयोरभिभवो न युक्तस्तत्सहवर्तमानत्वात् । तथा तेन सहवर्तमानेनापि श्लेष्मणा च स्तिमितेन स्त्यानेन सक्थिसम्बन्धिनी अस्थिनी अन्तः प्रपूर्य ते (उभे) निर्भरे कृत्वा तदाऽऽममूरू स्कभ्नातीति योज्यम् । तेन हेतुना सदा तस्मिन्काले तावूरू स्तब्धौ निश्चलौ तथा स्पर्शतः शीतौ तथाऽचेतनौ सूच्यादिभिस्तुद्यमानावपि पीडां न वेदयेतामत एव परकीयाविव गुरू स्याताम् । तथाऽतिभृशव्यथावत्यन्तशूली-





न्वितौ। परकीयाविति। 'कुग् जनौ। परस्य चेलिं ईयः कुगागमश्च'। तथा ध्यानादिभिः संयुतौ ध्यानं चिन्ता ... तथा ...सदनादिभिः संयुतौ। एवंलक्षणो यो व्याधिविशेषस्तमूरुस्तम्भमा...तन्त्रकृ... । अपरे आचार्या आढ्यवातमिति तमाहुः। ' आमशब्दस्य नपुंसकत्वं लोक... ...स्येति बोध्यम् '।

**वातशोणितजः शोफो जानुमध्ये महारुजः।**
**ज्ञेयः क्रोष्टुकशीर्षश्च स्थूलः क्रोष्टुकशीर्षवत्॥ ५२॥**

जानुमध्ये महारुजः। शोफो वातशोणिताज्जातः क्रोष्टुकशीर्षाख्यो वातव्याधिभेदः। स च स्थूलः सृगालशिरःसदृशो भवति।

**रुक् पादे विषमन्यस्ते श्रमाद्वा जायते यदा।**
**वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम्॥ ५३॥**

पादे चरणे विषमन्यस्ते सत्यथवा यदा (श्रमेण) गुल्फमाश्रित्य रुग्जायते तं वातकण्टकाख्यं वातव्याधिमाहुः।

**पार्ष्णिं प्रत्यङ्गुलीनां या कण्डरा मारुतार्दिता।**
**सक्थ्युत्क्षेपं निगृह्णाति गृध्रसी तां प्रचक्षते॥ ५४॥**

पार्ष्णिं प्रति पार्ष्ण्यभिमुखं या अङ्गुलीनां कण्डरा सा मारुतेन वायुनाऽर्दिता व्यथिता चरणोद्धरणावसरे यः सक्थ्युत्क्षेपं ऊर्ध्वं प्रेरणं तं निगृह्णात्यवगृह्णाति सक्थ्नोर्निश्चलत्वमिवोत्पादयति। तां कण्डरां व्याधिविशेषसंज्ञां गृध्रसीं प्रचक्षते तन्त्रकृत इति शेषः।

**विश्वाची गृधसी चोक्ता खल्ली तीव्ररुजान्विता।**

विश्वाची चोक्ता बाहुचेष्टापहारिणीत्यादिना ग्रन्थेन गृध्रसी चाधुनैवोक्ता। ते द्वे तीव्ररुजान्विते सत्यौ खल्ली भण्येते।

**हृष्येते चरणौ यस्य भवेतां च प्रसुप्तवत्॥ ५५॥**
**पादहर्षः स विज्ञेयः कफमारुतकोपजः।**

यस्य पुंसश्चरणौ हृष्येते प्रसुप्ताविव च स्यातां स एवम्भूतो वातव्याधिः पादहर्षाख्यः स च वातश्लेष्मकोपजो वेद्यः।

**पादयोः कुरुते दाहं पित्तासृक्सहितोऽनिलः॥ ५६॥**
**विशेषतश्चङ्क्रमिते पाददाहं तमादिशेत्।**

अनिलः पित्तरक्तसहितः पादयोर्दाहं कुरुते विशेषेण तु चङ्क्रमिते सति। तमेवम्भूतं पाददाहमादिशेद् ब्रूयाद्भिषगिति शेषः।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयटीकायां सर्वाङ्गसुन्दराख्यायां निदानस्थाने वातव्याधिनिदानं नाम पञ्चदशोऽध्यायः॥ १५॥

# षोडशोऽध्यायः ।

वातशो[illegible] निदानं वात[illegible] [illegible]नगारभ्यते। बहुवक्तव्यत्वात्। अन्यथा वातव्या[illegible] [illegible]क्तशोणिताख्यो व्याधिरिति तत्रैव वक्तुं युक्तः स्यात्। तस्मा[illegible] [illegible]दानं प्रक्रम्यत इत्याह—

अथाऽतो वातशोणितनिदानं व्याख्यास्यामः ।
विदाह्यन्नं विरुद्धं च तत्तच्चासृक्प्रदूषणम् ।
भजतां विधिहीनं च स्वप्नजागरमैथुनम् ॥ १ ॥
प्रायेण सुकुमाराणामचङ्क्रमणशीलिनाम् ।
अभिघातादशुद्धेश्च नृणामसृजि दूषिते ॥ २ ॥
वातलैः शीतलैर्वायुर्वृद्धः क्रुद्धो विमार्गगः ।
तादृशेनासृजा रुद्धः प्राक्तदेव प्रदूषयेत् ॥ ३ ॥
आढ्यरोगं खुडं वातबलासं वातशोणितम् ।
तदाहुर्नामभिस्तच्च पूर्वं पादौ प्रधावति ॥ ४ ॥
विशेषाद्यानयानाद्यैः प्रलम्बौ,

मद्याम्लतक्रदधिनिष्पावव्रीहिवारिचरमांसकुलत्थकुठेरादिकं विदाह्यन्नं तथा विरुद्धमन्नं संयोगमात्रादिवशाद्यथाऽऽनूपमामिषं माषक्षीरेत्यादिकं प्रागुक्तं तत्तच्चासृक्प्रदूषणमन्यदप्याहारविहारजातं यत्तत्रतत्रोक्तं तद्भजतां शीलयतां नृणां पुरुषाणां तथा विधिहीनमयथाशास्त्रं स्वप्नजागरमैथुनं भजतां प्रायेण सुकुमाराणाम्। प्रायोग्रहणमन्येषामपि रक्तहेत्वाहारसेविनां तथा अचङ्क्रमणशीलिनामत्यन्तमास्यादिसुखसेविनामभिघातादनेकविधात्प्रहारविशेषात्तथा अशुद्धेरशोधनान्मलाऽनिर्हरणात्तेषामसृजि दूषिते तद्दूषणहेतुभिर्यथोक्तैर्दुष्टे सम्पन्ने ततो वातलैस्तिक्तोषणादिभिः सर्वरोगनिदानोक्तैस्तथाऽतिशयेन शीतलैर्वायुर्वृद्धोऽत्यन्तमुपचयं प्राप्य पश्चात्क्रुद्धः कुपितोऽत एव विमार्गगो विशेषेणोन्मार्गगामी तादृशेन तथाभूतेनैवासृजा दुष्टेन क्रुद्धेन रुद्धो विहतगतिः कृतात्यन्तसंश्लेषात्तत एव शोणितं प्राक् पूर्वं प्रदूषयेत्। प्राग्ग्रहणादनन्तरं सर्वान् धातून् मांसादीन् प्रदूषयेत् । तच्च तथाविधं रक्तमत्युपचितं प्रदुष्टमाढ्यरोगं खुडं वातबलासं वातशोणितमिति नामभिराचार्या आहुः । तच्च रोगस्वभावात् पूर्वं पादौ प्रधावति समुत्पद्यते । तौ च पादौ विशेषादतिशयेन यानयानाद्यैः प्रलम्बावुच्छूनौ सन्तौ प्रधावति । यानेन हस्त्यश्वादिना यानं गमनम् । आदिग्रहणादन्यैरपि पादप्रलम्बितापादकैर्गजतुरगादिसदृशैः ।

तस्य लक्षणम् ।

भविष्यतः कुष्ठसमं तथा सादः श्लथाङ्गता ॥ ५ ॥



जानुजङ्घोरुकट्यंसहस्तपादाङ्गसन्धिषु।
कण्डूस्फुरणनिस्तोदभेदगौरवसुप्तताः ॥ ६ ॥
भूत्वा भूत्वा प्रणश्यन्ति मुहुराविर्भवन्ति च।

तस्य वातशोणितस्य भविष्यतो भाविनो लक्षणं प्रोक्तं कुष्ठेन तुल्यम्। कुष्ठस्य यत् प्राग्रूपमतिश्लक्ष्णखरस्पर्शेत्यादिना कुष्ठनिदानोक्तं तदस्यापि। न केवलमेतदेव यावत्तथा सादः श्लथाङ्गतेत्यादि च यावन्मुहुराविर्भवन्ति चेत्येदपि भविष्यतो लक्षणम्।

पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि ॥ ७ ॥
आखोरिव विषं क्रुद्धं कृत्स्नं देहं विधावति।

तद्वातशोणितं पादयोर्मूलमास्थाय तत्र पूर्वस्थितिं कृत्वा कदाचिद्धस्तयोरपि प्रतिष्ठां कृत्वा आखोर्मूषिकस्य सम्बन्धि यथा विषं क्रुद्धं देहैकदेशे पूर्वस्थितिं कृत्वाऽनन्तरं कृत्स्नं देहं विधावति विशेषेण प्रसरति।

तच्च वातशोणितमुत्तानगम्भीरभेदेन द्विधा स्यादित्याह—

त्वङ्मांसाश्रयमुत्तानं तत्पूर्वं जायते ततः ॥ ८ ॥
कालान्तरेण गम्भीरं सर्वान् धातूनभिद्रवत्।

त्वक् च मांसं च ते आश्रयो यस्य वातरक्तस्य तदेवम्भूतं तद्वातशोणितमुत्तानं पूर्वं प्राग् जायते। ततः पश्चात्कालान्तरेण पुनः सर्वान्धातूनपरानपि मेदःप्रभृतीनभिद्रवद्गम्भीरं जायते।

कण्ड्वादिसंयुतोत्ताने त्वक्ताम्रश्यावलोहिता ॥ ९ ॥
साऽऽयामा भृशदाहोषा,

उत्ताने वातशोणिते त्वक् कण्ड्वादिसंयुता भवति। कण्डूस्फुरणनिस्तोदादियुक्ता। तथा ताम्रश्यावलोहिता व्यामिश्रवर्णा भवति। तथा सहाऽऽयामेन वर्तत इति सायामा। तथा भृशदाहोषा अत्यर्थं दाहरुग्युक्ता।

गम्भीरेऽधिकपूर्वरुक्।
श्वयथुर्ग्रथितः पाकी वायुः सन्ध्यस्थिमज्जसु ॥ १० ॥
छिन्दन्निव चरत्यन्तर्वक्रीकुर्वंश्च वेगवान्।
करोति खञ्जं पङ्गुं वा शरीरे सर्वतश्चरन् ॥ ११ ॥

गम्भीरे वातशोणितेऽधिकपूर्वरुक् श्वयथुः स्यात्। अधिकं कृत्वा पूर्वा रुग्यस्य श्वयथोरसावधिकपूर्वरुक्। कुतोऽधिकपूर्वरुक्। प्रकृतत्वादुत्तानवातशोणितात्। तथा श्वयथुर्ग्रथितस्तथा पाकी पाकयुक्तः स्यात्। तथा तस्मिन् गम्भीरे वायुर्वेगवान् बलवान् शरीरे सर्वतश्चरन् गच्छन् वक्रीकुर्वन् स्वसामर्थ्यात्तदेव शरीरं खञ्जं पङ्गुं वा करोति तथाऽसौ सन्ध्यस्थिमज्जसु छिन्दन्निवान्तश्चरति।

वातेऽधिकेऽधिकं तत्र शूलस्फुरणतोदनम्।

**शोफस्य रौक्ष्यकृष्णत्वश्यावतावृद्धिहानयः ॥ १२ ॥**
**न्यङ्गुलिसन्धीनां सङ्कोचोऽङ्गग्रहोऽतिरुक् ।**
**नुपशयौ स्तम्भवेपथुसुप्तयः ॥ १३ ॥**

शोणिते वाताधिकेऽधिकं शूलस्फुरणतोदनं भवति । शूलं सन्तता रुक् । तोदनं तु व्युच्छिन्ना रुक् प्रतोदेनेव । तथा शोफस्य रौक्ष्यकृष्णत्वश्यावतावृद्धिहानयः स्युर्वातस्य चलस्वभावत्वात् । तथा धमनीनां सिराविशेषाणामङ्गुलिसन्धीनां च सङ्कोचः स्यात् । तथाङ्गग्रहोऽङ्गान्यवबद्धानि च स्युः । तथाऽतिरुक् शीतद्वेषानुपशयौ च भवतः । शीतद्वेषः शीतासहिष्णुत्वम् । तथा तेन च शीतेनोपशयः सुखानुबन्धो जायते, अनुपशयोऽसुखानुबन्धः । केनानुपशयः ? प्रकृतत्वाच्छीतद्वेषेणोष्णकामितयोष्णसेवया न भवति । तथा स्तम्भवेपथुसुप्तयः स्युः । स्तम्भ इव स्तम्भो देहस्तब्धता । वेपथुः कम्पनम् । देहसुप्तिरङ्गानामचैतन्यम् ।

वातोत्तरस्य लक्षणमुक्त्वा रक्तोत्तरं वक्तुमाह—

**रक्ते शोफोऽतिरुक्तोदस्ताम्रश्चिमिचिमायते ।**
**स्निग्धरूक्षैः शमं नैति कण्डूक्लेदसमन्वितः ॥ १४ ॥**

अधिक इत्यत्रानुवर्तते । रक्तेऽधिके शोफोऽतिरुक् तोद इति । वातेऽप्यधिके शोफः सरुग्भवति किन्तु रक्तेऽधिकेऽतिरुक्तोदः शोफः स्यादिति विशेषः । तथा ताम्रो वर्णेन भवति । चिमिचिमामिवाचरति चिमिचिमायते । तथा स्निग्धरूक्षैरसौ शोफः शमं नैति न याति कण्डूक्लेदयुक्तः सन् ।

**पित्ते विदाहः सम्मोहः स्वेदो मूर्छा मदः सतृट् ।**
**स्पर्शाक्षमत्वं रुग्रागः शोफपाको भृशोष्मता ॥ १५ ॥**

पित्ते पित्तानुविद्धे वातशोणिते विदाहादयः स्युः ।

**कफे स्तैमित्यगुरुतासुप्तिस्निग्धत्वशीतताः ।**
**कण्डूर्मन्दा च रुग् ,**

कफानुविद्धे वातशोणिते स्तैमित्यादयः स्युः ।

**द्वन्द्वसर्वलिङ्गं च सङ्करे ॥ १६ ॥**

द्वन्द्वशब्देन च वातपित्तकफरक्तानां द्वन्द्वानीति प्रायेण गृह्यन्ते । इह सर्वशब्देन च वातपित्तरक्तकफा गृह्यन्ते । द्वन्द्वं च सर्वं च द्वन्द्वसर्वे तयोर्लिङ्गं लक्षणं द्वन्द्वसर्वलिङ्गम् । सङ्करे व्यामिश्रत्वे सति द्वन्द्वसर्वलिङ्गं वातशोणितं भवति । कस्य सङ्करे ? प्रकृतत्वाद्वातपित्तरक्तकफानां द्वन्द्वसङ्करे द्वन्द्वलिङ्गं वातशोणितं भवति । सर्वसङ्करे सर्वेषां वातादीनां सङ्करे सर्वलिङ्गं वातशोणितं भवति ।

**एकदोषानुगं साध्यं नवं याप्यं द्विदोषजम् ।**
**त्रिदोषजं त्यजेत्स्रावि स्तब्धमर्बुदकारि च ॥ १७ ॥**

एकदोषानुगं वातशोणितं नवं साध्यं साधयितुं शक्यम् । द्विदोषोद्भवं याप्यं

यापनार्हम् । त्रिदोषजं वातशोणितं [illegible] असाध्यत्वा[illegible] । यच्च स्रावि यद्वातरक्तमर्बुदकारि च तच्चाऽसाध्यम् ।

**रक्तमार्गं निहन्त्याशु शाखासन्धिषु मा[illegible]तः ।**
**निविश्यान्योन्यमाचार्य वेदनाभिर्हरत्यसून् ॥ १८ ॥**

शाखासन्धिषु मारुतो निविश्य तत्र स्थितिं कृत्वा तथा रक्तमार्गमाशु शीघ्रं निहन्त्यनन्तरमन्योन्यमाचार्य प्रकृतत्वाद्रक्तं कर्तृ वातमाचार्य वातोऽपि रक्तम् ततो वेदनाभिर्वातरक्तोचिताभिः पीडाभिरसून् प्राणान्हरति ।

**वायौ पञ्चात्मके प्राणो रौक्ष्यव्यायामलङ्घनैः ।**
**अत्याहाराभिघाताध्ववेगोदीरणधारणैः ॥ १९ ॥**
**कुपितश्चक्षुरादीनामुपघातं प्रवर्तयेत् ।**
**पीनसार्दिततृट्कासश्वासादींश्चामयान्बहून् ॥ २० ॥**

पञ्चात्मके प्राणादिभेदात् पञ्चप्रकारे वाते सति प्राणो नाम वातो रौक्ष्यादिभिः कुपितश्चक्षुरादीनामुपघातं प्रवर्तयेद्विदधाति तथा पीनसादींश्च बहून् रोगान् कुर्यात् । आदिशब्देन हिध्मादयो गृह्यन्ते ।

**उदानः क्षवथूद्गारच्छर्दिनिद्राविधारणैः ।**
**गुरुभारातिरुदितहास्याद्यैर्विकृतो गदान् ॥ २१ ॥**
**कण्ठरोधमनोभ्रंशच्छर्द्यरोचकपीनसान् ।**
**कुर्याच्च गलगण्डादींस्तांस्तान् जत्रूर्ध्वसंश्रयान् ॥ २२ ॥**

उदानः क्षवथुविधारणादिभिर्विकृतः कुपितः कण्ठरोधादीन् गदान् कुर्यात् । चशब्दोऽत्र भिन्नक्रमः । गलगण्डादींश्च गदांस्तांस्ताननेकविधान् जत्रूर्ध्वसंश्रयान् कुर्यात् ।

**व्यानोऽतिगमनध्यानक्रीडाविषमचेष्टितैः ।**
**विरोधिरूक्षभीहर्षविषादाद्यैश्च दूषितः ॥ २३ ॥**
**पुंस्त्वोत्साहबलभ्रंशशोफचित्तोत्प्लवज्वरान् ।**
**सर्वाङ्गरोगनिस्तोदरोमहर्षाङ्गसुप्तताः ॥ २४ ॥**
**कुष्ठं विसर्पमन्यांश्च कुर्यात्सर्वाङ्गगान् गदान् ।**

व्यानोऽतिगमनादिभिर्विरोध्यादिभिश्च दूषितो दुष्टिं प्राप्तः पुंस्त्वोत्साहादीन् भ्रंशादीनपरानपि सर्वाङ्गगान् गदान् कुर्यात् ।

**समानो विषमाऽजीर्णशीतसङ्कीर्णभोजनैः ॥ २५ ॥**
**करोत्यकालशयनजागराद्यैश्च दूषितः ।**
**शूलगुल्मग्रहण्यादीन् पक्वाऽऽमाशयजान् गदान् ॥ २६ ॥**

समानो विषमादिभोजनादिभिरकालशयनादिभिश्च दूषितः शूलादीन् पक्वामाशयजान् गदान्करोति ।

[illegible] र्विवेगघात[illegible] [illegible]तैः ।
[illegible]नास[illegible] [illegible]वितैः ॥ २७ ॥
[illegible] कुरुते रोगा[illegible] [illegible]च्छ्रान् पक्काशयाश्रयान् ।
[illegible]प्रदोषाऽर्शोगुदभ्रंशादिकान्बहून् ॥ २८ ॥

[illegible]क्षादिभिरतिसेवितैर्वेगघातादिभिश्चातिसेवितैः कुपितः कृच्छ्रान्
दार[illegible] [illegible]ज[illegible]काशयाश्रयान् मूत्रशुक्रप्रदोषादीन् बहून् गदान् कुर्यात् ।

सर्वं च मारुतं सामं तन्द्रास्तैमित्यगौरवैः ।
स्निग्धत्वारोचकालस्यशैत्यशोफाग्निहानिभिः ॥ २९ ॥
कटुरूक्षाभिलाषेण तद्विधोपशयेन च ।
शुद्धं विद्यान्निरामं तु तन्द्रादीनां विपर्ययात् ॥ ३० ॥

सर्वमपि मारुतं तन्द्रादिभिर्लक्षणैर्युतं सामं विद्यात् । तन्द्रादिलक्षणविपर्ययेण तु निरामं जानीयात् ।

वायोरावरणं चातो बहुभेदं प्रवक्ष्यते ।

अतः सामादिलक्षणादनन्तरं वातस्यावरणं बहुभेदमनेकप्रकारं प्रकर्षेण वक्ष्यते । किल नास्याऽऽम एवावरणमपि त्वन्यदप्यस्तीति द्योतयति ।

लिङ्गं पित्तावृते दाहस्तृष्णा शूलं भ्रमस्तमः ॥ ३१ ॥
कटुकोष्णाम्ललवणैर्विदाहः शीतकामता ।

पित्तेनावृते मरुति दाहादिकं लिङ्गम् ।

शैत्यगौरवशूलानि कट्वाद्युपशयोऽधिकम् ॥ ३२ ॥
लङ्घनायासरूक्षोष्णकामता च कफावृते ।

कफावृते वायौ शैत्यादिकं लिङ्गं लङ्घनादिकामता च ।

रक्तावृते सदाहार्तिस्त्वङ्मांसान्तरजा भृशम् ॥ ३३ ॥
भवेच्च रागी श्वयथुर्जायन्ते मण्डलानि च ।

रक्तावृते पवनेऽर्तिः पीडा भृशं त्वङ्मांसान्तरजा दाहयुक्ता स्यात् । रागवांश्च श्वयथुः स्यात्तथा मण्डलानि च जायन्ते ।

मांसेन कठिनः शोफो विवर्णः पिटिकास्तथा ॥ ३४ ॥
हर्षः पिपीलिकानां च सञ्चार इव जायते ।

मांसेनावृते वायौ कठिनो विवर्णश्च शोफस्तथा पिटिकाः स्युः । हर्षशब्दार्थमाह–पिपीलिकानां गात्रेषु सञ्चार इव जायते ।

चलः स्निग्धो मृदुः शीतः शोफो गात्रेष्वरोचकः ॥ ३५ ॥
आढ्यवात इति ज्ञेयः स कृच्छ्रो मेदसाऽऽवृते ।

मेदसा आवृते वायावङ्गेषु शोफश्चलस्तथा स्निग्धस्तथा शीतो मृदुश्च स्यात् तथाऽरोचकः । स एवंविध आढ्यवात इति वेद्यः । स च कृच्छ्रः कृच्छ्रसाध्यः ।

स्पर्शमस्थ्यावृतेऽत्युष्णं ... तं चाभि... ...त् । ...था स्नावि
सूच्येव तुद्यतेऽत्यर्थमङ्गयम् ।

अस्थ्यावृते समीरणे स्पर्श ... ...र्शनं चाभिन... तथाङ्गमतिशयेन सूच्येव तुद्यते । तथा सीदति शूल्यते च ।

मज्जावृते विनमनं जृम्भणं परिवेष्टनम् ॥ ३७ ॥
शूलं च पीड्यमानेन पाणिभ्यां लभते सुखम् ।

मज्जावृते समीरे विनमनादिकं स्यात् । विनमनमङ्गानाम् । तथा पाणिभ्यां पीड्यमानेन च प्रकृतत्वादङ्गेन सुखं लभते ।

शुक्रावृतेऽतिवेगो वा न वा निष्फलताऽपि वा ॥ ३८ ॥

शुक्रावृते प्रभञ्जनेऽतिवेगो वा प्रकृतत्वाच्छुक्रस्य न वा वेगो निष्फलता तस्य स्यात् ।

भुक्ते कुक्षौ रुजा जीर्णे शाम्यत्यन्नावृतेऽनिले ।

अन्नावृते वाते भुक्ते सति रुजा कुक्षौ भवति । जीर्णेऽन्ने सति रुजा शाम्यति ।

मूत्राऽप्रवृत्तिराध्मानं बस्तौ मूत्रावृते भवेत् ॥ ३९ ॥

मूत्रावृते वायौ मूत्रस्याप्रवृत्तिराध्मानं च बस्तेः स्यात् ।

विडावृते विबन्धोऽधः स्वस्थाने परिकृन्तति ।
व्रजत्याशु जरां स्नेहो भुक्ते चानह्यते नरः ॥ ४० ॥
शकृत्पीडितमन्नेन दुःखं शुष्कं चिरात्सृजेत् ।

विडावृते मातरिश्वनि स्वे स्थानेऽपानाख्येऽधोविबन्धो जातविबन्धत्वात् परिकृन्तति । स्नेहश्चाशु जरां याति । भुक्ते च सति नर आनह्यत आध्माप्यते । शकृदन्नेन पीडितं चिरेण शुष्कं दुःखं कृच्छ्रेण सृजेत् ।

सर्वधात्वावृते वायौ श्रोणिवङ्क्षणपृष्ठरुक् ॥ ४१ ॥
विलोमो मारुतोऽस्वस्थं हृदयं पीड्यतेऽति च ।

सर्वधात्वावृतेऽनिले श्रोण्यादिरुक् स्यात् । तथा पवनो विगुणो भवति । हृदयं च व्याकुलम्, अतिपीड्यते च ।

भ्रमो मूर्छा रुजा दाहः पित्तेन प्राण आवृते ॥ ४२ ॥
विदग्धेऽन्ने च वमनम्,

प्राणे पित्तेनावृते भ्रमाद्याः स्युः । अन्ने च विदाहावस्थां प्राप्ते सति वमनं स्यात्

उदानेऽपि भ्रमादयः ।
दाहोऽन्तरूर्जाभ्रंशश्च,

उदाने च पित्तेनावृते सति भ्रमाद्याः पूर्वोक्ताः स्युः । तथा अन्तर्दाह ऊर्जाया बलस्य च विनाशः ।

दाहो व्याने च सर्वगः ॥ ४३ ॥

दनः ।

ः क्रमादयश्च स्युः ।

...दवाहित... ...ऽ...ः सतृट् ॥ ४४ ॥

शनैश्चोपश्चा...ऽ... ...हतिरुपघातोऽतिस्वेदादयश्च स्युः ।

...हृत्...दपाने तु मले हारिद्रवर्णता ।

...जोऽतिवृद्धिस्तापश्च योनिमेहनपायुषु ॥ ४५ ॥

अपाने पुनः पित्तेनावृते सति मले पुरीषादौ हारिद्रवर्णता स्यात् । योन्यादिषु रुजः पीडाया अतिवृद्धिस्तापश्च स्यात् ।

श्लेष्मणा त्वावृते प्राणे सादस्तन्द्राऽरुचिर्वमिः ।

ष्ठीवनक्षवथूद्गारनिःश्वासोच्छ्वाससङ्ग्रहाः ॥ ४६ ॥

प्राणे च श्लेष्मावृते सादादयः स्युः ।

उदाने गुरुगात्रत्वमरुचिर्वाक्स्वरग्रहः ।

बलवर्णप्रणाशश्च,

उदाने च श्लेष्मावृते गुरुगात्रत्वादयः ।

व्याने पर्वास्थिवाग्ग्रहः ॥ ४७ ॥

गुरुताऽङ्गेषु सर्वेषु स्खलितं च गतौ भृशम् ।

व्याने कफावृते पर्वास्थिवाग्ग्रहस्तथाऽङ्गेषु गौरवं गतौ च स्खलनं स्यात् ।

समानेऽतिहिमाङ्गत्वमस्वेदो मन्दवह्निता ॥ ४८ ॥

समाने कफावृतेऽतिशीताङ्गत्वमस्वेदो मन्दाग्नित्वं च स्यात् ।

अपाने सकफं मूत्रशकृतः स्यात्प्रवर्त्तनम् ।

अपाने कफावृते मूत्रशकृतः प्रवर्तनं सकफं स्यात् ।

इति द्वाविंशतिविधं वायोरावरणं विदुः ॥ ४९ ॥

इत्यनेन प्रकारेण वायोरावरणं द्वाविंशतिप्रकारं जानन्ति तन्त्रकृत इति शेषः ।

प्राणादयस्तथाऽन्योन्यमावृणवन्ति यथाक्रमम् ।

सर्वेऽपि विंशतिविधं विद्यादावरणं च तत् ॥ ५० ॥

प्राणादयः पञ्च वायवोऽन्योन्यं परस्परमावृणवन्ति यथाक्रमं यथासङ्ख्यं तथा तेनोक्तेन प्रकारेण । यथा पित्तकफाभ्यां प्राणादय आवृतास्तथा प्राणादयोऽन्योन्यमावृणवन्तीति तथाशब्दस्यार्थः । तत्र यथा प्राणेनोदानादयश्चत्वार आव्रियन्ते । व्यानादिभिश्च त्रिभिरुदानः । तथा व्यानेन समानापानौ । तथा समानापानाभ्यां व्यानः । समानेनापानः । अपानेनाऽपि समान आव्रियत इत्येकद्वित्र...दिक्रमेणाप्...वमावरणं निरूप्यम् । एवं च सर्वेऽपि परस्परमावृणवन्ति । तच्चावरणं विंशति...धं विद्यात् ।

[illegible] चाभि[illegible] [illegible]कमत् । [illegible]या स्त्रावि

अथाऽस्यावरणे[illegible] लिङ्गा[illegible]

**निःश्वासोच्छ्वाससंरोधः [illegible]र्न [illegible]चाभिन[illegible]तिः ।**

**हृद्रोगो मुखशोषश्च [illegible] च । [illegible]न् ॥ १[illegible] ॥**

प्राणेनोदान आवृते निःश्वासोच्छ्वाससं[illegible] [illegible]था रक्तमार्गभा[illegible]

**उदानेनावृते प्राणे वर्णौजोबलसंक्षयः ।**

उदानेन प्राण आवृते सति वर्णौजोबलसंक्षयः स्यात् । ननु [illegible] प्राणादीनामावरणं युक्तम् । परस्परं तु प्राणादीनां यदावरणं तदमूर्तत्वादनुपपन्नमिव मन्यामहे ? ऊमः— द्वयोर्वातयोरन्योन्यमुपसर्पतोर्बलवता दुर्बलस्याभिघातेन गतिभङ्गात्स तेनावृतमार्ग इत्युच्यते । तस्माद्वातानामपि परस्परमावरणं युक्तमेव ।

**दिशाऽनया च विभजेत्सर्वमावरणं भिषक् ॥ ५२ ॥**

**स्थानान्यवेक्ष्य वातानां वृद्धिं हानिं च कर्मणाम् ।**

अनया दिशा दिङ्मात्रप्रदर्शनेन सर्वमावरणं विभजेद्भिषक् । इयं चात्र दिक् । उदानेनावृतेऽपाने छर्दिश्वासकासादयः स्युस्तथाल्पोऽग्निरतिसारश्च । उदानेऽपानेनावृते बस्त्याध्मानोदावर्तगुल्माल्पाग्निपरिकर्तिताः स्युः । अपाने व्यानेनावृते विण्मूत्ररेतसामतिप्रवृत्तिः । व्याने समानेनावृते मूर्छातन्द्राप्रलापाङ्गसादवह्न्योजोबलक्षयः । व्यान उदानेनावृते च श्यावास्यता स्तब्धताऽल्पाग्निता स्वेदश्चेष्टाहानिर्निमीलनमिति । एवमन्यदप्यावरणं भिषक् स्वमनीषया शास्त्रसंस्कारवत्या विभजेत् । ग्रन्थकृता तु ग्रन्थगौरवभयान्नोक्तम् । कथं विभजेदित्यत्र युक्तिं दर्शयति । स्थानानीत्यादि । स्थानानि पक्वाशयादीनि दोषभेदीयोक्तानि वातानां प्राणादीनामवेक्ष्य तथा वृद्धिमावरकवायुसम्बन्धिनां वैकृतकर्मणामवेक्ष्य ज्ञात्वा तथा आवार्यमरुतां हानिमवेक्ष्य ज्ञात्वा सर्वमावरणमनुक्तमपि विभजेत् । यथोच्छ्वासोच्छ्वासचेष्टादीनि कर्माणि प्राणादिसम्बन्धीनि यदा हीनानि दृश्यन्ते, उदानादीनां कर्माणि वाक्प्रवृत्त्यादीनि वृद्धानि तदैवं ज्ञातव्यम् । यथा प्राण उदानादीनामेकेन द्वाभ्यां त्रिभिश्चतुर्भिर्वा आवृत इति । एवमुदानादिष्वपि प्राणादिभिरावरणं विभागीकार्यम् ।

अधुना अस्या आवृतेरसङ्ख्येयत्वमपि दर्शयन्नाह—

**प्राणादीनां च पञ्चानां मिश्रमावरणं मिथः ॥ ५३ ॥**

**पित्तादिभिर्द्वादशभिर्मिश्राणां मिश्रितैश्च तैः ।**

प्राणादीनां पञ्चानां वायूनां परस्परमावार्यावरकत्वेन स्थितानां मिश्रं द्वयेन त्रयेण चतुष्टयेन च मिथः परस्परमावरणमवेक्ष्य यात्यावृतिरसङ्ख्यतामिति सम्बन्धः । तथा पित्तादिभिर्द्वादशभिर्धात्ववसानैर्मिश्राणां प्राणादीनां मिश्रं मिथ आवरणमवेक्ष्य यात्यावृतिरसङ्ख्यतामिति योज्यम् । अत्र चैषामुदाहरणदिग्दर्श्यते । प्राणेन द्वादशविधेन पित्तादिभिर्मिश्रितत्वाच्चतुर्णामुदानादीनामावरणं विभजेत् । तथा चतुर्भिरुदानादिभिः पित्तस्यावरणं प्रत्येकं द्वादशविधैर्द्वादशविधस्यैकस्य प्राण-

...द्यावरणमोऽ...
...यात्यावृतिरसंख्यतामिति...

...नेकधा ॥ ५४ ॥
...रसङ्ख्यताम् ।
...दवहित ... क्षणोदयात् ॥ ५५ ॥
शनैश्चोपशय... ...पि मुहुर्मुहुः ।

...द्वत् । यथा प्राणादीनां पित्तादिभिर्द्वादशभिर्मिश्राणां मिश्रमावरणं ...श्रैश्च तैः प्राणादिभिर्यथामिश्रमावरणं मिथस्तथैव मिश्रैः संयुक्तैरेतैः ...केस्तैः प्राणादीनां मिश्रमावरणं मिथस्तथामिश्रैः पित्तादिभिर्ये प्राणा...तास्तैस्तथाभूतैः प्राणादीनामावरणम् । एवमनेकधा मिश्रणाभिर्बहुभिः ...त्यावृतिरसङ्ख्यताम् । तथा तारतम्यविकल्पाच्च प्राणादीनामावृत्तिर...याति सङ्ख्यामतिक्रम्य गच्छति । तामावृतिं तेषां प्राणादीनां गूढां ...व्यवहितस्तज्ज्ञानाय तत्परः सन् लक्षयेज्जानीयात् । कथम् ? यथास्वं ...यात् । तेषां प्राणादीनां यथायथं लक्षणोदयादात्मीयाल्लिङ्गोद्भवाच्छनैः...टित्येव तथा मुहुर्मुहुः क्षणे क्षणे लक्षयेन्न तु सकृदेव यथास्वं प्राणादीनां ...याज्जानीयादिति । न केवलं केवलायथास्वं लक्षणोदयात्प्राणादीनामावृतिं ...वदुपशयादप्येषां गूढामप्यावृतिमन्तर्लक्षयेत् । तत्र प्राणादीनामेकैकेनान्यो...द्विंशतिर्भेदा उक्ता एव भवन्ति । एवमेकेन द्वयोर्द्वाभ्यां चैकस्यावरणे...दाः । प्राणस्योदानव्यानाभ्यामन्योन्यावरणाद् द्वौ भेदौ । एवमुदानसमा...च सहान्योन्यावरणपराणि पञ्च द्विकादीनि । प्राणस्य द्वादश भेदा...। उदानस्य षट् । व्यानस्य द्वौ । प्राणस्योदानादिभिश्चतुर्भिर्द्वौ वान्यो...णाद्भेदौ भवतः । तथा प्राणादीनां पित्तादिभिर्द्वादशभिरावृतत्वाद् द्वादश...ः । अन्योन्यमिश्रणाच्चत्वारि शतानि विंशत्युत्तराणि भवन्ति । एवमन्यद...णं निरूप्यम् ।

विशेषाज्जीवितं प्राण उदानो बलमुच्यते ॥ ५६ ॥
स्यात्तयोः पीडनाद्धानिरायुषश्च बलस्य च ।

...णादयः सर्व एव वाता जीवितं विशेषेण तु प्राणाख्यो वायुर्जीवितमुच्यते । ...नाख्यो वायुर्विशेषेण बलमुच्यते । यतश्चैवमतस्तयोः प्राणोदानयोः पीड...णाद्यथस्वमायुषो बलस्य च हानिर्भवेत् । तस्मादेतौ प्राणोदानाख्यौ पवना...दिना यत्नेन भिषजा रक्ष्यौ । तथा च वक्ष्यति—'प्राणो रक्ष्यश्चतुर्भ्योऽपि ...देह...स्थितिरिति' ।

आ...ता वीर्यवाऽज्ञाता ज्ञाता वा वत्सरं स्थिताः ॥ ५७ ॥

प्रयत्ने ... [illegible] ... भवेत् । यथा स्नावि

वातादीनामन्यतमेनो [illegible]

त्वनाऽपि दुःसाध्याः कृच्छ्रसा [illegible] ततः ।

वत्सम्यङ्निश्चयं गता वत्सरं स्थिता.. । १८ ।

भवेयुः । ततो वाता आवृतेः प्रयत्नेन र [illegible] रक्तमार्ग [illegible]

विद्रधिप्लीहहृद्रोगगुल्मा [illegible]

भवन्त्युपद्रवास्तेषामावृतानामुपेक्षित [illegible]

इति श्रीसिंहगुप्तसूनुवाग्भटविरचिताया [illegible]

हृदयसंहितायां तृतीयं निदानस्थानं

समाप्तम् ।

तेषां वायूनामन्यतमेनावृतानामुपेक्षणादचिकित्सनाद्विद्रध्य [illegible] जायन्ते । तस्मात्तदुपक्रमे यतितव्यमिति ।

इति श्रीमृगाङ्कदत्तपुत्रश्रीमदरुणदत्तविरचितायामष्टाङ्गहृदयट [illegible] सुन्दराख्यायां निदानस्थाने षोडशोऽध्यायः ॥ १६ ॥

समाप्तमिदं निदानस्थानम् ।

